# समर्पणम्

सन्ततमतिपटुपण्डित-शेखरमणडलविशेषमणिहारम् ।
भूमण्डलमणिभूता सन्दधती 'तरुवनी' नगरी ॥ १ ॥

तत्र परमपदपूज्या श्रीगुरुवर्या **उपेन्द्रशर्माणः ।**
कठिनव्याकृतिशास्त्रे मर्मज्ञा न्यायशास्त्रे च ॥ २ ॥

अधुना दरभङ्गाया राजविद्यालये निजपाण्डित्यैः ।
अन्तेवासिसमेतान् विद्वद्वृन्दान् प्रमोदयन्त्येते ॥ ३

यदुन्नतयशः कथा निखिलमैथिलानां मनः
प्रफुल्लयति सर्वतः सदसि वाक्पटुत्वोद्भवा ।
पुराणनिगमागमैर्विमलशेमुषीशालिनो
जयन्ति विलसन्ति ते सुकृतकेतुसञ्चालिनः ॥ ४ ॥

उपेन्द्रपादाब्जकृपाकटाक्षैर्विचित्य नानागमकाननेभ्यः ।
उपेन्द्रकञ्जाभकरेषु रम्यं समर्पयेऽहं प्रथमं प्रसूनम् ॥ ५ ॥

रामदेव झा

# भूमिका

विद्यावाचस्पति पं० श्री परमानन्द शास्त्री
( प्रिंसिपल–राधाकृष्ण संस्कृत कालेज, खुर्जा । )

अये ! विद्यावारिधिनिमज्जननिर्मलीकृतान्तःकरणाः तत्रभवन्तो विद्वांसः ! विदितवेदितव्या एव भवन्तो यत् कस्यापि न चेतो रञ्जयति कविसूक्तिः । तदुक्तं भामहे—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिञ्च साधुकाव्यनिबन्धनम् ॥ इति ।

यस्य खलु मोक्षसाधनता वरीवर्त्ति तत्र किं वक्तव्यमन्यदुपयोगित्वं, मोक्षादालिश्च ब्रह्मज्ञानादेवेत्यविवादम् । काव्यस्य ब्रह्मरूपत्वम्—

यदेतद्वाङ्मयं विश्वमर्थमूर्त्या विवर्तते ।
सोऽस्मि काव्यपुमानम्ब पादौ वन्देय तावकौ ॥ इति ।

स्पष्टमेव जगतः काव्यविवर्त्तत्वं प्रतिपादयन् प्रत्याययति । एतावता जगतः काव्यविवर्त्तत्वप्राप्तावपि काव्यस्य ब्रह्मरूपत्वं कथमिति तु नाशङ्कनीयम् । जन्माद्यस्य यतः ( ब्र० सू० अ० १ पा० १ सू० २ ) इति सूत्रेण जगतः कारणस्यैव ब्रह्मत्वप्रतिपादनात् । सिद्धे चास्य ब्रह्मत्वे—

न स शब्दो न तद्वाच्यं न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गम्............ ... ...........॥

इत्यपि साधु सङ्गच्छते ।

किन्तत्काव्यमिति प्रस्तुतायामस्यां टीकायामेव विराजत इति पुनरत्र प्रदर्शनं पुनरुक्ततामेवापद्येत । तदेतत्काव्यं दृश्यश्रव्यत्वभेदेन द्विविधम् । तदुक्त दर्पणे—

दृश्यश्रव्यत्वभेदेन पुन काव्य द्विधा मतम् । इति ।

दृश्यकाव्यमेव रूपकादिशब्देन व्यवह्रियते । रूपकभेदश्च नाटकं तदुक्तं तत्रैव—

दृश्य तत्राभिनेय स्यात्तद्रूपारोपात्तु रूपकम् ।
नाटकमथप्रकरणं भाणव्यायोगसमवकारडिमाः । इति ।

तदेवम्—अदोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वित कविः कुर्वन् कीर्तिं प्रीतिञ्च विन्दति ।

इति पद्यमनुस्मरता कविमूर्द्धन्यभट्टनारायणेन सर्वलक्षणोपेतं वेणीसंहारं नाम नाटकं निरमायि । तत्र किं वर्णयामोऽस्य नाटकस्य वैशिष्ट्यम्, अस्य कवेर्वैदुष्यञ्च काव्यप्रकाशकृता, दर्पणकृता च स्व–स्व–ग्रन्थेऽत्रत्याः कविता निवेशयतैव प्रकाशितत्वात् । दर्पणकृता तु—षष्ठपरिच्छेदे बहून्युदाहरणानि प्रदर्शयताऽस्यैव नाटकस्य नाटकमौलिता काम प्रकटीकृता । यद्यपि शृङ्गाररसनाटकस्य प्रणेतारो बहवः सन्ति, परं वीररसनाटकस्य प्रणेतारो विरला एव दृश्यन्ते । यद्यप्यन्यानि हनुमन्नाटकादीनि वीररसाङ्गिनाटकानि समुल्लसन्ति तथाप्येतस्मिन्नश्वत्थामाङ्के वीररौद्ररसयो सन्निवेश काव्यरसिकस्य कस्य न चेतस्सन्दोलयति ।

दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।

इति पद्यार्थं स्मारं स्मारं कविवरभट्टनारायणेन चतुर्थेऽङ्के प्रदर्शिता वृषसेनवधवर्णनशैली तु नैव कुत्राप्यन्यत्र दृग्गोचरीभवति ।

'कार्यो निर्वहणेऽद्भुत' इति वचनानुकूलेन षष्ठेऽङ्के राक्षससमागमेनाद्भुतरसवर्णनं कीदृक् चमत्कारीति जानन्त्येव विद्वांसः ।

कवेरस्य विस्तृतविषयस्यापि मितार्थतया प्रतिपादनशक्तौ तु महाभारतीयभीष्मादिपर्वचतुष्टयस्य कथाया' सन्निवेश एव परमं प्रमाणम् ।

सर्वाङ्गसुन्दरेऽस्मिन्नाटके व्याख्याविरचने प्राप्तपाण्डित्यप्रकर्षः को नाम न प्रवर्तेत स्वस्यामोदाय, अध्येतॄणामुपकाराय च । यद्यपि साम्प्रतमत्र टीकात्रयमुपलभ्यते । एका वाम्बे मुद्राणालये प्रकाशिता, द्वितीया कलिकातामुद्रणालये, तृतीया वाराणस्याम् । परं ताः कथं न छात्रान् छन्तोषयन्तीति विदितमेव भवद्भिर्विद्वद्भिः । क्वापि टिप्पणीपदेनैव व्यवह्रियते । कस्यामपि यस्य कस्यचित् पदस्य व्याख्यानमेवास्ति । क्वापि सुलभस्थले विस्तृतापि मर्मस्थले मौनमेवावलम्बिता । अथवाऽस्पष्टशब्देनैव संवलितेति तासु क्वापि ग्रन्थस्य निगूढभाव प्रकटयन्ती परीक्षापारावारपारं छात्रान्नेतुं न समर्थेति निःशङ्कं शक्यते वक्तुम् । अलङ्कारालङ्कृतस्वाभावोऽप्यासु टीकासु महती त्रुटिरित्यतः प्रकृतटीकाकार. सर्वान् विपचान् सरलतया सन्निवेशयन् ग्रन्थस्याभिप्रायं मृदुशब्देन समुपाययन् ग्रन्थस्य काठिन्यं सुदूरं समुदक्षिपदिति मन्यामहे वयम् । अपरा चात्र प्रकाशनाम्नी हिन्दीटीकाऽपि विलसति । यस्याः सन्निवेशेन सुकोमलमतयोऽपि छात्रा नेषदप्यर्थावगमक्लेशमनुभविष्यन्ति ।

कविकुलमूर्द्धन्योऽयं कस्मिन् समये कं देशं कं वंशं स्वजनुषा भूषयाञ्चकारेत्यस्मिन् विषये दृढतरप्रमाणमानासाद्य विषीदन्ति मे मनांसि ।

केचन मन्यन्ते—द्विजोत्तमोऽयं गुप्तराज्यकाले (४००) चतुर्थख्रिष्टीयशताब्द्यां प्रादुर्बभूव । केचित्तु काव्यालङ्कारसूत्रस्य काशिकायाश्च प्रणेतुर्भट्टवामनात्प्राचीनोऽयं (५०० ई०) पञ्चम्यां वा (६०० ई०) षष्ठ्या वा ख्रिष्टाब्द्यां जननमासादयामास । भट्टवामनस्य समयश्च (७०० ई०) सप्तमख्रिष्टाब्द्या अन्तः वेल्वकरमहाशयेन निर्णीत. भट्टवामनात्प्राचीनो भट्टनारायण इत्यत्र भट्टवामनस्य ग्रन्थे वेणीसंहारपद्यानामुल्लेख एव प्रमाणमिति ।

विद्यावाचस्पति'—
पण्डित परमानन्द शास्त्री

## अत्र किञ्चिद्वक्तव्यम्

### आचार्य श्री ब्रह्मदत्त द्विवेदी

( प्रिंसिपल—रामनिरञ्जनदासमुरारकासंस्कृतकालेज, पटना सिटी )

न्याय-व्याकरणाचार्य पं० रामदेवझा महाशयैर्विनिर्मितया प्रबोधिन्याख्यव्याख्यया संवलितं वेणीसंहारनाटकं परीक्षणस्पृशा दृशा निरीक्ष्य परममन्दानन्दसन्दोहमविन्दम्।

अन्वय-प्रतिशब्द-कोश-भावार्थ-छन्दोऽलङ्कारप्रभृतिविविधविषयाणां समीचीनतया सङ्कलनेन रुचिररचनाञ्चितमनोहरकलेवरमिदं पुस्तकं विपश्चितांश्चिरं प्रचुरमन्तःसन्तोषमाधातुमीष्टे। विशेषतोऽश्रमं परीक्षाकान्तारमन्तेवसतः प्रविविक्षून्, अविच्छिन्नमुपकरिष्यतीति दृढं विश्वसन्नभ्युदीयमानाय टीकाकर्त्रे परश्शतान् धन्यवादान् वितरति। इत्यलं पल्लवितेन।

## निवेदनम्

अयि विद्याविनोदविद्योतितमानसा मान्या विद्वज्जना सुहृज्जनाश्च! छात्रक्लेशदर्शनेन दोदूयमानचेतास्तान परीक्षाब्धि पारयितुकामोऽस्य नाटकस्य व्याख्याविरचने पं० श्रीदेवनारायणझामहाशयेन प्रोत्साहितः, पं० श्रीबालकृष्णझामहोदयस्य, व्याकरणाचार्य पं० श्रीरामचन्द्रझामहोदयानाञ्च साहाय्येन सम्पाद्य प्रबोधिनीव्याख्यासंवलितमिदं वेणीसंहारनाटकं भवतां समक्षं समुपाययन्, त्रितयमहानुभावेभ्यः, प्रकृतग्रन्थप्रकाशनेन छात्राणां विदुषां च महान्तमुपकारं विरचयते चौखम्वासंस्कृतकार्यालयाध्यक्षाय, श्रेष्ठिवरश्रीजयकृष्णदासगुप्तमहोदयाय च धन्यवादान् समर्पयन्, पुरुषसाधारणबुद्ध्या, समुपस्थितानत्रत्यदोषान् स्वमहिम्ना परिमार्जयितुं समभ्यर्थयेऽहं तत्रभवतः श्रीमत इति।

टीकाकारः

# कथा-सार

## लेखकः—पण्डित रामचन्द्र झा व्याकरणाचार्य

### प्रथम अंक

नान्दीपाठके बाद महाभारतकी कथाके आधारपर कवि भट्टनारायण प्रणीत प्रस्तुत नाटकके अभिनयकी प्रस्तावना करते समय नेपथ्यकी ओरसे सहसा सुनाई पड़ा कि—'पाण्डवोंके दूत बनकर व्यासादि महर्षियोंके साथ भगवान कृष्णचन्द्र दुर्योधनके यहा कौरव-पाण्डवोंमें सन्धि करानेके लिये जा रहे हैं'–यह सुन सूत्रधार प्रसन्न होकर कहने लगे–'भगवानका यह सधि-प्रयास सफल हो और पाण्डव लोग भगवान् कृष्णचन्द्रके साथ प्रसन्न रहें तथा कौरव भी अपने कर्मचारियोंके साथ स्वस्थ रहें। इसी बीच नेपथ्यसे ललकारकर-'अरे नीच! यह तू क्या बक रहा है? जिन कौरवोंने लाक्षानिर्मित महल, विषमिश्रित भोजन तथा कपट द्यूत (जूआ) रचकर हम लोगोंके प्राण और सपत्तिके अपहरणकी चेष्टा करके महारानी द्रौपदीके वस्त्र और केशोंको खींचा है, उसी दुराचारी कौरवोंका स्वस्थताभिलाषी हो रहा है? रे 'दुष्ट·····' ऐसा कहते हुए सहदेवके साथ गदाधारी क्रोधान्त भीम रगमच पर उतर आये और सूत्रधार भयका अभिनय करता हुआ रगमचसे भाग गया। तदनन्तर सहदेव उत्तेजित भीमको शान्त करने लगे। परन्तु भीम शान्तके बदले और भी आवेशमें आकर भगवान् कृष्णचन्द्रद्वारा प्रस्तुत सधिको न माननेके लिये उद्यत होकर अकेले ही युद्धमें दुर्योधनादिको अपनी गदासे विचूर्णकर देनेका अभिनय करते हुए आगे (शस्त्रागारकी ओर) बढ़ चले और कहने लगे—वत्स, सहदेव! तुम भी जाकर बड़े भाई धर्मराजकी आज्ञाका पालन करो और मेरी बात उनसे कह दो। मैं अभी सामनेके इस शस्त्रागारसे कौरवोंको मारनेके लिये विविध शस्त्रोंसे सुसज्जित होता हू। इतनेमें सहदेव कह उठे—आर्य! (आप इतने क्रोधाध न होइये) यह शस्त्रागार नहीं, यह तो द्रौपदीका शयनागार है। इतना सुनते ही भीमका क्रोध कुछ शान्त होगया और वे सहदेवका हाथ पकडकर कहने लगे 'चलो अनुज! सग्रामसे पहिले द्रौपदीसे एक बार मिलना ही है और बडे भाई कौरवोंके साथ सधिकी इच्छा करके मुझे जो जो कष्ट दे रहे हैं उसे जरा तुम भी सुनलो। अभी अभी तुमने कहा था कि 'महाराजने इन्द्रप्रस्थ, वृकप्रस्थ, जयन्त, वारणावत और यथेच्छ कोई पाचवा ग्राम सिर्फ लेकर कौरवोंसे सधिव्यवस्थापित करनेके लिये भगवान वासुदेवको दुर्योधनके यहा भेजा है। इसमें कुछ रहस्य है?'—कुछ भी नहीं। मैं तो समझता हू कि महाराजका जो अत्युग्र पराक्रमसम्पन्न क्षत्रियोचित तेज था, वह द्यूतक्रीडासे उसी रोज खो गया है। इत्यादि कहते २ गत घटनाओंका स्मरणकर भीमकी

अन्तर्वेदना पुनः भभक उठी, वे तमककर मेघनाद करते हुए पुनः कहने लगे—'क्या मैं संग्राममें कौरवोंका मर्दन न कर सकूँगा ? क्या मैं अपनी प्रतिज्ञाके अनुसार दुःशासनका रक्तपान न कर सकूँगा ? और क्या मैं अपनी प्रचंड गदासे दुर्योधनके जांघोंको चूर्ण २ न कर डालूंगा ? जाओ सहदेव ! महाराजसे कह दो मैं इस सन्धिको न मानूंगा और कदापि न मानूंगा। अगर महाराजको अपने गोत्रवध (दुर्योधनादिवध) से लोकमें निन्दित और लज्जित होनेका भय है तो होवें। मेरी लज्जा और संमान तो भरी सभा में द्रौपदीके वस्त्र और केशापकर्षणके समय ही भस्मसात हो चुके हैं। इसी बीच भानुमती (दुर्योधन की पत्नी) की तीखी बातोंसे बींधी हुई अत एव उद्विग्न द्रौपदी भीमके समक्ष उपस्थित हो गयीं। द्रौपदीके उतरे हुए चेहरेका कारण पूछने पर भीमको मालूम हो गया कि अभी २ भानुमतीने कहा था कि 'अयि द्रौपदी ! सन्धि-प्रस्ताव तो आरम्भ हो गया है अब अपने बिखरे हुए केशोंको क्यों नहीं सम्हाल लेती। इस समाचारसे भीमका क्रोध इसलिये अधिक नहीं बढ़ा कि उन्हें यह भी उसी समय मालूम हो गया कि चेटीने भानुमतीको उनका सटीक उत्तर दे दिया था कि 'अयि भानुमती आपके केश जब तक विमुक्त हुनों होंगे (आप विधवा नहीं होंगी) तब तक मेरी महारानीके केश कैसे बधेंगे ?' इतनेमें युद्धस्थलसे नगाडेकी आवाज आने लगी और कंचुकी द्वारा मालूम हो गया कि सन्धि-प्रस्ताव भग्न हो गया तथा दुर्योधन भगवान कृष्णको बन्दी बनानेका आदेश दे दिया है। इसीसे अपने (पाण्डवोंके) शिविरमें खलबली मचगयी है। यह सुन भीम तत्क्षण ही द्रौपदीको ढाढस देकर शीघ्रतासे समरके लिये चल पडे।

प्रथम अङ्क समाप्त



## द्वितीय अङ्क

अभिमन्युवधके पश्चात् राजा दुर्योधन प्रफुल्लित होकर अपनी रानी भानुमतीको यह समाचार सुनानेके लिये स्वयं प्रस्तुत हुए, पर उस समय महारानी भानुमती अन्तःपुरमें नहीं थीं अतः बडी उत्सुकतासे राजाने कंचुकीसे पूछा—'इस समय मेरी प्राणेश्वरी कहां हैं शीघ्र बताइये ? मैं अपनी इस प्रथम विजयका सुखद वृत्तान्त पहले महारानीको सुनाना चाहता हूँ। राजा दुर्योधनके इस मूर्खतापर कंचुकी मन ही मन राजाको कोशने लगे—'धिक् मूर्ख ! दिगन्त विश्रुत महापराक्रमी अजेय भीष्मपितामहके वधका बदला अल्पवयस्क असहाय बालक अभिमन्युको धोखेकी आडमें मारकर लिया है और तिसपर भी इतना हर्षोद्रेक ? तुझे धिक्कार है।' इतना कहकर राजाको उस वाटिकामें पहुँचा दिये जहां महारानी अपने अनिष्ट स्वप्नका समाचार सखियोंसे कह रही थीं। एकान्तमें अपनी सखियोंके साथ धीरे २ बात करती हुई महारानीको देख, दुर्योधन सशङ्कित होकर परदेकी आडमें महारानीकी बातें सुनने लगे। महारानी भानुमतीने कहा—'हे सखि ! तदनन्तर

देवताओंसे भी अधिक सुन्दर उस 'नकुल'के दर्शनसे मैं उत्कण्ठित हो उठी—मेरा हृदय उसपर आसक्त हो गया, फिर मैं उस स्थानको छोडकर लता-कुञ्जमें चली गई और वह नकुल भी मेरा अनुसरण करता हुआ उस कुञ्जमें प्रवेश कर गया तथा धृष्टतासे हाथ फैलाकर मेरे स्तनावरणोंको हटा दिया…।' इतनी अधूरी बातें सुनते ही राजा दुर्योधन मारे क्रोधसे लाल हो उठे और मनही मन कहने लगे—'अरी! माद्रीसुत नकुलमें आसक्त दुराचारिणी! ठीक है, तेरी सारी काली करतूत मुझे मालूम हो गई। अरी पापचित्ते! इसीलिये आज प्रभातमें ही तू एकान्त स्थानमें चली आई थी। कुछ सोच कर बस! बस!! 'हमारे (कौरवोंका) दुश्मन माद्रीसुत नकुल ने हाथ फैलाकर स्तनावरण हटा दिया' आ·? पापचित्ते! मेरी इज्जत भी पाण्डवोंसे वर्वाद हो गयी। बस! अब अधिक सोचने और सुनने की आवश्यकता नहीं? तलवार खींचकर ज्यों ही आगे बढ़े कि महारानीकी आवाज फिर सुनाई पड़ी। महारानीने कहा—'सखि! इसके अनन्तर सवेरा हो गया और आर्यपुत्रके उद्बोधन निमित्त प्राभतकालीन मृदङ्गध्वनिके साथ वेश्याओंके सङ्गीतसे मैं जाग पड़ी।' इतना सुनते ही राजा दुर्योधन होशमें आ गये। उन्हें मालूम हो गया कि यह सारा वृत्तान्त महारानी अपने स्वप्नका कह रही थीं। अच्छा हुआ कि मैंने आवेशमें आकर महारानोको कोई कटुवचन नहीं कहा। सचमुचमें आजकल मेरी बुद्धि स्थिर नहीं है। कथाप्रसङ्ग सम्पूर्ण होनेके पहले ही मैंने नकुल (नेवला) को भीमका भाई माद्रीसुत समझकर व्यर्थमें महारानीकी गर्दन काटनेके लिये उद्यत हो गया था। अच्छा? महारानी अब अनिष्ट स्वप्नको शान्तिके लिये भगवान भास्करको अर्घ्यप्रदान करनेके लिये ध्यानस्थ हो रही हैं। यही अवसर महारानीके निकट जानेका है। यह सोचकर राजा सङ्केतसे सखियोंको दूर हटाकर पीछेसे महारानीकी अञ्जलिमें स्वय पुष्पप्रदान करने लगे। परन्तु महारानीके अङ्गस्पर्शके सुखोंका अनुभव करते ही राजाके शरीरमें वासना की बिजली दौड गई। राजाका शरीर चञ्चल हो उठा और उनके हाथोंसे पुष्प पृथ्वीपर गिर पडे। राजाके इस अशिष्ट व्यवहारसे महारानी तमक उठीं, परन्तु राजा अत्युग्र कामवासनाका अभिनय करते हुए महारानीको वसमें लाने लगे। इतने में महाझञ्झावात (प्रचण्ड आंधी) से समस्त हस्तिनापुर काप उठा, त्राहि-त्राहिसे आकाश गूजने लगा, राजा दुर्योधनके विजय-रथकी पताका टूटकर धाराशायी हो गयी, कौरवोंके शिविरमें आतङ्क-सा छा गया, महारानी भानुमती भी त्रस्त होकर राजा दुर्योधनके गलेसे चिपक गयीं। इसी समय आर्तनाद करती हुई जयद्रथकी माता और उसकी पत्नी दु शला (दुर्योधनकी बहिन) राजाके सामने आकर कहने लगी महाराज! गाण्डीवधारी अर्जुनने पुत्रवियोगसे उद्विग्न होकर आज सुर्यास्तसे पहले महारथी जयद्रथको मारनेकी अटल प्रतिज्ञा साधली है। उसके प्रकोपसे पृथ्वी काप रही है। झञ्झावातसे वायुमण्डल दूषित हो गया है। रक्षा कीजिये महाराज रक्षा कीजिये!! यह समाचार सुन राजा दुर्योधन तमक उठे और उन दोनोंको सान्त्वना देकर रणस्थलकी ओर प्रस्थान कर दिये।

द्वितीय अङ्क समाप्त।

## तृतीय अङ्क

महारथी जयद्रथवध-सग्रामके दिन द्रुपद, मत्स्यसेन, भूरिश्रवा, सोमदत्त, भगदत्त, वाह्लीक प्रभृति प्रधान २ राजाओं तथा जयद्रथ और असख्य घोड़े-हाथियोंके वधसे रणस्थल इतना रक्तप्लावित हो चुका था कि रुधिरप्रिय नामक राक्षस और उसकी वसागन्धा पत्नी यथेच्छ रुधिर, मास, वसा और मज्जाओंसे तृप्त होकर उस विकट सग्रामको सौ वरस तक अनवरत चलनेकी कामना कर रही थी और उधर द्रौपदीकी वेणीको पकडकर घसीटनेवाला दुष्ट दु शासनको वध करनेका दृढप्रतिज्ञ प्रचण्ड गदाधारी भीम दु शासनके रुधिरपान करनेके लिये रणस्थलीमें इतस्तत गरज रहे थे। पर उस दिन उनकी गदाशक्ति क्षीण हो रही थी। क्योंकि परशुरामका प्रधान शिष्य, समस्त लोकका आचार्य, धनुर्धारियोंमें श्रेष्ठ, कौरव-पाण्डव उभय पक्षके गुरु, ब्राह्मणश्रेष्ठ महामहा पराक्रमी द्रोणाचार्य दु शासनकी रक्षामें तत्पर होकर कौरवोंके सेनानायक वनकर सृष्टिसहार-कालीन झझावातसे क्षुब्ध पुष्करावर्तक मेघोंके भीषण गड-गडाहटकी प्रतिध्वनिका अनुसरण करनेवाले अपने तीखे वाणोंसे पाण्डवोंकी सेनाको तितर-वितर कर रहे थे। उनके दिव्य शस्त्रोंकी ज्वालासे गाण्डीवधारी अर्जुन, सात्यकि और भीम भी तिल-मिलाकर रणस्थलसे भाग जाना चाहते थे। समस्त पाण्डव सेनाआमें त्राहि २ की प्रतिध्वनि गूज रही थी। अन्तमें श्रीकृष्णकी मत्रणासे द्रोणाचार्य-पुत्र महारथी वीर अश्वत्थामाके सग्राममें मरजानेकी झूठी अफवाह उडा दी गयी जिसे सुनकर द्रोणाचार्य स्तब्ध हो गये और धर्मराज युधिष्ठिरके मुखसे भी **'अश्वत्थामा हतः'** (पृ.११०) इतना अर्धोक्त पद सुनते ही विश्वसित होकर उन्होने शस्त्रत्याग कर दिया। फिर क्या था, तत्क्षण ही धृष्टद्युम्नने लपककर आचार्यकी शिखाको पकडकर उनकी गर्दन काटडाली और भीमकी गदा दु शासनकी तरफ टूट पडी। समस्त कौरवसेना त्रस्त होकर रणस्थलीसे भाग गयीं। आचार्यके सारथी ने भी शस्त्राघातसे छिन्न-भिन्न होनेसे व्याकुल होकर रणस्थलके लिये प्रस्तुत शस्त्रसज्ज अश्वत्थामाके चरणोंपर जाकर गिर पडा और आचार्यके दु खद मृत्युका समाचार सुना दिया। विश्वविश्रुत पराक्रमी पूज्य पिताका अतर्कित मृत्युसमाचारसे अश्वत्थामा व्याकुल हो उठे। मृत्युका कारण मिथ्या प्रसारित पुत्रवियोग अश्वत्थामाको अधिक सता रहा था। रह-रहकर वे अजात शत्रु धर्मराजको कोश रहे थे। उनको विश्वास था कि मेरे पिता अजेय है, रणमें उनके दिव्य शस्त्रोंके सामने देवता भी टिक नहीं सकते ( फलत यही हुआ भी। परन्तु **'जातस्य हि ध्रुवो मृत्युः'** ( गीता ) को कौन टाल सकता है ) इसी बीच अश्वत्थामाके मामा कृपाचार्य भी रणसे पराङ्मुख होकर वहा उपस्थित होगये और दीर्घ श्वास लेते हुए कहने लगे— 'सभी भाइयोंके साथ कौरवनरेश दुर्योधनको धिक्कार है, जिसका आजतक कोई शत्रु नहीं उस अजातशत्रु धर्मराज युधिष्ठिरको धिक्कार है और जिन्होंने चित्र वनकर उस समय द्रौपदीके केशापकर्षणको देखा तथा आज विश्ववन्द्य गुरु द्रोणाचार्यके केशापकर्षणको देखा उन्हें भी धिक्कार है। अर्थात् मुझे भी धिक्कार है।

ऐसा कहकर अश्वत्थामाको सेनापति बनकर पाण्डवोंसे बदला लेनेके लिये उत्साहित करके दुर्योधनके पास ले गये। परन्तु इनके जानेके पहले ही महारथी कर्ण अपना रग जमाकर सेनापतिके पदपर आरूढ़ हो चुके थे, अतः अश्वत्थामाके सेनापति बननेकी पदलोलुपताको देखकर व्यग्यभरे शब्दोंमें कर्णने कहा—दोणायने ! सेनापति बनना सहज नहीं? अभी अभी आपके भुजपराक्रमशाली पूज्य पिताने सेनापति बनकर ही तो धृष्टद्युम्नसे त्रस्त होकर रणमें शस्त्र त्यागकर अपने साथ महारथियोंको भी मौतके घाट उतरवाया है। आखीर आप भी तो उन्हींके पुत्र हैं न? इस तरह कर्णकी विविध प्रकारसे व्यग्यभरी बातोंको सुनकर अश्वत्थामा जल उठे और धैर्यच्युत होकर कहने लगे—अरे, रे, राधागर्भभारभूत ! शस्त्रानभिज्ञ !! मेरे समक्ष ही मेरे पिताकी निन्दा कर रहा है? अरे, सूताधम ! मेरे पिताके भुजबलसे समस्त ससार विदित है। जब तक वे जीते रहे समरभूमिमें पाण्डवोंके ऊपर क्या क्या उतपात मचाया, उसे क्या तूने नहीं देखा था? चापलूस ! उन्होंने रणमें शस्त्रका त्याग क्यों किया था इसका उत्तर सत्यपरायण धर्मराज युधिष्ठिरसे पूछ? अरे, समरभूमिसे भागकर आनेवाला कायर ! भीरु !! समरमें उस समय तू कहाँ था? कहा चली गयी थी तेरी यह वीरता? अरे, व्यर्थाभिमानिन् ! मेरे पिताने पुत्रशोक या धृष्टद्युम्नसे त्रस्त होकर रणमें शस्त्रत्याग कर दिया, किन्तु व्यर्थ भुजाओंके अभिमानसे फूले न समाये तेरे मस्तकको अभी मैं केवल वाम (लघु) पादप्रहारसे चूर्ण कर देता हू, ले सम्हल जा मूर्ख ! बस, क्या था? अश्वत्थामाके पादप्रहारसे बचकर कर्ण भी तलवार खींचकर खड़े हो गये और कहने लगे—अरे बकवादी ! ब्राह्मणाधम !! ब्राह्मण होनेके कारण तू अवध्य है, नहीं तो अभी तेरी गर्दनको धडसे अलग कर देता? इतना सुनते ही अश्वत्थामा ने कडाकेसे अपने यज्ञोपवीतको तोड डाला और कहा—ले यदि मैं ब्राह्मण होनेके कारण ही तेरा अवध्य हू, तो इस जातिको आज मैंने छोड दिया? अब आगे बढ? अभी तुझे मारकर मैं अर्जुनकी प्रतिज्ञाको भग्न करता हू—तू मेरे हाथसे ही मर? इतने में दुर्योधन दोनोंके बीच खड़े होकर उभयको शान्त कर ही रहे थे कि रण-स्थलीसे भीमकी गदासे व्यथित दु शासनका आर्तनाद सुनाई पडा। उसे बचानेके लिये अश्वत्थामाको छोडकर सभी दौड पडे।

तृतीय अङ्क समाप्त



## चतुर्थ अङ्क

दु शासनको बचानेके लिये दुर्योधन अपनी पूरी शक्तिसे विकट सग्रामका सामना किये पर अधिक देर तक टिक न सके। अन्तमें भीमकी प्रचण्ड गदासे मूर्छित होकर वे भी धराशायी हो गये। चतुर सारथी शीघ्रतासे उन्हें रथपर लादकर भाग गया और रणस्थलीसे दूर ले जाकर एक वट-वृक्षके नीचे ठण्ढी हवामें भूमिशय्यापर लिटा दिया। उधर भीमने महारथी कर्ण और शल्य आदि योद्धाओंके समक्ष ही दु शासनको पछाडकर

जीवित ही उनके विशाल वक्ष स्थलको अपने हाथोंसे चीरकर पूर्व प्रतिज्ञाके अनुसार यथेच्छ रक्तपान करके अवशिष्ट रक्तसे समस्त शरीरको रञ्जित कर डाला तथा महाभयानक घोराकृतिसे प्रलयकालीन मेघके समान गरजकर कर्णके ऊपर भी वे टूट पडे। उस समय उनकी विकट आकृतिको देखकर उभय पक्षकी सेनायें उन्हें अजीव दानव समझकर चितकार करती हुई रणस्थली छोटकर भाग गयीं। इतनेमें भीमका मेघनाद सुनकर कर्णको बचानेके लिये कृपाचार्य भी सुसज्जित होकर भागती हुई सेनाओंको ललकारते हुए रणस्थलीमें पहुंच गये। अर्जुन भी भीमकी पराजयकी शङ्कासे अपने रथको तेजीसे बढ़ाकर महारथी, कर्णके ऊपर बाण बरसाने लगे। दोनों महारथियोंके विकट युद्धमें असख्य योद्धाओंको गर्दन कटकर धमा-धम पृथिवीपर गिरने लगी। हाथी, घोडे और रथचक्रकी धूलसे समस्त रणस्थल इतना प्रच्छन्न हो गया कि योद्धा लोग विना निशाना साधे ही एक दूसरेपर बाण बरसा रहे थे। बीच-बीचमें अर्जुनके रथकी पताकापर बैठे महावीरके वज्रपातकी तरह किलकिलाहटसे तथा अर्जुनके देवदत्त* तथा भगवान् वसुदेवके पाचजन्य नामक शङ्खके तुमुल निनादसे दशो दिशाओंका मुखविवर गूँज उठता था। कर्णकी रक्षा करनेमें कृपाचार्य भी अस्त-व्यस्त हो गये थे। इतनेमें पिताकी पराजय सुनकर कर्णका पुत्र कुमार वीर वृषसेन भी शस्त्रसज्जित होकर रणस्थलमें उतर आया और उसने अपने चम-चमाते हुए बाणोंसे अर्जुनके भगवान् वासुदेव सचालित भव्य रथको क्षणमात्रमें आच्छादित कर दिया। बालकके इस अतुलित पराक्रमको देखकर ईषत् स्मित करते हुए अर्जुनने कहा—अरे, रे, कुमार वृषसेन! मेरे क्रुद्ध हो जानेपर तेरे पिता भी पल भर मेरे समक्ष नहीं टिक सकते, फिर तेरा कहाना हो गया है? दूर हो जा बालक! अपने समवयस्कसे जाकर लड? इस प्रकार अर्जुनके व्यङ्गभरे कटु वचनोंको सुनकर क्रोधसे तमतमाते हुए उस बालकने मर्मच्छेदी विकराल बाणोंसे अर्जुनके वक्षस्थलको बींध डाला। महारथी अर्जुन उस व्यथाको सह न सके। झट क्रोधावेशमें आकर कर्कश गाडीवकी प्रत्यञ्चा (डोरी) को तानकर बालकके ऊपर असख्य बाणोंकी वर्षा करने लगे। पर अर्जुनका एक भी बाण सफल नहीं हुआ। त्वरित ही उस वीर बालकने अपने भुजबलसे अर्जुनके तमाम बाणोंको काटते हुए विद्युत् गतिसे अर्जुनके उस प्रशस्त रथको क्षणभरमें पुनः बाणोंसे ढक दिया। वीर बालकके इस अपौरुषेय पराक्रमको देखकर उभय पक्षके सैनिक तथा भगवान वासुदेव भी कहने लगे—शाबाश बालक! शाबाश!! यह सुनकर गाण्डीवधारी अर्जुन तिलमिला उठे और इस बार उन्होंने अति तीक्ष्ण बाणोंसे बालकके रथ तथा धनुषकी प्रत्यञ्चाको ही काट डाला। किन्तु फिर भी वह वीर बालक

---

* 'आपूरितपाञ्चजन्यदेवदत्तनाररसितप्रतिरवभरितदशदिशामुखकुहरः' (पृष्ठ १७५) आपुरितौ=वादितौ, यौ, पाञ्चजन्यदेवदत्तौ=कृष्णार्जुनशङ्खौ (पाञ्चजन्य- कृष्णस्य, देवदत्त- अर्जुनस्य), तयोर्यत्तारम्=उच्चतर, रसित=ध्वनिः, तस्य यः प्रतिरव=प्रतिध्वनिः, तेन भरितानि=पूरितानि, दशदिशाना मुखाना, कुहराणि=छिद्राणि, येनासौ तथाभूत।

विचलित नहीं हुआ। झट, तलवार खींचकर पैदल ही अर्जुनपर टूट पडा। उधर कर्ण भी शरवर्षणसे अपने असहाय पुत्रकी सहायता करने लगे। इतनेमें एक दूसरे रथपर उछलकर वह बालक चढ़ गया और कहने लगा—अरे, मेरे पिताकी निन्दामें रत पाण्डुकुमार अर्जुन! देख, अब मेरे बाण तेरे अङ्गोंके अतिरिक्त कहीं नहीं गिरेंगे। ऐसा कहकर उसने गाण्डीवधारी अर्जुनके समस्त शरीरको बाणोंसे बींध डाला। अर्जुन उसके तीक्ष्ण बाणोंकी व्यथासे व्यथित हो उठे और इस बार क्रुद्ध होकर सहस्र सूर्यकिरणोंसे भी अधिक प्रकाशमान अपने शक्ति-बाणको बालकके ऊपर छोड दिया। परन्तु उससे भी वह बालक विचलित नहीं हुआ। शीघ्रतासे उसने भी परशुरामके कुठारके समान तीक्ष्ण धारवाला बाणको प्रत्यञ्चापर चढाकर कर्ण पर्यन्त खींचकर एक ही निशानमें अर्जुनके उस शक्ति-बाणको आधे मार्गमें ही काट डाला। पुनश्च भगवान वासुदेव कहने लगे-शाबाश बालक! शाबाश!! यह सुन अर्जुनका शिर झुक गया और कर्णके अट्टहाससे समर गूँज उठा। यह देख अर्जुन ने तिल-मिलाकर कहा—अरे, रे, कर्ण! तूने तो मेरे परोक्षमें मेरा वीर बालक अभिमन्युका वध किया था पर आज मैं तेरे सामने ही उसका बदला लेता हूँ। देख? यह कहकर इस बार उस महागाण्डीवको सम्भाला जिसका शब्द वज्रपातके समान था। इतनेमें महारथी कर्णने भी अपने 'कालपृष्ठ' नामक धनुषको खींचा। दोनों महारथियोंके धनुषकी प्रत्यञ्चाके गगनभेदी टङ्कारोंसे कर्ण-विवर फटने लगे। पर अन्तमें कर्णके हाथोंसे धनुष गिर पडा, कौरवसेना चिल्ला उठी हाय, कुमार वृषसेन मारे गये? तदनन्तर कर्णका सहचर सुन्दरक यह सब समाचार लेकर इतस्तत. भटकता हुआ उस वटवृक्षके नीचे बेहोश दुर्योधनके पास पहुँचा। उस समय कुछ होशमें आकर दुर्योधन अपने सबसे प्रिय छोटे भाई वीर दु शासन वधका ताजा समाचार सुनकर बिलख-बिलख कर रो रहे थे। सुन्दरकको सामने देख बडी उत्सुकतासे युद्धका समाचार पूछने लगे। सुन्दरकने कुमार वृषसेन और गाण्डीव-धारी अर्जुनके विकट सग्रामका सविस्तार वर्णन करते हुए अन्तमें कुमारके दु खद मृत्युका समाचर भी सुना दिया। राजा दुर्योधन हाय वत्स वृषसेन! करके रोने लगे। इसी समय वहा गान्धारी के साथ महाराज धृतराष्ट्रके आनेका समाचार पहुँच गया, दुर्योधन लज्जित होकर अपना काला मुँह छिपानेका प्रयत्न करने लगे।

चतुर्थ अङ्क समाप्त।



## पञ्चम अङ्क

सञ्जयके साथ महाराज धृतराष्ट्र और माता गाधारी अचानक उस वटवृक्षके नीचे उपस्थित होकर दु'शासन वधसे सन्तप्त तथा लज्जा और ग्लानिसे नतमस्तक दुर्योधनको टटोलते हुए कहने लगे—बेटा अब अधिक दु खसे क्या लाभ? धैर्यधारण करो। अब सौ पुत्रोंमेंसे सिर्फ एकमात्र बचे हुए तुम भी यदि हम लोगोंसे अब भाषण नहीं

करोगे, तो कौन करेगा? पिता तथा माताके इस प्रकार करुण वचन सुनकर दुर्योधन कहने लगे—पिताजी! माताजी!! आप लोग धन्य हैं, आपके ९९ पुत्रोंके वधका कारण अकेला मैं ही हूं और मुझे अब भी आपलोग पुत्र कहकर पुकारते हैं! ९९ पुत्रवधसे उत्पन्न होनेवाले हृदयज्वरसे जिसप्रकार आपलोग सतप्त हैं, दुःशासनवधसे आज मैं भी उसी प्रकार व्यथित हूं। आपलोग धैर्यधारण कीजिये और आशीर्वाद दीजिये मैं अभी कुन्तीपुत्रोंको मारकर आपलोगोंके हृदयको ठण्ढा कर देता हूँ। यह सुन माता गांधारी कम्पित हृदयसे बोल उठी—पुत्र! सर्वनाश हो चुका, तुझे मेरी शपथ है, अब भी युद्ध विमुख हो जा (मुझे निपुत्री होनेसे बचा), अब तू एक ही हम दोनों अन्धोंका पथ-प्रदर्शक बच गया है। इसी प्रकार पिता धृतराष्ट्र भी कहने लगे—देखो बेटा! जिस भीष्मपितामह और द्रोणाचार्यके बलपर हम ही नहीं प्रत्युत विश्व तेरी विजयपर निःशङ्क था, वे दोनों तो प्रथम ही मार डाले गये। आज महाप्रतापी कर्णके सामने ही उसका पुत्र वीर वृषसेनकी हत्या करते हुए अर्जुनके गांडीवके टङ्कारोंसे संसार कम्पित हो उठा है। पुत्र! पाण्डवोंकी सभी प्रतिज्ञायें पूरी होती जा रही हैं। अतः शत्रुविषयक अभिमानका परित्यागकर समय रहते अब भी तुम युधिष्ठिराभिलषित सन्धिनियम से (सिर्फ पांच गांव देकर) सन्धि कर ले। युधिष्ठिर अभी भी सन्धि करनेका इच्छुक है क्योंकि उसकी प्रतिज्ञा है कि—'मेरे भाइयोंमें एकका भी वध होगा तो मैं जीवित नहीं रहूँगा। अतः उसे अनिष्टकी शङ्कासे सतत युद्धविरामकी इच्छा बनी रहती है। यह सुनकर दीर्घ निःश्वास लेते हुए दुर्योधनने कहा—पिताजी, पिताजी!! यह आप क्या कह रहे हैं? एक भी कनिष्ठ भ्राताके मृत्यु हुए बिना ही युधिष्ठिरने ऐसी प्रतिज्ञा कर ली है तो क्या मैं ९९* भ्राताओंके मरने पर भी अपने प्राणोंकी ममतापर सन्धिकर लूं—ऐसा कदापि नहीं हो सकता? अगर इस समय पराजयकी आशङ्कासे मेरी ममतापर यह सन्धिप्रस्ताव आप रक्खेंगे तो राजाके क्षत्रियोचित धर्मकी मर्यादाका उच्छेद हो जायगा। पिताजी! आप आशीर्वाद दीजिये वत्स वीर दुःशासनके रक्तको पीनेवाला शत्रु भीमको मारकर ही मैं युधिष्ठिरका मनोरथ भग्न करूँगा। इतनेमें कौरवसेनाओंकी चीत्कारोंसे दिशायें गूँज उठी। महासमरसे रोते हुए शल्यके पलायनसे विदित होगया कि अर्जुनके वज्रसम गाण्डीवके वज्रपातसे महारथी कर्ण धराशयी हो गये। यह सुन हाय प्रियमित्र कर्ण! कहते हुए दुर्योधन पृथिवीपर गिर पड़े और माता-पिता उन्हें आलिङ्गनकर धैर्य देने लगे। इसी अवसरपर दुर्योधनको ढूंढ़ते हुए अर्जुनके साथ भीम भी वहाँ पहुंच गये और दोनों भाई माता गांधारीके साथ चाचा धृतराष्ट्रको उपस्थित देख चकित होकर सदाचारके अनुकूल उन्हें प्रणामकर दुर्योधनको धिक्कारने लगे। दुर्योधन भी तमक उठे। दोनों पक्षोंमें बढ़-बढ़कर

---

* 'भ्रातॄणां निहिते शते' (पृ० २०९) यहां 'शत' शब्द बहुल पर्यायवाची अर्थात् ९९ परक है। इसी प्रकार इस ग्रन्थमें यत्र तत्र 'शत' शब्दसे यही अर्थ समझना चाहिये।

बातें होने लगीं। अन्तमें क्रोधावेशमें आकर भीमने कहा—अरे, रे भरतवशके कलङ्क! अभी अभी दु:शासनवधके समय तेरी पूरी मरम्मत हो चुकी है। उस समय तुझको मैंने इसलिये नहीं मारडाला कि तू ने अपने दुष्कर्मोंका आखोंदेखेपूरा मजा नहीं चख चुका था। अब मेरी सभी प्रतिज्ञायें पूरी हो चुकी हैं केवल तेरी जाघोंको इस गदासे विदीर्णकर तेरे रक्तसे अपने शरीरको रञ्जित करना ही वाकी है, उसे भी आर्य धृतराष्ट्रके समक्ष होनेसे अभी नहीं तो कल सवेरे अवश्य पूरा करूगा। यह कहकर वडे भाई धर्मराज युधिष्ठिरका आह्वान सुन दोनों भाई सिविरकी ओर प्रस्थान कर गये। तदुपरान्त कर्णका वध सुनकर अर्जुनको ललकारते हुए अश्वत्थामा उपस्थित होकर कहने लगे—कौरवनरेश! आपने अपने प्रिय मित्र कर्णका पराक्रम तो देखलिया, अब आप उसके प्रतिशोध लेनेके लिये मुझे आज्ञा दीजिये। मैं तिनकाके समान अर्जुनके गाण्डीवको ध्वस्तकर क्षणमात्रमें पाण्डवोंकी गर्दन काट डालता हूँ। यह सुन दुर्योधन व्यथित हो उठे और कहने लगे—आचार्यपुत्र! धनुर्धर क्षत्रियवीर अङ्गराज प्रियमित्र कर्णके विनाशसे जितना आप सुखी हैं, उतना ही मैं दु खी हूँ। अतः आपका यह मनोरथ मेरे विनाशके वाद पूरा हो तो अच्छा।

पञ्चम अङ्क समाप्त।



## षष्ठ अङ्क

महाभारत सग्रामके अन्तिम दिन सवेरे दीर्घश्वास लेते हुए युधिष्ठिरने कहा—आह! भीष्म, द्रोण, कर्ण, शल्य प्रभृति भयोत्पादक योद्धाओंके विनाशसे अवश्यभावी विजयपर जितनी प्रसन्नता जाग उठी थी आज उससे भी वढकर भयकर होनेवाला वज्रपात देखनेमें आरहा है। भीमने प्रतिज्ञा कर ली है कि 'यदि आज सवेरे दुर्योधन नहीं मारा गया तो अपना ही प्राण परित्याग कर दूँगा'। इस समाचारसे न जाने दुर्योधन कहा छिप गया है। इस विषयमें भगवान वासुदेवकी व्यग्रता मुझे और सता रही है। यह कहकर विविध प्रकारसे दुर्योधनका अन्वेषण करनेके लिये सेवकोंको आज्ञा दे ही रहे थे कि अपना सन्देश-हर ( पाचालक ) पहुच गया और कहने लगा—महाराजकी जय हो? महाराज! भगवान वासुदेवके साथ कुमार भीम और अर्जुन दोनों भाई जब समन्तपचकके चारों ओर दुर्योधनको खोजते-खोजते अस्तव्यस्त होगये थे तव गरम २ श्वास लेते हुए क्रोधान्ध कुमार भीमके कटाक्षोंसे वर्षाकालीन रात्रिमें विचरनेवाले जुगनुओंके समूहोंकी भाति पीले वर्णके स्फुलिंग निकलने लगे थे, इसी वीचमें कुमार भीमसेनका परिचित कोई व्याधाने धीरेसे आकर कुमारके कानोंमें कुछ अस्फुट शब्द कहे और उसने उन लोगोंको एक 'सरोवरमें जल-प्रदेशके निकट लेजाकर जलमें प्रवेश करता हुआ दुर्योधनका पदचिह्न दिखा दिया। यह देख कुमार भीमकी गदा फडक उठी, क्षणमात्रमें ही उन्होंने दुर्योधनको विविध प्रकारसे धिक्कारते हुए अपनी गदासे उस सरोवरको आलोड़ित करके उसके समस्त जलको उछाल-

कर बाहर फेंक दिया। तदुपरान्त दुर्योधनने विक्षुब्ध होकर दोनों हाथोंसे भीषण गदा उठाकर घुमाता हुआ वायुनन्दन पर टूट पडा। किन्तु क्षणमात्रमें ही उसने भयानक समर-भूमिकी ओर देखा, जहा भीष्म, द्रोण, कर्ण, दु शासन, शल्य प्रभृति महामहारथियोंके तथा समस्त कौरवोंके ढेर मृतशरीरोंको नोच-नोचकर शृगाल और श्वान खा रहे थे। यह देख दुर्योधनको अपना दुष्कर्म याद आ गया और उसने सहमकर अपनी गदाओंको जमीन पर फेंक दिया। यह देख कुमार भीमने कहा—अरे रे, कौरव कुलकलक ! क्यों डरता है ? (कुमार अभिमन्युकी तरह नि शस्त्र करके मैं तेरा वध नहीं करना चाहता, उसकी गदाको ठोकर मारकर) ले दुष्ट सम्हाल अपनी गदाको और हमारे पाचों भाइयोंमें जिस एकसे तुझे लडकर मरना अभीष्ट हो लडले, इसमें मुझे कोई आपत्ति नहीं है। यह सुन दुर्योधन पुनः तमक उठा और दु'शासनवधके प्रतिशोधकी भावनासे भीमके साथ ही गदायुद्ध प्रारभ कर दिया। तदुपरान्त भगवान वासुदेवने अपनी विजय निश्चित समझकर महा-राजको राज्याभिषेककी विधिवत् सपूर्ण सामग्री तैयार करनेके लिये कहनेको मुझे भेजा है। यह सुन महाराज गद-गद हो उठे, द्रौपदीका हर्षोद्रेक वर्णनातीत हो गया, विजय ! विजय !! की ध्वनिसे समस्त राजभवन गूंजने लगा। परन्तु इसी बीच दुर्योधनके मित्र चार्वाक नामक राक्षसने तपस्वीके वेषमें अस्त-व्यस्त होता हुआ युधिष्ठिरके पास जाकर दुर्योधनकी गदासे भीमके धराशायी होनेका मिथ्या समाचार अफशोश करता हुआ सुना दिया। सत्यवादी महाराज उस छद्मवेषी तपस्वीके वचन सुनकर हाय, वत्स भीम ! कहते हुए मूर्च्छित होकर गिर पडे। कचुकीने उन्हें अथक प्रयाससे होशमें लाया परन्तु महाराज शान्त नहीं हुए। उनकी शोकाग्नि भभक उठी, वे अपनी प्रतिज्ञाके अनुसार चिता लगाकर भस्म होनेके लिये उद्यत हो गये। उनके साथ महारानी द्रौपदी भी भीमके वियोगमें तलफती हुई महाराजसे पहले ही चितामें प्रवेश करनेके लिए तैयार हो गई। इसी समय ताजे खूनसे लथपथ महाभयकर आकृतिको द्रौपदीका नाम ले लेकर गरजता हुआ राजभवनकी ओर आता देख, सभी लोग उस विकटाकृतिको दुर्योधन समझकर इतस्तत भागने लगे। महाराज युधिष्ठिरको शस्त्रप्रदान करनेका साहस भी किसीमें न रहा। अत' महाराजने द्रौपदीकी ओर बढ़ता हुआ उस भयानक आकृतिको लपककर अपने भुजपाशमें कसकर आवद्ध कर लिया और कहने लगे—अरे, रे मेरे प्रिय अनुज भीमका हत्यारा पापी दुर्योधन ! आज तू मेरे भुजारूपी पिंजडेके भीतर पहुचकर बच नहीं सकता ? यह सुन महाराजके भुजपाशमें आवद्ध घोराकृति भीम बोल उठे—हैं, क्यों, महाराज मुझे दुर्योधन समझकर मसल देना चाहते हैं ? (सम्हलकर) महाराजकी जय हो। महराज ! भ्रम न करें, मैं दुर्योधनके रक्तसे लिप्त आपका प्रिय अनुज भीम हू। अब वह पापी दुर्योधन कहा ? भगवान वासुदेवका तिरस्कार करनेवाला उस महापापीको आपके आशीर्वादसे अभी-अभी मैंने सचूर्ण कर डाला है। आर्य ! मुझे एक क्षणके लिये अवकाश दीजिये। मैं दुर्योधनके तप्त रक्तमें सने हुए इन हाथोंसे द्रौपदीकी वेणी, जिसे दुर्योधनके आदेशसे दुष्ट दु:शासनने

खींचकर खोल दिया है—बान्धनेके लिये व्यग्र हो रहा हू। यह सुनते ही महाराजने भीमके मस्तकको सूघकर बड़े ही हर्षोच्छ्वसित होकर भीमका आलिंगन किया और भीम लपककर द्रौपदीके गलेसे चिपककर अपने हाथोंसे द्रौपदीकी वेणीको गूथने लगे। इतनेमें अर्जुनके साथ भगवान वासुदेव पहुच गये और ईषद्धसित होते हुए कहने लगे—भ्राताओंके सहित युधिष्ठिरकी जय हो। महाराज युधिष्ठिर ! मैं यह देखकर कि आप चार्वाकके कपटोंसे व्याकुल हो रहे हैं; अर्जुनको लेकर शीघ्र आया हू। पर रास्ते ही में पता लगा कि नकुलने उसे पकड़ लिया है। अतः कहिये महाराज इसके आगे अब आपकी क्या इच्छा है जो हमलोग करें ? भगवान वासुदेवका यह वचन सुन धर्मराजने कहा—भगवन् ! अब आप यही आशीर्वाद दें कि विना किसी सन्देहके लोगोंको आपमें सुदृढ भक्ति हो। भगवानने कहा—एवमस्तु।

कथासार समाप्त



# पात्र-परिचय

## पुरुष पात्र—

सूत्रधार—नटों में मुख्य ( नाटक-स्थापक )
पारिपार्श्विक—सूत्रधार का सहचर
जयन्धर—पाण्डवों का कंचुकी
श्रीकृष्ण—भगवान् वासुदेव
युधिष्ठिर—कुन्तीपुत्र, पाण्डव—१
भीम— ,, ,, —२
अर्जुन— ,, ,, —३
नकुल—माद्रीपुत्र ,, —४
सहदेव— ,, ,, —५
विनयंधर—कौरवों का कंचुकी
दुर्योधन—कौरव-राजा
रुधिरप्रिय—पाण्डव पक्षपाती राक्षस
अश्वत्थामा—द्रोणाचार्य का पुत्र
अश्वसेन—द्रोणाचार्य का रथवाहक
कृपाचार्य—अश्वत्थामा का मामा
कर्ण—राधा ( सूत की स्त्री ) से परिपालित ( गुप्त कुन्तीपुत्र ) दुर्योधन का मित्र
जयद्रथ—दुर्योधन का बहनोई
सुन्दरक—कर्ण का सन्देशवाहक
धृतराष्ट्र—दुर्योधन का पिता
सञ्जय—व्यास का शिष्य, धृतराष्ट्र का परिचारक
पांचालक—पाण्डवों का सन्देशवाहक
राक्षस—दुर्योधन का मित्र चार्वाक
सूत—दुर्योधन का मित्र, रथवाहक

## स्त्री पात्र—

द्रौपदी—पाण्डवों की स्त्री ( पांचाली )
बुद्धिमतिका—द्रौपदी की दासी
चेटी—द्रौपदी की दासी
भानुमती—दुर्योधन की रानी
सुवदना—भानुमती की सखी
तरलिका—भानुमती की दासी
दुःशला—जयद्रथ की स्त्री
माता—जयद्रथ की माता
वसागन्धा—पाण्डव पक्षपातिनी राक्षसी
गान्धारी—दुर्योधन की माता
प्रतिहारी—दुर्योधन की परिचारिका



# वेणीसंहार-नाटकम्

'प्रबोधिनी'–'प्रकाश' टीकाद्वयोपेतम् ।



## प्रथमोऽङ्कः

निषिद्धैरप्येभिर्लुलितमकरन्दो मधुकरैः
करैरिन्दोरन्तश्छुरित इव संभिन्नमुकुलः ।

---

❀ प्रबोधिनी ❀

राधिकाऽराधित कृष्णं शिरसा नौमि साञ्जलिः ।
वेणीसहारटीकाया. करणे कृतनिश्चयः ॥ १ ॥
पद्मासनां शुद्धगिरम्प्रणम्य रामेश्वर ज्ञाननिधिञ्च वेणीम् ।
गुर्वङ्घ्रिचिन्तारतरामदेव प्रबोधिनीसवलिताङ्करोति ॥ २ ॥

अन्वयः—निषिद्धै , अपि, एभि., मधुकरैः, लुलितमकरन्दः, इन्दोः, करैः अन्त श्छुरित, इव, सम्भिन्नमुकुलः, हरिचरणयोः प्रकीर्णः, अयम् , पुष्पाणाम् अञ्जलिः, अस्य, सदस., नयनसुभगाम् , सिद्धिम् , नः, विधत्ताम् ॥ १ ॥

इह कविकुलमूर्द्धन्यो भट्टनारायण. प्रारीप्सितवेणीसहारनाटकस्य निर्विघ्नपरि· समाप्तिकामो रङ्गविघ्नोपशान्तिजनिकामीश्वरस्तुतिरूपां नान्दी निर्दिशति—निषि-

---

✱ प्रकाश ✱

दीन वन्धु भगवान श्याम सुन्दर वपुधारी ।
निर्विकार आकारहीन सर्वज्ञ मुरारी ।
जो अनाथ के नाथ सदा भक्तन हितकारी ।
चरण कमल में ध्यान धरत जिनके त्रिपुरारी ।
पुरुष पुरातन ब्रह्म वह, अखिल विश्व के प्राणधन ।
दें बुद्धि ज्ञान तम नाश करि, नट नागर आनन्दघन ॥ १ ॥

विधत्तां सिद्धिं नो नयनसुभगामस्य सदसः
प्रकीर्णः पुष्पाणां हरिचरणयोरञ्जलिरयम् ॥ १ ॥

द्धैरिति । हरिचरणयोः = कृष्णपादयोः, प्रकीर्णः = विस्तीर्णः, अयं, पुष्पाणामञ्जलिः = पुष्पाञ्जलिस्थकुसुमानि । मञ्चाः क्रोशन्तीतिवदञ्जलिशब्दस्य अञ्जलिस्थपुष्पेषु लक्षणा । अस्य सदसः = सन्निकृष्टसभास्थजनस्य । सदःपदस्य तत्स्थजने लक्षणा । नयनसुभगां = नेत्रानुरागजनिकां, सिद्धिं, नः = अस्माकं, विधत्ताम् = विदधातु । कीदृशोऽञ्जलिरित्याकाङ्क्षायामाह—निषिद्धैरिति । निषिद्धैः = वारितैः, अपि, एभिः = उपस्थितैः, मधुकरैः = मधुव्रतैः, 'मधुव्रतो मधुकर' इत्यमरः । लुलितमकरन्दः = लुलितः सञ्चालितः, मकरन्दः पुष्परसः यस्मात् असौ लुलितमकरन्दः, 'मकरन्दः पुष्परसः' इत्यमरः । इन्दोः = चन्द्रमसः, 'हिमांशुश्चन्द्रमाचन्द्र इन्दुः कुमुदबान्धवः' इत्यमरः । करैः—किरणैः, अन्तः = मध्ये, छुरितः = व्याप्त इव, अत एव सम्भिन्नमुकुलः = विकसितकुड्मलः, 'कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः । चन्द्रकिरणस्पर्शादेवाञ्जलिस्थकलिका विकसिता, इत्युत्प्रेक्ष्यते कविना, अनेन । श्लोकेनानेन भीष्मादिभिर्निवारिता अपि दुर्योधनादयः प्रवृत्ताः, श्रेष्ठजनाज्ञोल्लङ्घनात् पराजिताश्चेति सूचितम् । यथा निषिद्धालयः पुष्परसं नास्वादयन्ति तथैव दुर्योधनादयोऽपि फलं नाप्नुवन्तीति भावः । अत्र निषेधरूपकारणसत्त्वेऽपि अलोलनरूपकार्याभावात् विशेषोक्तिरलङ्कारः वाच्योत्प्रेक्षा च । करैः करैरिति यमकं शब्दालङ्कारः । शिखरिणी छन्दः 'रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी, इति लक्षणात् । क्रमशः य म न स भ ल गणैः एकेन गुरुवर्णेन च घटिता षड्भिरेकादशैश्चाक्षरैः कृतविरामा शिखरिणीत्यर्थः । पद्यञ्च द्वेधा वृत्तं जातिः तत्र अक्षरसंख्यातं वृत्तम् , मात्रासंख्याता जातिरित्युच्यते तदुक्तम्—पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा-

वृत्तमक्षरसंख्यातं जातिर्मात्राकृता भवेत् ॥ इति ।

तत्र वृत्तगणलक्षणञ्च—

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः ॥
जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ।
गुरुरेको गकारस्तु लकारो लघुरेकक इति ॥ १ ॥

जिनके कृपाकटाक्ष से प्राप्त हुआ कुछ ज्ञान ।
आज उन्हीं गुरुचरण में धरता हूँ मैं ध्यान ॥ २ ॥

**नान्दीपाठ**—श्री भगवान् वासुदेव के चरणों में समर्पित पुष्पाञ्जलि, जिसके मकरन्द को बार बार निवारण करने पर भी इन वेहाया मधुकरों ने बिखेर दिया है तथा सुधांशु की किरणें इसके पुष्पों के भीतर प्रविष्ट करके कलिका से पुष्प के रूप में परिणत करदी हैं,

अपि च ।

कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं
गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम् ।
तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गते-
रक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ २ ॥

अन्वय —कालिन्द्याः, पुलिनेषु, रासे, रसम् , उत्सृज्य, गच्छन्तीम् , कालकुपिताम् , अश्रुकलुषाम् , राधिकाम् , अनुगच्छतः, तत्पादप्रतिमानिवेशितपदस्य, उद्भूतरोमोद्गतेः, प्रसन्नदयितादृष्टस्य, कंसद्विषः, अक्षुण्णः, अनुनयः, वः पुष्णातु ॥ २ ॥

'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥' इति दर्पणकारवचनादेकश्लोकमात्रस्य नान्दीत्वाभावादाह-कालिन्द्या इति । कालिन्द्याः = यमुनायाः, 'कालिन्दी सूर्यतनया यमुने'त्यमरः । पुलिनेषु = तोयोत्थितेषु, जलमध्यस्थानेष्विति यावत् । 'तयोत्थितं तत्पुलिनमि'त्यमरः । रासे = गोपक्रीडाविशेषे, रसम् = रागम् 'रसः स्वादे जले वीर्ये श्रृङ्गारादौ द्रवे विषे । वले रागे' इति हैमः । उत्सृज्य = विहाय, गच्छन्तीम् , केलिकुपितां = क्रीडायामेव क्रोधवतीम् , अश्रुकलुषाम् = रुदतीम् , राधिकाम्=कृष्णजायाम् , अनुगच्छतः = पश्चाद्व्रजतः, तत्पादप्रतिमानिवेशितपदस्य = तस्याः राधायाः, पादप्रतिमासु चरणचिह्नेषु निवेशिते, दत्ते पदे, चरणौ येन असौ तत्पादप्रतिमानिवेशितपदः, तस्य, राधाचरणचिह्नदत्तचरणस्य अत एव उद्भूतरोमोद्गतेः = प्राप्तरोमाञ्चस्य, प्रसन्नदयितादृष्टस्य=प्राप्तप्रसादराधिकाऽवलोकितस्य, मत्पादाङ्कस्पर्शेनापि अस्य रोमोद्गतिर्जातेति हेतो राधिका प्रसन्ना भूत्वा विलोकितवतीति भावः । कंसद्विषः = कृष्णस्य, अक्षुण्णः = अखण्डितः, अनुनयः = प्रार्थना, वः=युष्मान् , पुष्णातु = पुष्यतु । अनेन श्लोकेन द्रौपद्याः क्रोधो रोदनं शत्रुविनाशेन प्रसन्नता ततश्च भीमकृतानुनयस्याखण्डत्वमित्यपि सूचितम् । अत्र रोमाञ्चाख्यभावस्य कृष्णविषय-

इन सभासदों के नेत्रों के लिए आनन्ददायिनी अभिनय में हम लोगों की सफलता सम्पादन करें ॥ १ ॥

यमुना के वालुकामय तट पर रास होते समय अप्रसन्न होकर श्री राधिका रानी उसे छोड़ कर आँसू गिराती हुई चलदी, कंसारि श्रीकृष्ण भगवान् ने भी उनका अनुसरण किया । राधिका जी के चरण चिह्न पर भगवान के चरण पड़ते ही भगवान् के रोम रोम पुलकित हो उठे जिसे देख कर राधिका रानी का भ्रम दूर हो गया और वे मान करना भूल गई सतृष्ण नेत्रों से उन्हें देखने लगीं इस प्रकार का भगवान का अनुनय सभा में समुपस्थित आप सज्जनों का पोषक बने ॥ २ ॥

अपि च ।

दृष्टः सप्रेम देव्या किमिदमिति भयात्संभ्रमाच्चासुरीभिः
शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन ।
आकृष्यास्त्रं सगर्वैरुपशमितवधूसंभ्रमैर्दैत्यवीरैः
सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ ३ ॥

---

करतावळ्त्वात् प्रेयोऽलङ्कारः । कालिकेलि इति छेकानुप्रासः । शार्दूलविक्रीडितं छन्दः । सूर्य्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥ २ ॥

अन्वय —मयपुरदहने, देव्या, सप्रेम, दृष्टः, असुरीभिः, किमिदमिति भयात्, सम्भ्रमात्, च, शान्तान्तस्तत्त्वसारैः, ऋषिभिः, सकरुणम्, विष्णुना, सस्मितेन, (सता) उपशमितवधूसम्भ्रमैः, सगर्वैः दैत्यवीरैः, अस्त्रम्, आकृष्य, देवताभिः, सानन्दम्, (दृष्टः) धूर्जटिः, युष्मान्, पातु ॥ ३ ॥

द्वादशपदनान्यभिप्रायेणाह—दृष्टः सप्रेमेति । मयपुरदहने=मयेन निर्मितम् पुरं मयपुरम् । शाकपार्थिवादित्वादुत्तरपदलोपः । तस्य दहने त्रिपुरासुरपुरदाहकाल इत्यर्थः । देव्या=पार्वत्या, सप्रेम=सानुरागम्, अनुरागे हेतुश्च मत्स्वामिनि ईदृशी शक्तिरिति ज्ञानम्, दृष्टः=विलोकितः । कर्मणि क्तः । असुरीभिः=दैत्यस्त्रीभिः, असुरीति पुंयोगे ङीप् । 'असुरा दैत्यदैतेये'त्यमरः । किमिदमापतितमिति भयात्=भीतेः, सम्भ्रमाच्च=उद्वेगाच्च, उद्वेगश्च-अहो ईदृशस्यापि असुरराजस्य पराभवः कदाचिदस्माकमपि स्वामिनामेवं स्यादिति । दृष्ट इत्यस्य सर्वकर्तर्य्यन्वयः । शान्तान्तस्तत्त्वसारैः=शान्तमन्तः, अन्तःकरणम् येषां तेषां तत्त्वं सत्यं ब्रह्मेतिशान्तान्तस्तत्त्वं,सः सारः, वेद्यत्वेन प्रधानं येषां ते शान्तान्तस्तत्त्वसाराः तैः, 'तत्त्वं परमात्मनि। वाद्यभेदे चे'ति हैमः । ऋषिभिः=मुनिभिः, सकरुणं=सदयं सकरुणमिति क्रियाविशेषणं तेन कर्मत्वम् । विष्णुना=पुण्डरीकाक्षेण, सस्मितेन=ईषद्धाससहितेन, हासे हेतुश्च कथं दैत्यारिः मम कार्यं शिव करोतीति । उपशमितवधूसम्भ्रमैः=शमितस्त्रीसंवेगैः, 'समौ संवेगसम्भ्रमौ'इत्यमरः । सगर्वैः=साहङ्कारैः, दैत्यवीरैः=असुरशूरैः, 'शूरो वीरश्च विक्रान्त'इत्यमरः । अस्त्रम्=आयुधम्, आकृष्य=गृहीत्वा, देवताभिः=

---

मयदानव के द्वारा निर्मित त्रिपुरासुर के नगर भस्म होते समय देवी उमा के द्वारा बड़े प्रेम के साथ, असुररमणियों के द्वारा 'अरे ! क्या हो गया' इस प्रकार की पुकार युक्त भय और व्याकुलता से, विषय वासना से निवृत्तात्मा वशिष्ठादि ऋषियों के द्वारा करुणा के साथ, विष्णु भगवान के द्वारा मन्द मुस्कराना के साथ, शस्त्र उठा कर अपनी भयभीत ललनाओं को आश्वासन देते हुए दैत्यवीरों के द्वारा गर्वीले नेत्रों के साथ, तथा देवताओं के द्वारा बड़ी प्रसन्नता के साथ देखे गये शङ्कर भगवान आप लोगों की रक्षा करें ॥ ३ ॥

( नान्द्यन्ते )

सूत्रधार.—अलमतिप्रसङ्गेन ।

श्रवणाञ्जलिपुटपेय विरचितवान्भारताख्यममृतं यः ।
तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे ॥ ४ ॥

---

अमरैः, सानन्दम्=सहर्षम् , हृष्टः, धूर्जटिः=हर', 'धूर्जटिर्नीललोहितः हरः स्मरहरः' इत्यमर.। युष्मान्, पातु=सदस्यान् रक्षतु । महाभारतसङ्ग्रामोऽपि द्रौपद्या-प्रेम्णा असुरप्रकृतिभिर्दुर्योधनस्त्रीभानुमत्यादिभिर्भयोद्वेगाभ्यां व्यासादिभिः सदयम्, दैत्यैः घटोत्कचादिभि. सगर्वैः अस्त्रं गृहीत्वा इन्द्रादिदेवताभि. सहर्षं कृष्णेन सस्मितेन दृष्ट इत्यपि अनेन श्लोकेन ध्वनितम् । अत्र शृङ्गारभयानकशान्तयुद्धवीररसानां धूर्जटिविषयकरतावङ्गत्वाद्रसवदलङ्कार'। तथा सानन्दमित्यत्र हर्षाख्यभावस्य तत्रैवाङ्गत्वात्प्रेयोऽलङ्कार.। स्रग्धरा छन्दः। म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा-कीर्तितेयम् ॥ ३ ॥

नान्द्यन्ते = नान्द्या अवसाने ।

सूत्रधारः = स्थापक , न तु नान्दीकर्ता,

नान्दीं प्रयुज्य निष्क्रामेत् सूत्रधारः सहानुगः ।
स्थापकः प्रविशेत्पश्चात् सूत्रधारगुणाकृतिः ॥ इति वचनात् ।

नान्दी तु सूत्राधारेणैव पठनीया, सूत्रधार. पठेदेनां मध्यमं स्वरमाश्रितः ॥ इति भरतवचनात् । अलमतिप्रसङ्गेन—अन्यानि नाट्याङ्गानि अप्रयोजनानि नवनाटक-दर्शनेच्छया सदस्यानां स्वयमेव कृतावधानत्वात् ।

अन्वय.—यः, श्रवणाञ्जलिपुटपेयम् , भारताख्यम् , अमृतम् , विरचितवान् , अरागम् , अकृष्णम् , तम् , कृष्णद्वैपायनम् , अहम् , वन्दे ॥ ४ ॥

प्रबन्धस्यास्य महाभारतार्थप्रतिपादकत्वसूचनाय भारतस्य तत्कर्तुर्व्यासस्य च प्रशंसामाह—श्रवणेति । यः=कृष्णद्वैपायन., व्यास इत्यर्थः। श्रवणमेवाञ्जलिपुटं तेन पेयम् श्रवणाञ्जलिपुटपेयम् = कर्णहस्तसम्पुटग्राह्यम् , 'अञ्जलिस्तु पुमान् हस्तसम्पुटे' इति मेदिनी । भारतमाख्या यस्येति भारताख्यम् = महाभारतसञ्ज्ञकम् , अमृतं = सुधासदृशम् , विरचितवान् = अकरोत् , अरागम् = रजोगुणरहितम् , रागस्य रजो-

---

( नान्दी पाठ के अनन्तर )

सूत्रधार—बस, बस, अधिक विस्तार की कोई आवश्यकता नहीं ।

जिस कृष्ण द्वैपायन [ वेदव्यास ] ने महाभारत नाम अमृत की, जो कानों के छिद्र रूपी अञ्जलिपुट के द्वारा पीने लायक है, रचना की है, राग से परे अज्ञान से रहित उस वेद व्यास को प्रणाम है ।

(समन्तादवलोक्य) तत्रभवतः परिषदग्रेसरान्विज्ञाप्यं नः किंचिदस्ति ।

कुसुमाञ्जलिरपर इव प्रकीर्यते काव्यबन्ध एषोऽत्र ।
मधुलिह इव मधुबिन्दून्विरलानपि भजत गुणलेशान् ॥ ५॥

गुणकार्यत्वात् तस्य रजोगुणे उपचारः । अकृष्णम्=अतमसम्, तमोगुणरहितमित्यर्थः । अनेन विशेषणद्वयेन व्यासस्य सत्त्वगुणप्रधानत्वं सूचितम् । तं, कृष्णद्वैपायनं=व्यासम्, अहं=सूत्रधारगुणाकृतिः स्थापकः, वन्दे=प्रणमामि । अत्र भारतेऽमृतत्वारोपनिमित्तकः श्रवणेऽञ्जलिपुटत्वारोप इति परम्परितरूपकालङ्कारः । आर्याछन्दः।

यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽर्य्या ॥ इति लक्षणात् ।

अत्र गणनियमश्च—

लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः ।
षष्ठो जश्च न लघु वा प्रथमेऽर्द्धे नियतमार्य्यायाः ॥
षष्ठे द्वितीयलात्परकेन्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ इति ।

जातिगणलक्षणञ्च—

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥ इति ॥ ४ ॥

समन्ताद्=परितः, चतुर्दिक्षिवत्यर्थः । तत्रभवतः=पूज्यान्, परिषदग्रेसरान्=सभापुरसरान्, विज्ञाप्यं=विज्ञापनीयम्, नः=अस्माकम् ।

बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छयेत्यभियुक्तोक्त्या विज्ञाप्यमित्यत्र मुख्ये कर्मणि प्रत्ययात् गौणकर्मणो द्वितीया ।

अन्वय —अत्र, अपरः, कुसुमाञ्जलिः, इव, एषः, काव्यबन्धः प्रकीर्यते, मधुबिन्दून्, मधुलिहः, इव, विरलान् अपि, (अस्य) गुणलेशान् (यूयम्) भजत

कुसुमाञ्जलिरिति अत्र=सभ्यानामग्रे, अपरः=द्वितीयः, कुसुमाञ्जलिरिव=पुष्पाञ्जलिसदृशः, एषः, काव्यबन्धः=कविकृतप्रबन्धः, प्रकीर्यते=विस्तार्यते, मधुबिन्दून्=मधुपृषतान्, 'पृषन्ति बिन्दुपृषताः' इत्यमरः । मधुलिहः=भ्रमराः, इव,

(चारों तरफ देखकर) मैं आप माननीय सभासद महानुभावों से कुछ विनम्र निवेदन करना चाहता हूँ ।

इस परिषद् में यह नाटक काव्य दूसरी पुष्पाञ्जलि की तरह सेवा में उपस्थित किया जाता है इसके लेशमात्र भी गुणों का जो फूलों के रस की तरह हैं, भ्रमर की भाँति आप लोग आस्वादन करें ॥ ५ ॥

यदिदं कवेर्मृगराजलक्ष्मणो भट्टनारायणस्य कृतिं वेणीसंहारनामकनाटकं प्रयोक्तुमुद्यता वयम् । तदत्र कविपरिश्रमानुरोधाद्वा उदात्तवस्तुकथागौरवाद्वा नवनाटकदर्शनकुतूहलाद्वा भवद्भिरवधानं दीयमानमभ्यर्थये ।

( नेपथ्ये । )

---

विरलानपि = अल्पानपि, विरलेऽल्पे कृशे' इति हैमः। गुणलेशान् = गुणकणान्, भजत = सेवध्वम्, गृह्णीतेत्यर्थः । अत्रोत्प्रेक्षापूर्णोपमयोः संसृष्टिः । आर्याछन्दः । लक्षणमुक्तं प्राक् ॥ ५ ॥

इदम् = अग्रेविधास्यमानम्, यत्, मृगराजलक्ष्मणः = मृगेण राजते यः स मृगराजः, चन्द्रः तद्वाचकः द्विजराजशब्दः तत्र द्विजराजे मृगराजशब्दस्य लक्षणा, स लक्ष्म = चिह्नम् यस्य स मृगराजलक्ष्मा तस्य, द्विजराजोपाह्वस्येत्यर्थः। एतेन कवेर्ब्राह्मणत्व सूचितम् । कवेः = प्रबन्धकर्तुः भट्टनारायणस्य = एतन्नामकस्य अभिनवकृति = नूतनकृतिं, वेणीसहारनामकं = वेण्याः, द्रौपदीकेशरचनायाः जटीभूताया इत्यर्थः । सहारः, मोचनं यस्मिन् तत् वेणीसंहारं तन्नाम यस्य तद्वेणीसंहारनामकम्, शेषाद्विभाषेति कप्प्रत्ययः। अथवा वेण्याः केशरचनायाः संहारः संयमनम् बन्धनमित्यर्थः, यस्मिन् तन्नाम यस्य । सयमनस्य ग्रन्थेन प्रतिपाद्यता सम्बन्धः । नाटकं, प्रयोक्तुं = कर्तुम् उद्यताः = सन्नद्धाः, वयम् ।

उदात्तम् = विशुद्धम्, शौर्यादिगुणसंयुक्तमित्यर्थः । वस्तु = नाटकस्य प्रधानपात्र, नायक इत्यर्थ । द्वयोः कर्मधारयसमासः । तस्य कथा = प्रबन्धकल्पना, तत्र गौरवं गुरुत्वं, तस्मात् । नूतनं यन्नाटकम् । नाटकलक्षणञ्च—

नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ॥
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ।
एक एव भवदङ्गी शृङ्गारो वीर एव वेति ॥

तस्य यद्दर्शनकुतूहलम् तस्मात् । भवद्भिः = सदस्यैः अवधानं = चित्तेऽचञ्चलतां दीयमानम्, अभ्यर्थये = प्रार्थये ।

नेपथ्ये = जवनिकाऽन्तर्भूमौ ।

---

कविकेसरी [ सिंह ] अथवा द्विजराज पदवी से विभूषित भट्टनारायणद्वारा रचित वेणीसहार नाटक का अभिनय करने के लिये हम लोग तय्यार हो रहे हैं आप लोगों से प्रार्थना की जाती है कि कवि के परिश्रम के कारण, श्रेष्ठाख्यान की महत्ता ही से सही, अथवा नये नाटक के देखने की उत्कट अभिलाषा ही के कारण आप लोग शान्तचित्त हो जाय ।

( नेपथ्य में )

भाव, त्वर्यताम्, त्वर्यताम् । एते खल्वार्यविदुराज्ञया पुरुषाः सकलमेव शैलूषजनं व्याहरन्ति-'प्रवर्त्यन्तामपरिहीयमानमातोद्यविन्यासादिका विधयः । प्रवेशकालः किल तत्रभगवतः पाराशर्यनारदतुम्बरुजामदग्न्यप्रभृतिभिर्मुनिवृन्दारकैरनुगम्यमानस्य भरतकुलहितकाम्यया स्वयं प्रतिपन्नदौत्यस्य देवकीसूनोश्चक्रपाणेर्महाराजदुर्योधनशिबिरसंनिवेशं प्रति प्रस्थातुकामस्य' इति ।

सूत्रधारः—( आकर्ण्य सानन्दम् ) अहो नु खलु भोः, भगवता सकल-

---

भाव = मान्य, त्वर्यताम् = शीघ्रता क्रियताम्, द्विर्वचनमतिशीघ्रताद्योतनार्थम् । आर्यविदुराज्ञया=आर्य विदुरस्य शासनेन 'निदेशः शासन च सः । शिष्टिश्चाज्ञे'त्यमरः । शैलूषजनम् = नटजनम्, व्याहरन्ति=कथयन्ति । किं व्याहरन्तीत्याह—प्रवर्त्यन्तामिति । अपरिहीयमानम् = अत्यज्यमानम्, इदं विधिक्रियायामन्वेति तेन क्रियाविशेषणत्वात्कर्मणि द्वितीया । आतोद्यविन्यासादिकाः = आतोद्यविन्यासः वाद्यवादनं स आदिर्येषां ते आतोद्यविन्यासादिका', विधय. = विधानानि, प्रवर्त्यन्ताम् = क्रियन्ताम् । भरतकुलहितकाम्यया = युधिष्ठिरादिवंशशुभेच्छया, पाराशर्य नारद-तुम्बुरु-जामदग्न्यप्रभृतिभिः = पाराशर्यः पराशरस्यापत्यं पुमान्, व्यासः पराशरशब्दात्, गर्गादिभ्यो यञिति यञ्प्रत्ययः । नारदः देवर्षिः, तुम्बुरुः एतन्नामको मुनिविशेषः, जामदग्न्यः जमदग्नेरपत्यं, परशुरामः, एतेषां द्वन्द्वं कृत्वा प्रभृतिशब्देन समास. । मुनिवृन्दारकै. = ऋषिमुख्यैः, अनुगम्यमानस्य, स्वय प्रतिपन्नदौत्यस्य = स्वेनैव प्रतिपन्नम् अङ्गीकृत दौत्यं दूतत्वं येन सः तस्य, देवकीसूनोः = देवकीतनयस्य, 'आत्मजस्तनय. सूनु'रित्यमरः । महाराजदुर्योधनशिविरसन्निवेशं प्रति = धृतराष्ट्रात्मजसैन्यनिवासस्थानाभिमुखं, प्रस्थातुकामस्य = प्रस्थानेच्छो', चक्रपाणेः = कृष्णस्य, प्रवेशकालः किल, इति व्याहरन्तीत्यन्वयः ।

सूत्रधारः = रङ्गदेवतापूजाकृत, 'रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः ॥' इति वचनात् । अहो नु खलु भोः इत्यव्ययसमुदायेनाश्चर्यं द्योत्यते । भगवता=ईश्वरेण, सकल-

---

भाई, शीघ्रता किजिये ! शीघ्रता कीजिये,—ये राजकर्मचारी आर्य्य विदुर की आज्ञा से सभी नटों को आज्ञा दे रहे हैं कि वे गाना, बजाना और नृत्य बिना किसी प्रकार की न्यूनता के करते जाँय ( क्योंकि ) देवकीपुत्र, सुदर्शनचक्रधारी, भगवान वासुदेव महाराज दुर्योधन के शिविर पर जाना चाहते हैं अब उनके आगमनका समय उपस्थित है । व्यास, नारद, तुम्बुरु और परशुराम आदि श्रेष्ठ महर्षि भी साथ साथ रहेंगे । उन्होंने भरतवंशके कल्याण की कामना से स्वय दूत कार्य करना स्वीकार किया है ।

सूत्रधार—( सुनकर, आनन्द के साथ ) अहो भाग्य आज सम्पूर्ण ससार के उत्पत्ति,

जगत्प्रभवस्थितिनिरोधप्रभविष्णुना विष्णुनाद्यानुगृहीतमिदं भरतकुलं सकलं राजचक्रमनयोः कुरुपाण्डवराजपुत्रयोराहवकल्पान्तानलप्रशमहेतुना स्वयं संधिकारिणा कंसारिणा दूतेन। तत्किमिति पारिपार्श्विक, नारम्भयसि कुशीलवैः सह संगीतकमेलकम्।

पारिपार्श्विक—भवतु। आरम्भयामि। कतमं समयमाश्रित्य गीयताम्।

सूत्रधार—नन्वमुमेव तावच्चन्द्रातपनक्षत्रग्रहक्रौञ्चहंससप्तच्छदकुमुदकोकनदकाशकुसुमपरागधवलितदिङ्मण्डलं स्वादुजलजलाशयं शरत्स-

---

जगत्प्रभवस्थितिनिरोधप्रभविष्णुना = सकलजगतः यः प्रभवः, उत्पत्तिः, स्थितिः जीवनम्, निरोधः विनाशः, तत्प्रभविष्णुना = तत्समर्थेन, विष्णुना, अनयोः कुरुपाण्डवराजपुत्रयोः=धृतराष्ट्रपुत्रपाण्डुपुत्रयोः, आहवकल्पान्तानलप्रशमहेतुना = आहवं, कल्पान्तानलः प्रलयाग्निरिव, उपमितं व्याघ्रादिभिरिति समासः। तस्य, प्रशमहेतुना शान्तिकारणेन, कंसारिणा = कंसरिपुणा, स्वयं सन्धिकारिणा—स्वेनैव सन्धेः कारयित्रा, दूतेन, भवता,' इति शेषः। अद्य अनुगृहीतम् इदं भरतकुलं= युधिष्ठिरवंशः, सकलं = सम्पूर्णं, राजचक्रं च = क्षत्रियव्रजश्च, क्षत्रियसमुदाय इत्यर्थः, 'चक्रः कोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः' इति मेदिनी। इत्यन्वयः।

पारिपार्श्विकः = सूत्रधारपार्श्वस्थः।

सूत्रधारस्य पार्श्वे यः प्रकरोत्यमुना सह। काव्यार्थसूचनालापं स भवेत्पारिपार्श्विकः॥

इति वचनात्। कतममिति—हेमन्तादिषु एतेषु समयेषु सत्सु कः समयः मम गानयोग्य इत्यर्थः।

नन्वित्यनेनानुज्ञां सूचयति। 'ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे' इति विश्वः। चन्द्रातपनक्षत्रग्रहक्रौञ्चहंससप्तच्छदकुमुदकोकनदकाशकुसुमपरागधवलितदिङ्मण्डलम् = चन्द्रः, आतपः, प्रकाशः, 'प्रकाशोद्योत आतप' इत्यमरः, नक्षत्रम् = अश्विन्यादयः, ग्रहः = सूर्यः क्रौञ्चः = क्रुङ्, कराकुल इति ख्यातः। हंसः, एषां द्वन्द्वः।

---

रक्षा, और संहार में समर्थ विष्णु भगवान् ने इस भरत वंश तथा समग्र राज समूह को अनुगृहीत किया है कि ये इन कुरु और पाण्डु के राजकुमारों की संग्राम रूपी प्रलयकाल की आग बुझाने के लिए स्वयं दूत बनकर सन्धि कराने की चेष्टा कर रहे हैं। अच्छा तो फिर भाई [ सहचर ] नटों के साथ साङ्गोपाङ्ग सङ्गीत प्रारम्भ क्यों नहीं करते।

पारिपार्श्विक— अच्छा किस ऋतु के आधार पर ।

सूत्रधार—इसी शरदृतु के आधार पर जिसमें चन्द्रमा की किरणें, तारकमण्डलो, कराकुल और हंसों के कुल से तथा छितौन, कुमुद, कमल और काश के फूलों के पराग

समयमाश्रित्य प्रवर्त्यतां संगीतकम्। तथा ह्यस्यां शरदि,

सत्पक्षा मधुरगिरः प्रसाधिताशामदोद्धतारम्भाः।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥ ६ ॥

पारिपार्श्विक—( ससम्भ्रमम्। ) भाव शान्तं पापम्। प्रतिहतममङ्गलम्।

---

सप्तच्छदः=सप्तपर्णः, छतिमन इति प्रसिद्धः। कुमुदम्=कैरवम् 'सिते कुमुदकैरवे' इत्यमर.। कोकनदं रक्तोत्पलम्, काशकुसुमम्=तृणविशेषपुष्पम् एतेषां द्वन्द्वः तेषां परागः। चन्द्रातपनक्षत्रग्रहकौञ्चहंसाश्च सप्तच्छदकुमुदकोकनदकाशकुसुमपरागश्चेति पुनर्द्वन्द्वः। तैः धवलितम् दिङ्मण्डलम् दिशामण्डलम् यस्मिन् तम्। एतस्य शरत्समयेऽन्वयः। स्वादु=मधुरं जलं यस्मिन् असौ स्वादुजलः स जलाशयः यस्मिन् त शरत्समयम् शरदृतुकालम्, आश्रित्य आधारं कृत्वा, प्रवर्त्यतां, सङ्गीतकं=विधीयतां गीतम्।

अन्वय—कालवशात्, सत्पक्षाः, मधुरगिरः, प्रसाधिताशाः, मदोद्धतारम्भाः, धार्तराष्ट्राः मेदिनीपृष्ठे. निपतन्ति ॥ ६ ॥

प्रबन्धप्रतिपाद्यस्य बीजं श्लेषेणाह—सत्पक्षा इति। कालवशात्=शरत्प्रभावात् पक्षे मृत्युवशात्, 'कालो मृत्यौ महाकाल' इति मेदिनी। सत्पक्षा.=उत्तमच्छदाः, पक्षे उत्तमसेनावन्तः, मधुरगिरः=मधुरशब्दाः, पक्षे उत्तमवाच., प्रसाधिताशाः=भूषितदिशा. पक्षे स्वायत्तीकृतदिङ्मण्डलाः, मदोद्धतारम्भाः=मदेनोत्कटव्यवसायाः पक्षे अहङ्कारेणोत्कटाचारा धार्तराष्ट्राः=हंसविशेषाः, पक्षे दुर्योधनादयः, मेदिनीपृष्ठे=पृथ्वीतले, निपतन्ति=मानससरस आगच्छन्ति पक्षे विनिपातं प्राप्नुवन्ति, मृत्युमुखं प्रपद्यन्त इत्यर्थः। भारतसङ्ग्रामे दुर्योधनविनाशः स्यादिति भावः। अत्र शरद्वर्णनस्य प्राकरणिकत्वान्नश्लेषालङ्कार' उभयार्थयोरवाच्यत्वान्नदीपकं नवोपमाध्वनिः काव्यस्य वस्तुध्वनिपरकत्वादतः शब्दशक्तिमूलको वस्तुध्वनिः। आर्याछन्दः ॥ ६ ॥

ससम्भ्रमं=सोद्वेगम्। भाव=विद्वन्। शान्तं पापमिति समुदाय. अवक्तव्येर्थे।

---

से दिशायें सफेद हो गई हैं एवं नदी और तालावों का जल भी मीठा हो गया है, सङ्गीत प्रारम्भ कीजिये क्योंकि इस शरत्काल में.—

सुन्दर पक्ष सम्पन्न, मधुरालापी, तथा हर्ष के कारण शीघ्र गामी राजहंस दिशाओं को सुशोभित करते हुए समय पाकर भूतल पर उतर रहे हैं अथवा अच्छे २ प्रभावशाली राजाओं की सहायता से सम्पन्न, वाणीमात्र से मधुर भाषी [ किन्तु हृदय तो हलाहल विष से भरा हुआ है ] सम्पूर्ण दिशाओं पर अधिकार जमाने वाले तथा पागल की भाँति कार्य्य करने वाले अर्थात् उच्छृङ्खल स्वभाव के धृतराष्ट्रपुत्र ( कौरव ) मृत्यु के वश होकर पृथ्वी पर गिर रहे हैं ॥ ६ ॥

**पारिपार्श्विक**—( व्याकुल होकर ) हैं! यह क्या भाई ऐसा न कहो अमङ्गल का नाश हो।

सूत्रधारः—( सवैलक्ष्यस्मितम् ) मारिष, शरत्समयवर्णनाशंसया हंसा धार्तराष्ट्रा इति व्यपदिश्यन्ते ।

पारिपार्श्विकः—न खलु न जाने । किन्त्वमङ्गलाशंसयाऽस्य वा वचनस्य यत्सत्यं कम्पितमिव मे हृदयम् ।

सूत्रधारः—मारिष ननु सर्वमेवेदानीं प्रतिहतममङ्गलं स्वयम्प्रतिपन्नदौत्येन सन्धिकारिणा कंसारिणा । तथा हि—

निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।

---

शान्तं पापमनिर्देश्य इति वचनात् ।

मारिष=आर्य !, 'आर्ये मारिषमार्षकौ' इति शब्दार्णवः । शरत्समयवर्णनाशंसया=शरत्कालकथनप्रसङ्गेन, हंसा धार्तराष्ट्रा इति व्यपदिश्यन्ते=धार्तराष्ट्रपदेन हंसाः गृह्यन्त इत्यर्थः । तदा कथमुच्यते शान्तं पापमिति ।

न खलु न जाने=जानाम्येव, नञ्द्वयेन ज्ञानमेव बोध्यते । खलुशब्दो वाक्यालङ्कारे । व =युष्माकम् अस्य वचनस्य अमङ्गलाशंसया=अशिवकथनेन, अशिवार्थप्रतिपादकत्वेनेत्यर्थः । यत्सत्यमित्यसम्भाव्यार्थसूचकम् तस्य च कम्पनक्रियायामन्वयः । तथाच असम्भाव्यकम्पनाश्रयमिव मम हृदयं जातमिति भावः ।

स्वयम्प्रतिपन्नदौत्येन=स्वयमेव प्रतिपन्नम् अङ्गीकृतं दौत्यम् दूतता प्रेष्यक्रिया येन तेन, सन्धिकारिणा=सन्धिकारकेण कंसारिणा=कृष्णेन, इदानीं, ननु= निश्चयं सर्वमेव=निखिलमेव अमङ्गलं, प्रतिहतम्=विनाशितमित्यन्वयः ।

*अन्वय*—अरीणाम्, प्रशमात्, निर्वाणवैरदहनाः, पाण्डुतनयाः, माधवेन सह, नन्दन्तु, रक्तप्रसाधितभुवः, क्षतविग्रहाः, च, सभृत्याः, कुरुराजसुताः, स्वस्थाः, भवन्तु ॥

निर्वाणेति—निर्वाणवैरदहनाः=वैर दहन इवेति वैरदहनः, निर्वाणः=अस्तंगतः वैरदहनः येषां, तत्र हेतुः अरीणां प्रशमादिति तथा च शत्रूणां शान्तिप्रापणा-

---

सूत्रधार—( लज्जित सा कुछ हँसता हुआ ) आर्य्य ! मैंने शरद्वर्णन के प्रकरण में धार्तराष्ट्र का प्रयोग राज हंसों के लिये किया है फिर आप मुझे निषेध क्यों कर रहे हैं ।

पारिपार्श्विक—भाई ! ऐसा नहीं कि मैंने समझा ही न हो किन्तु सम्भावना न होने पर भी अमङ्गल प्रतिपादक वाक्य की आशङ्का ही से मेरा हृदय दहल सा गया है ।

सूत्रधार—आर्य्य ! इस समय श्रीकृष्ण भगवान् ने सन्धि कराने के लिये दूतभाव स्वीकार कर सम्पूर्ण विघ्नों को शान्त कर दिया है क्योंकि —

सन्धि हो जाने के कारण शत्रुओं के साथ पाण्डुपुत्र, जिनका अग्निरूपी विद्वेष शान्त हो

लाक्षागृहानलविषान्नसभाप्रवेशैः
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ ७ ॥

( नेपथ्ये । साधिक्षेपम् । )

आः दुरात्मन्वृथामङ्गलपाठक शैलूषापसद,

---

दित्यर्थः, पाण्डुतनयाः = पाण्डुपुत्राः युधिष्ठिरप्रभृतयः, माधवेन = कृष्णेन, सह = साकं, 'साक सत्रा समं सहे'त्यमरः। नन्दन्तु = आनन्द प्राप्नुवन्तु, रक्तप्रसाधितभुवः = रक्तेन अनुरागेण। भावे क्तः। प्रसाधिता अधीनीकृता, भूः पृथ्वी यैः ते रक्तप्रसाधितभुवः, अत एव क्षतविग्रहाः = विनष्टकलहाः, 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः। सभृत्याः = सदासाः, कुरुराजसुताः = दुर्योधनप्रभृतयः, स्वस्थाः = सुस्थिताः, भवन्तु। पक्षे, अरीणां प्रशमात् शत्रूणां विनाशात् निर्वाणवैरदहनाः, पाण्डुतनयाः माधवेन सह नन्दन्तु। रक्तप्रसाधितभुवः = रुधिरव्याप्तभूमयः, क्षतविग्रहाः = छिन्नशरीराः, 'शरीरं वर्ष्म विग्रह' इत्यमरः। कुरुराजसुताः, स्वस्थाः=मृताः, 'सुस्थिते च मृते स्वस्थ' इति विश्वः। भवन्तु=सन्तु। अत्र रक्तप्रसाधितक्षतविग्रहाद्यनेकश्लिष्टवचसः सत्त्वात् द्वितीय पताकास्थानम्। तदुक्तं दर्पणे—

वचः सातिशयं श्लिष्टं नानाबन्धसमाश्रयम्।
पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम् ॥ इति।

नाटके पताकास्थानकमवश्यं योज्यं तदुक्तं तत्रैव—

पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि ॥ इति।

केचित्तु—द्व्यर्थता यत्र वाक्यानां श्लेषेणार्थः प्रतीयते।
शब्दभङ्गयानुपात्तोऽपि श्लेषगण्डः स उच्यते ॥

इति भरतवचनादत्र श्लेषगण्डाख्यं नाटकाङ्गमिति वदन्ति। अत्र वैरदहनेत्यत्रोपमाऽलङ्कारः। रक्तप्रसाधितेत्यत्र वस्तुध्वनि। वसन्ततिलका छन्दः। ज्ञेयं वसन्ततिलकं त भ जा ज गौ ग इति लक्षणात् ॥ ७ ॥

नेपथ्ये साधिक्षेपम् = रङ्गभूमौ सतिरस्कारम्।

वृथामङ्गलपाठक = मुधामङ्गलवाचक ? शैलूषापसद = नटाधम ?

अन्वयः—लाक्षागृहानलविषान्नसभाप्रवेशैः, नः, प्राणेषु, वित्तनिचयेषु, च, प्रहृत्य,

---

हो चुका है, श्रीकृष्ण भगवान् के साथ प्रसन्न रहें और विग्रह विहीन कौरव, जिन्होंने प्रेम से समस्त भूमण्डल पर अधिकार कर लिया है, अपने कर्मचारियों के साथ स्वस्थ रहें ॥७॥

( नेपथ्य में बड़बड़ाते हुए ) अरे! पापी दुष्ट! व्यर्थ मङ्गलपाठकारी! नटों में नीच

प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशा-
न्स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥ ८ ॥
( सूत्रधारपारिपार्श्विकावाकर्णयत. । )

पारिपार्श्विक —भाव, कुत एतत् ।

सूत्रधार —( पृष्ठतो विलोक्य । ) अये, कथमयं वासुदेवगमनात्कुरु-सन्धानममृष्यमाणः पृथुललाटतटघटित्तविकटभ्रूकुटिना दृष्टिपातेनापिब-

---

पाण्डववधूपरिधानकेशान्, आकृष्य, धार्तराष्ट्राः, मयि, जीवति, ( सति ) स्वस्थाः भवन्ति ॥ ८ ॥

यदुक्तं सूत्रधारेण कुरुराजसुताः स्वस्था भवन्त्विति तन्मयि जीवति न भवितुमर्हतीत्याह—लाक्षागृहेति । लाक्षागृहानलविषान्नसभाप्रवेशैः—लाक्षानिर्मितं गृहं लाक्षागृह । मध्यमपदलोपिसमास. । तस्मिन् यः अनलः अग्निरितिलाक्षागृहानल', विषेण सम्मिश्रमन्नं विषान्न, मध्यमपदलोपिसमासः । सभाप्रवेशः संयतिप्रवेशः, द्यूतार्थमिति भावः । एषां द्वन्द्वः तै, न.=अस्मान् वित्तनिचयेषु=धनसमूहेषु प्राणेषु च=असुषु च, उभयत्र सप्तम्यर्थोऽवच्छेदकत्वम् तथाच धनसमूहावच्छेदेन प्राणावच्छेदेन च अस्मान् प्रहृत्येत्यर्थः। प्रहृत्य=निहत्य जतुगृहाग्निविषसम्पृक्तलड्डुकाभ्यां प्राणेषु प्रहारः, द्यूतार्थं सभाप्रवेशेन धनेषु प्रहार इति भावः। पाण्डववधूपरिधानकेशान्=पाण्डुपुत्रस्त्रीवस्त्रकचान्, आकृष्य, धार्तराष्ट्रा.=धृतराष्ट्रपुत्राः मयि=भीमे, जीवति=अनति प्राणान् धारयति सतीत्यर्थः। स्वस्थाः=सुस्थिताः, भवन्ति। न कथमपि दुर्योधनादयः स्वस्था भविष्यन्तीति भावः। वसन्ततिलका छन्दः ॥ ८ ॥

कुरुसन्धानममृष्यमाण.=कुरुभिः सन्धिमसहमानः, पृथुललाटतटघटितविकटभ्रूकुटिना=पृथु महत् यल्ललाटं तस्य तटे घटिता रचिता विकटभ्रूकुटिः, येन, तेन।

---

जिन धृतराष्ट्र के पुत्रों ने, लाख निर्मितमहल, विष मिश्रित आहार तथा द्यूत क्रीडार्थ सभागृह—प्रवेशों के द्वारा हमलोगों के प्राण और धन के अपहरण की चेष्टा करके द्रौपदी के वस्त्र और केशों को खींचा है वे मेरे जीते रहते हुए स्वस्थ हों ? कदापि नहीं।

( सूत्रधार और पारिपार्श्विक दोनों सुनते हैं )

**पारि०**—यह कहाँ से ·· ·?

**सूत्रधार**—(पीछे की ओर देखकर ) अरे। यह क्या !! श्रीकृष्ण भगवान् के चले जाने पर कौरवसन्धि का सहन न करके [क्रुद्ध होकर विशाल ललाट तक भौंह चढ़ाकर

श्निव नः सर्वान्सहदेवेनानुगम्यमानः क्रुद्धो भीमसेन इत एवाभिवर्तते। तन्न युक्तमस्य पुरतः स्थातुम्। तदित आवामन्यत्र गच्छावः।

( इति निष्क्रान्तौ। )

प्रस्तावना।

( ततः प्रविशति सहदेवेनानुगम्यमानः क्रुद्धो भीमसेनः। )

भीमसेन.—आः दुरात्मन् वृथामङ्गलपाठक शैलूषापसद' ( 'लाक्षागृहानल-( १।८ ) इत्यादि पुनः पठति। )

सहदेव—( सानुनयम्। ) आर्य मर्षय मर्षय। अनुमतमेव नो भरत-

---

हृदं दृष्टिपातेनेत्यस्य विशेषणम्। पृथु वहद्विशालं पृथुलं महः' दित्यमर.। दृष्टिपातेन=विलोकनेन इत एव=इहैव, सार्वविभक्तिकस्तसिल्।

प्रस्तावना = आमुखम् तदुक्तम्—

सूत्रधारेण सहिताः सलापं यत्र कुर्वते।
नटी विदूषको वाऽपि पारिपार्श्विक एव वा।
आमुखं नाम तस्यैव सैव प्रस्तावना मता। इति।

प्रस्तावना च पञ्चधा तदुक्तं दर्पणे—

उद्धात्यकः कथोद्धातः प्रयोगातिशयस्तथा।
प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदा॥ इति।

अत्र निर्वाणवैरदहना इति सूत्रधारोक्तवाक्यस्यार्थमादाय भीमस्य प्रवेशात्कथोद्धातरूपा प्रस्तावना तदुक्तम्—

सूत्रधारस्य वाक्य वा समादायार्थमेव वा।
भवेत् पात्रप्रवेशश्चेत्कथोद्धात. स उच्यते॥ इति।

पटाक्षेपेण पात्रप्रवेशोऽतः प्रविशतीत्युच्यते।

आर्य=श्रेष्ठ! मर्षय=क्षमस्व। अस्य, भरतपुत्रस्य=नटस्य, वचनम्=वाक्यम्,

---

दृष्टिप्रक्षेप से हम लोगों को पान कर जाते हुए की भाँति, भीमसेन इधर ही को आरहे हैं पीछे पीछे सहदेव भी हैं। अत. इनके सामने खडा रहना अच्छा नहीं। आओ, यहाँ से दूसरे स्थानपर चलें।

( यह कहकर दोनों चले जाते हैं )

इति प्रस्तावना।

( इसके अनन्तर क्रुद्ध भीमसेन और उनके पीछे सहदेव प्रवेश करते हैं )

भीमसेन—अरे दुष्ट! दुराचारी!! व्यर्थ मङ्गलपाठकारी, नटनीच! ( 'लाक्षा गृहानल' श्लोक पुनः पढते हैं )

सहदेव—( विनीतभाव से ) आर्य्य! क्षमा, क्षमा, इस नट का कथन हम लोगों के

पुत्रस्यास्य वचनम् । पश्य । ( 'निर्वाणवैरदहना' ( १।७ ) इति पठित्वान्यथाभिनयति । )

( भीमसेनः—( सोपालम्भम् । ) न खलु न खल्वमङ्गलानि चिन्तयितुमर्हन्ति भवन्तः कौरवाणाम् । सन्धेयास्ते भ्रातरो युष्माकम् ।

सहदेवः—( सरोषम् । ) आर्य,

धृतराष्ट्रस्य तनयान्कृतवैरान्पदे पदे ।
राजा न चेन्निषेद्धा स्यात्कः क्षमेत तवानुजः ॥ ९ ॥

भीमसेन —एवमिदम् । अत एवाहमद्यप्रभृति भिन्नो भवद्भ्यः । पश्य ।

---

नः = अस्माकम् अनुमतमेवेत्यन्वय । अनुमतौ हेतुश्च नटकर्तृकमरणसूचकाभिनयः ।

ते = दुर्योधनादयः, भ्रातरः, सन्धेयाः = संश्लेष्याः ।

अन्वय —राजा चेत् , निषेद्धा. न स्यात् ( तदा ) पदे पदे, कृतवैरान् , धृतराष्ट्रस्य तनयान् , कः, क्षमेत ॥ ९ ॥

युधिष्ठिरानुरोधादेव न किमपि करोमि सन्धिस्तुस्तु नेत्याह—धृतराष्ट्रस्येति । राजा = युधिष्ठिरः, चेत् = यदि, निपेद्धा = निपेधकः, न स्यात् । तदा इत्यस्याध्याहारः । तदा तव = भीमस्य, अनुजः = अवरजः, कः धृतराष्ट्रस्य = कुरुराजस्य, तनयान् = पुत्रान् , पदे पदे = प्रतिस्थानम् , कृतवैरान् = कृतविद्वेषान् , 'वैरं विरोधो विद्वेषः' इत्यमरः । क्षमेत = सहेत, न कोऽपीत्यर्थः । अत्र हेतोर्वाक्यार्थत्वेन काव्यलिङ्गमलङ्कारः । पथ्यावक्त्र छन्दः । युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम् ॥ ९ ॥

अद्यप्रभृति = अद्यारभ्य, भवद्भ्यः = युधिष्ठिरादिभ्यः, भिन्नः = पृथक् , भवदीयवचनानि न कर्तव्यानि मयेत्यर्थः । अत्र भेदाख्यं नाटकाङ्गं, तदुक्तम्—'भेदः संहतिभेदनम् ।' इति ।

---

अनुकूल ही है । देखिये.—( निर्वाणवैरदहनाः इस पद्य को पढकर दूसरे प्रकार का भावाभिनय करते हैं अर्थात् कौरव धराशायी हों इस भाव का अभिनय करते हैं )

**भीमसेन**—( निन्दायुक्त वाक्य के साथ ) आपलोग कौरवों के अमङ्गल की कामना कदापि नहीं कर सकते आप लोगों के वे भाई तो सन्धि के पात्र हैं ।

**सहदेव**—( क्रोध पूर्वक ) आर्य्य !

धृतराष्ट्र के पुत्र पग पग पर शत्रुता करते है । यदि बडे भ्राता [ युधिष्ठिर ] निषेध न करें तो आप के कनिष्ठ भ्राताओं में से कौन कर सकता है ? ॥ ९ ॥

**भीमसेन**—यह बात ! अत आज से मैं भी आप लोगों से पृथक हूँ । देखोः—कौरवों के

प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम्।
जरासंधस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा सधिं भीमो विघटयति यूयं घटयत ॥ १० ॥

सहदेव—( सानुनयम्। ) आर्य, एवमतिसभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः।

अन्वय—मम, शिशोः, एव, यत्, कुरुभिः, वैरम्, प्रवृद्धम्, तत्र, आर्यः, न, हेतुः, न भवति, किरीटी, न च युवाम्, जरासन्धस्य, विरूढम्। उरःस्थलम्, इव, भीमः, क्रुधा, पुनरपि, सन्धिम्, विघटयति, यूयम्, घटयत ॥ १० ॥

प्रवृद्धमिति। मम=भीमस्य, शिशोरेव=बालकस्यैव यत् कुरुभिः वैरम्=विरोधः, प्रवृद्धम्=अधिकं जातम्, तत्र=तस्मिन् आर्यः=युधिष्ठिरः, न हेतुः=न कारणम्, भवति, न, भवति, किरीटी=अर्जुनः, न च युवाम्=नकुलसहदेवौ हेतू, जरासन्धस्य=एतन्नामकस्य राज्ञः, विरूढम् उरःस्थलमिव=भिन्नं वक्षःस्थलं इव, 'उरो वत्सं च वक्षश्च'इत्यमरः। जरासन्ध प्रसवकाले द्विधाभूत आसीत् जरानामकराक्षस्या द्वयोः सन्धिः कृतो भीमश्च पुनः युद्धे द्विधा कृतवान् तेन जरासन्धस्य मृत्युरिति भावः। भीमः=वृकोदरः, क्रुधा=क्रोधेन, पुनरपि=भूयोऽपि सन्धि=सश्लेषम्, विघटयति=वियोजयति, यूय=युधिष्ठिरादयः, घटयत=योजयत। मया सन्धिविघातः कार्य इति भावः। अत्रोपमालङ्कारः। शिखरिणीछन्दः। लक्षणमुक्तं प्रथमश्लोके ॥ १० ॥

सानुनयम्=ससान्त्वनम्। गुरुः=युधिष्ठिरः 'गुरु गीष्पतिपित्राद्यौ' इत्यमरः।

साथ मेरी शत्रुता, जो शैशवकाल से ही बढ़ रही है उसमें न तो ज्येष्ठ भ्राता, न अर्जुन और तुम दोनों [ सहदेव और नकुल ] कारण हो। [ देखो ] (१)जरासन्ध के विशाल वक्षस्थल की भाँति इस सन्धि को क्रोध के साथ यह भीम विच्छेद करता है तुम लोग [ भले ही ] सन्धि करो ॥ १० ॥

सहदेव—( विनय पूर्वक ) आर्य्य! कदाचित् आप के इस प्रकार अधिक क्रुद्ध होने से बड़े भ्राता को क्षोभ न हो।

( १ ) जरासन्ध—जन्म के समय इसका शरीर दो भागों में विभक्त था। यह प्रकृति-विरुद्ध होने के कारण परित्यक्त कर दिया गया। इसके दोनों भागों को एकत्रित करके जरा राक्षसी ने सी दिया जिससे पुनः यह एकाकार हो गया इसी से इसका नाम जरासन्ध पड़ गया इसे भीमसेन ने भगवान् श्रीकृष्ण के सङ्केत मात्र से पुनः दो भागों में विभक्त कर दिया था।

भीमसेन—किं नाम कदाचित्खिद्यते गुरुः ? । गुरुः खेदमपि जानाति । पश्य ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्द्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ ११ ॥

---

अत्र, आदिपदग्राह्यजेष्ठभ्रातरि गुरुशब्दः । खेद = परिदैन्यम् , अपि, जानाति, न जानातीत्यर्थः ।

अन्वय —तथाभूताम् , पाञ्चालतनयाम्, नृपसदसि, दृष्ट्वा, वने, व्याधैः, सार्द्धम्, वल्कलधरैः, सुचिरम् , उषितम् , विराटस्य, आवासे, अनुचितारम्भनिभृतम् , स्थितम् , मयि, खिन्ने ( सत्यपि ) गुरुः, अद्यापि, कुरुषु, खेदम् , न भजति ॥ ११ ॥

खेदकारणे सत्यपि युधिष्ठिरस्य खेदाभाव दर्शयति तथाभूतामिति । तथाभूतां= रजस्वलां, आकृष्टकेशवस्त्राञ्च रजस्वलादिपदस्य वचनानर्हत्वात् रजस्वलादिपदेन न निर्देश. कृतः । पाञ्चालतनयां = द्रौपदीम् , नृपसदसि = राजसभायां दृष्ट्वा=विलोक्य स्त्रीगतदु.खदर्शनेन नितरां खेदयोग्यता दर्शिता । आत्मनि, भ्रातरि च दु.ख दर्शयति-वने इति । वने = अरण्ये, व्याधै. = मृगयुभिः, सार्द्धम् = सह, वल्कलधरैः = त्वग्धरैः, अस्माभिरित्यर्थः । सुचिरं = बहुकालं, उषितम् = निवासः कृत , विराटस्य = विराटनामकराजस्य, आवासे = गृहे, अनुचितारम्भनिभृतं = अनुचितारम्भेण, द्यूतसाहाय्यपाचकताद्यनुष्ठानेन निभृतं = गुप्त यथा स्यादेवम् , स्थितम् = स्थितिः कृता, अत्रैव दृष्ट्वेत्यस्य सम्बन्ध' । परे तु स्थितमिति भावक्तान्तद्वितीयान्तं स्वीकृत्य खेदक्रियया भजनक्रियया च समानकर्तृकत्व स्थापयन्ति । 'एवम्भूतेन खेदकारणेन, मयि = भीमे, खिन्ने = सखेदे, सत्यपीतिशेषः । गुरु. = आर्यो युधिष्ठिर , अद्यापि = साम्प्रतमपि, कुरुषु = धृतराष्ट्रपुत्रेषु, खेदं = ताप, न भजति = न करोति । एवञ्च खेदाभावदर्शनेन युधिष्ठिरस्य खेदाज्ञान दर्शितम् । अत्र खेद प्रति

---

भीमसेन—( हँसते हुए ) क्यों ! बडे भैयाक्षुब्ध होंगे ? ( क्रोध प्रगट करते हुए ) प्रिय, क्या बडे भैया को क्षुब्ध होने आता है ? देखो —

ज्येष्ठ भ्राता राजसभा में द्रौपदी की [ केशाकर्षणरूप ] दुर्दशा को, वल्कल [ भूर्जपत्र ] वस्त्र धारण करते हुए वन में कोलभिल्लों के साथ अधिक समय के निवास को, तथा विराट के यहाँ हास्यास्पद कार्य्य में नियुक्त होकर लुक छिपकर जीवन व्यतीत करने को देखकर मेरे खिन्न होनेपर भी कौरवों के विषय में क्षुब्ध नहीं हुए और मुझसे क्षुब्ध होंगे ? ॥ ११ ॥

तत्सहदेव, निवर्तस्व । एवं चापि चिरप्रवृद्धामर्षोद्दीपितस्य भीमस्य वचनाद्विज्ञापय राजानम् ।

सहदेव'—'आर्य, किमिति ।

भीमसेन'—

युष्मच्छासनलङ्घनांहसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैक दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥ १२ ॥

तथाभूतपञ्चालतनयादर्शकरूपैककारणस्य सत्त्वेऽपि खले कपोतन्यायाद्भने व्याधेः सार्द्धमित्याद्यनेककारणान्तराणामुपादानात्समुच्चयालङ्कारः । शिखरिणीछन्द. ॥ ११ ॥

तत् = तस्मात् सहदेव ! निवर्तस्व = निवृत्तो भव । चिरप्रवृद्धामर्षोद्दीपितस्य = चिरात् प्रवृद्धो य आमर्षः क्रोधः तेन उद्दीपितस्य प्रज्वलितस्य ।

अन्वय — युष्मच्छासनलङ्घनांहसि, मग्नेन, मया, स्थितम् , नाम, स्थितिमताम् , अनुजानाम् , मध्ये, विगर्हणा, प्राप्ता नाम, क्रोधोल्लासितशोणितारुणगदस्य, कौरवान् , उच्छिन्दतः, मम, अद्य, एकम् , दिवसम् , गुरुः, न, असि, अहम् , तव, विधेयः, न ॥ १२ ॥

विज्ञापनीयमेवाह—युष्मच्छासनेति । युष्मच्छासनलङ्घनांहसि = भवदीयाज्ञोल्लङ्घनपापे, मग्नेन = निमग्नेन, मया = भीमेन, स्थितम् , नामेति प्राकाश्ये, इदं प्रकाशयामीत्यर्थ. । स्थितिमताम् = जेष्ठाज्ञापालनरूपमर्य्यादावतां, अनुजानाम् = कनिष्ठभ्रातृणाम् अपि, मध्ये अन्तरे 'न्याय्यावलग्नपोर्मध्यमन्तरे चाधमे त्रिपु' इति विश्वः । विगर्हणा = निन्दा, प्राप्ता = समासादिता, नाम–सम्भावयामि यद्विगर्हणा प्राप्तेति । क्रोधोल्लासितशोणितारुणगदस्य = क्रोधेन, कोपेन, उल्लासिता, उत्थापिता, शोणितेन, रुधिरेण, अरुणा, रक्ता गदा येन, सः तस्य,—कौरवान् = धार्तराष्ट्रान् , उच्छिन्दतः = निःशेषयत., मम = भीमस्य, अद्य = इदानीम् , इदानीमद्य, इति

अत सहदेव, लौट जाओ, और चिरकाल के सञ्चित क्रोध से उद्दीप्त भीम की ओर से राजा युधिष्ठिर से कहो ।

सहदव—आर्य्य, क्या कहूँ ?

भीमसेन—इस प्रकार सूचित करो—'आप के आज्ञोल्लङ्घनरूपी जल में डूबता हुआ मैं सम्भावना करता हूँ कि आज्ञापालनरत भाइयों के बीच निन्दनीय समझा जाऊँ । क्रोध के साथ रुधिर से लिप्त गदा को घुमाते हुए तथा कौरवों का संहार करते हुए आज एक दिनके लिए न तो आप मेरे ज्येष्ठ भ्राता हैं और न मैं आपका आज्ञाकारी कनिष्ठ भ्राता' ॥१२॥

( इत्युद्धतं परिक्रामति । )

सहदेव.—( तमेवानुगच्छन्नात्मगतम् । ) अये, कथमार्यः पाञ्चाल्याश्चतुःशालकं प्रति प्रस्थितः । भवतु तावदहमत्रैव तिष्ठामि ( इति स्थितः । )

भीमसेन'—( प्रतिनिवृत्यावलोक्य च । ) सहदेव, गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यायुधागारं प्रविश्यायुधसहायो भवामि ।

सहदेवः—आर्य, नेदमायुधागारम् , पाञ्चाल्याश्चतुःशालकमिदम् ।

भीमसेन'—( सवितर्कम् । ) किं नाम नेदमायुधागारम् , पाञ्चाल्याश्चतु'शालकमिदम् । ( विचिन्त्य, सहर्षम् । ) आमन्त्रयितव्यैव मया पाञ्चाली । ( सप्रणयं सहदेवं हस्ते गृहीत्वा । ) वत्स, आगम्यताम् । यदार्यः

---

कलापसूत्रेण निष्पन्नम् । एक, दिवसम् = दिनम् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया गुरुः = ईश्वरः शासक इत्यर्थः । न, असि, अहं = भीमः तव = युधिष्ठिरस्य, विधेयः = अनुशासनीयः, न । भवदाज्ञामननुरुध्य कौरवान् विनाशयिष्यामीति युधिष्ठिरम्प्रति सन्देश इति । अत्र कौरवविनाशरूपकार्यस्य, हेतोर्गदोल्लासस्य निन्दाप्राप्तिरूपाऽकार्यस्य हेतोर्ज्येष्ठभ्रातृशासनोल्लङ्घस्य कथनात् परिकरनामकः सन्धि. । तदुक्तं भरतेन—'कार्याकार्यहेतूनामुक्तिः परिकरो मतः ॥' इति । शार्दूलविक्रीडित छन्दः, लक्षणमुक्त द्वितीयश्लोके ॥ १२ ॥

पाञ्चाल्याः = द्रौपद्याः, चतु'शालम् = अन्योन्याभिमुखशालाचतुष्टयगृहम् ।

गुरुम् = युधिष्ठिरम्, अनुवर्तस्व = अनुसर । आयुधागारं = शस्त्रगृहम् , प्रविश्य = गत्वा, आयुधसहायः = गृहीतशस्त्र. ।

सवितर्कम् = सानुमानम् । मया, पाञ्चाली = द्रौपदी, आमन्त्रयितव्या = विचारयि-

---

( अहङ्कार के साथ घूमते हैं )

सहदेव—( भीम के पीछे जाते हुए मन ही मन ) अरे, क्यों, आर्य्य कृष्णा [ द्रौपदी ] के सदन में पहुँच गए अच्छा, मैं यहीं ठहर जाता हू ( बैठ जाते है ) ।

भीमसेन—( लौटकर और देखकर ) सहदेव, जाओ बडे भैया की आज्ञा का पालन करो । मैं भी शस्त्रागार में जाकर सहायतार्थ शस्त्र लेता हू ।

सहदेव—आर्य्य, यह शस्त्रागार नहीं यह तो कृष्णा का आवास है ।

भीम—( भ्रमपूर्वक ) क्यों यह शस्त्रागार नहीं ? क्यों यह द्रौपदी का आवास है ? ( सोचकर हर्ष पूर्वक ) कृष्णा से मुझे वार्तालाप करना ही है ( प्रेम के साथ सहदेव का हाथ पकडकर ) अनुज, आओ । भाई, महाराज कौरवों के साथ सन्धि की इच्छा करते

कुरुभि. संधानमिच्छन्नस्मान्पीडयति तद्भवानपि पश्यतु।

( उभौ प्रवेशं नाटयत । भीमसेन सक्रोधं भूमावुपविशति । )

सहदेव —( ससंभ्रमम् । ) आर्य, इदमासनमास्तीर्णम्। अत्रोपविश्यार्यो-मुहूर्त्तं पालयतु कृष्णागमनम्।

भीमसेन —( उपविश्य स्मृत्वा । ) वत्स, कृष्णागमनमित्यनेनोपोद्घातेन स्मृतम्। अथ भगवान्कृष्णः केन पणेन सन्धिं कर्तुं सुयोधनं प्रति प्रहितः।

सहदेवः—आर्य, पञ्चभिर्ग्रामैः।

भीमसेन —( कर्णौ पिधाय, ) अहह, देवस्याजातशत्रोरप्ययमीदृशस्ते-

---

तव्या, तया साकं विचार. कर्तव्य इत्यर्थः। कुरुभि.=धृतराष्ट्रपुत्रैः, सन्धानम्=सन्धिम्।

ससम्भ्रम=सोद्वेगम् । आस्तीर्णम्=विस्तृतम् मुहूर्तम्=द्वादशक्षणा. 'ते तु मुहूर्तो द्वादशास्त्रियाम्' इत्यमरः। किञ्चित् कालमित्यर्थः। कृष्णागमनम्=कृष्णायाः, द्रौपद्या आगमनम्।

उपोद्घातेन=प्रकृतानुकूलचिन्तया, तदुक्तम्—

चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः। इति।

समानानुपूर्वीकपदप्रतिपाद्यतया कृष्णस्यागमनविषयकस्मरणेन तत्कर्तृकसन्धि-स्थापनरूपकार्यस्मरणेन सन्धिविषयकप्रश्न. क्रियत इति भाव.। भगवान्=ऐश्वर्या-दिमान् कृष्णः=माधवः केन, पणेन=मूल्येन, सन्धि=सन्धानम् कर्तुं=सम्पादयि-तुम्, सुयोधन प्रति=दुर्योधनाभिमुखम् प्रहितः=गतः, प्रहित इत्यस्य प्रेषित इत्यर्थस्तु न युक्त· स्वयप्रतिपन्नदौत्येनेत्यादिपूर्वग्रन्थविरोधात् नहि केनचित्प्रेपितः स्वयंदूतो भवितुमर्हति परप्रतिपन्नदौत्यात्।

अहहेति खेदद्योतक.। देवस्य=भगवत , अजातशत्रोः=अनुत्पन्नरिपोः, युधिष्ठिर-

---

हुए हमें जो जो कष्ट दे रहे हैं उसे तुम भी देख लो।

( घूम कर गृह में प्रवेश करने का अभिनय करते हैं भीमसेन क्रोध पूर्वक पृथ्वी पर बैठ जाते हैं )

**सहदेव**—( अत्यन्त शीघ्रता से ) आर्य्य, यह आसन बिछा हुआ है। यहाँ बैठ जाइये श्रीमान् कृष्णाके आगमन की प्रतीक्षा थोडे समय तक कर लें।

**भीम**—( बैठकर और स्मरण कर ) कृष्णागमन के प्रसङ्ग से यह स्मरण हो आया। भगवान् वासुदेव किस नियमपर सन्धि व्यवस्थापित करने के लिये सुयोधन के समक्ष गये हैं?

**सहदेव**—आर्य्य, पाँच ग्राम के लिये।

**भीम**—( कानों को बन्दकर ) कष्ट! कष्ट!! अजातशत्रु महाराज युधिष्ठिर का तेज

जोऽपकर्ष इति यत्सत्यं कम्पितमिव मे हृदयम् । ( परिवृत्य स्थित्वा । ) तद्वत्स, न त्वया कथितं न च मया भीमेन श्रुतम्—

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम् ॥ १३ ॥

( नेपथ्ये । )

समस्ससदु समस्ससदु भट्टिणी । ( समाश्वसितु समाश्वसितु भट्टिनी । )

सहदेव —( नेपथ्याभिमुखमवलोक्यात्मगतम् । ) अये, कथ याज्ञसेनी मुहुरुपचीयमानबाष्पपटलस्थगितनयना आर्यसमीपमुपसर्पति । तत्कष्टतरमापतितम् ।

---

स्येत्यर्थः । तेजोऽपकर्षः = प्रतापह्रानिः । यत्सत्यमिति समुदाय· असम्भाव्यार्थद्योतकः, तस्य च कम्पनक्रियायामन्वय , तथा च, असम्भाव्यकम्पनाश्रयमिव मे हृदयम् ।

अन्वय —अस्य, भूपतेः, यत् , तत् , ऊर्जितम्, अत्युग्रम्, क्षात्रम्, तेजः, अक्षैः, दीव्यता, अनेन, तदा, नूनम्, तत् अपि हारितम् ॥ १३ ॥

यतः पञ्चभिर्ग्रामैः सन्धि करोत्यतो जाने नास्य तेजोऽस्तीत्याह—यत्तदिति । अस्य भूपतेः = युधिष्ठिरस्य यत् तत् = प्रसिद्धम्, ऊर्जितम् = बलवत् , अत्युग्रम् = अतितीक्ष्णम्, क्षात्रं = क्षत्रियसम्बन्धि, तेजः = प्रतापः अक्षैः = द्यूतैः, दीव्यता = क्रीडता, अनेन = युधिष्ठिरेण, तदा = तस्मिन् काले, नून = निश्चयं, तत् = तेजः अपि, हारितम् = विनाशितम् । पथ्यावक्त्रं छन्द' ॥ १३ ॥

भट्टिनी = यद्यपि कृताभिषेकातिरिक्तराजपत्नी, 'देवी कृताभिषेकायाम् , इतरासु तु भट्टिनी, इत्यमरात् भट्टिनीत्युच्यते तथापि लक्षणया देव्यामपि भट्टिनीपदप्रयोगः ।

मुहुरुपचीयमानबाष्पपटलस्थगितनयना = पुनर्वर्द्धमानोष्माश्रुसमुदायाच्छन्ननेत्रा,

---

इस प्रकार क्यों कर क्षीण हो गया है यदि सत्य है तो मेरा हृदय काँपते हुए के सदृश है ( पराङ्मुख होकर और स्थित होकर ) अच्छा वत्स, न तो तुमने कहा और न मैंने सुना [ अर्थात् सन्धि की बात की चर्चा न करो ]

महाराजका जो अत्यन्त उदग्र पराक्रमसम्पन्न क्षत्रियोचित तेज था यह निश्चय है कि द्यूतक्रीडा करके उसे भी इन्हों ने अपने हाथ से चले जाने दिया है ॥ १३ ॥

( नेपथ्य में )

महारानी, धैर्य्य धारण करें, धैर्य्य धारण करें, कौरवों के सहजशत्रु कुमार भीमसेन आप के क्रोध की शान्ति करेंगे ।

सहदेव—( नेपथ्य की ओर कान करके और देखकर मन ही मन ) अरे, क्यों, श्रीमती द्रौपदी आर्य्य के समीप चली आ रही हैं आँसुओं अधिक भर जाने से नेत्र डब डबाये हुए हैं । यह तो महान् कष्ट उपस्थित हुआ ।

यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य संभृतम् ।
तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥ १४ ॥

( ततः प्रविशति यथानिर्दिष्टा द्रौपदी चेटी च । )

( द्रौपदी सास्रं निःश्वसिति । )

चेटी—समस्ससदु समस्ससदु भट्टिणी । अवणइस्सदि दे मण्णुं णिच्चाणुवद्धकुरुवेरो कुमालो भीमसेणो । ( समाश्वसितु समाश्वसितु भट्टिनी । अपनेष्यति ते मन्युं नित्यानुबद्धकुरुवैरः कुमारो भीमसेन । )

द्रौपदी—हञ्जे बुद्धिमदिए, होदि एदं जइ महाराओ पडिऊलो ण भवे । ता णाहं पेक्खिदुं तुवरदि मे हिअअं । आदेसेहि मे णाहस्स वासभवणं । ( हञ्जे बुद्धिमतिके, भवत्येतद्यदि महाराजः प्रतिकूलो न भवेत् ।

---

आर्यसमीप=भीमसविधे, उपसर्पति=गच्छति ।

अन्वय —अद्य, क्रुद्धे, आर्ये, वैद्युतमिव, यत् , ज्योतिः, सम्भृतम् , इयम् , कृष्णा, नूनम् तत् , प्रावृट् , इव, संवर्धयिष्यति ॥ १४ ॥

यद्वैद्युतमिति । अद्य=इदानीम् , क्रुद्धे=कुपिते आर्ये=भीमे, वैद्युतमिव= तडिद्ब्वसदृशम् , यत् , ज्योति =तेजः, सम्भृतम् =उत्पन्नं, इय, कृष्णा=द्रौपदी, नूनम् =निश्चय तत् =ज्योतिः प्रावृट् =वर्षाकाल इव, सवर्द्धयिष्यति =एधयिष्यते । यथा प्रावृट्कालः विद्युत्तेज' सवर्धयति तथैव द्रौपदी भीमक्रोधं संवर्धयिष्यतीत्यर्थ. । अत्र पूर्णोपमालङ्कारः । पथ्यावक्त्रं छन्द' । लक्षणमुक्तं नवमश्लोके ॥१४॥

अपनेष्यति— दूरीकरिष्यति, ते=तव, मन्युं=क्रोधं नित्यानुवद्धकुरुवैरः=नित्यम् अनुवद्ध., सम्बद्ध' कुरुवैरः धार्तराष्ट्रविद्वेषः यस्य स. ।

चेटीं प्रति हञ्जे, इत्युच्यते 'हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीम्प्रतीत्यमर.' ।

---

आज आर्य्य भीमसेन के क्रुद्ध होने पर विद्युत्प्रकाश के सदृश उनका तेज हो गया है अब उसे वर्षा ऋतु की भाँति अवश्य यह महारानी [ द्रौपदी ] बढायेंगी [ अर्थात् क्रोधान्ध भीमसेन द्रौपदी के वचनों से और उत्तेजित हो उठेंगे ] ॥ १४ ॥

( द्रौपदी का चेटी के साथ प्रवेश )

( द्रौपदी डब डबाए हुए नेत्रों से ठण्डी श्वास लेती हैं )

चेटी—धैर्य्य धरें, धैर्य्य धरें, महारानी, सहज कौरवशत्रु कुमार भीमसेन आप का क्रोध निवारण करेंगे ।

द्रौपदी—अरी, बुद्धिमतिके, ऐसा ही होता यदि महाराज विपरीत न होते । प्राणनाथ

तन्नाथं प्रेक्षितुं त्वरते मे हृदयम् । तदादेशय मे नाथस्य वासभवनम् । ( इति परिक्रामत । )

चेटी—एदु एदु भट्टिणीख एदं वासभवणं। एत्थ पविसदु भट्टिणी। ( एत्वेतु भट्टिनी । एतद्वासभवनम् । अत्र प्रविशतु भट्टिनी । )

द्रौपदी—हञ्जे, कहेहि णाहस्स मह आगमणं। ( हञ्जे, कथय नाथस्य ममागमनम् । )

चेटी—ज देवी आणवेदि । ( इति परिक्रम्योपसृत्य च । ) जअदु जअदु कुमालो । ( यद्देव्याज्ञापयति । जयतु जयतु कुमार. । )

( भीमसेनोऽश्रृण्वन् 'यत्तदूर्जितम्' ( १।१३ ) इति पुनः पठति । )

चेटी—( परिवृत्य । ) भट्टिणि, पिअ दे णिवेदेमि । परिकुविदो विअ कुमालो लक्खीअदि । ( भट्टिनि, प्रियं ते निवेदयामि । परिकुपित इव कुमारो लक्ष्यते । )

---

यदि, महाराज.=युधिष्ठिरः, प्रतिकूलः=अननुकूल =न भवेत् , तदा, एतद्भवति= क्रोधापनयनं भवेत् । तत्=तस्मात् , नाथं=स्वामिनम् भीममित्यर्थः । प्रेक्षितुं= द्रष्टुम् , त्वरते=शीघ्रतां करोति, मे=मम, हृदयम्=स्वान्तम् ।

एतु=आगच्छतु, द्विरुक्तिः शीघ्रताद्योतनार्था । भट्टिनी=राजयोषित् । एतद्वासभवनम्=इद वासगृहम् ।

कथयेति—द्रौपदी आगतेति कथयेरयर्थः ।

देवी=राजपत्नी, यत् , आज्ञापयति=आदिशति, जयतु=उत्कृष्टेन वर्तताम् ।

अश्रृण्वन्=अनाकर्णयन् , शतृप्रत्ययान्तोऽयम् ।

भट्टिनि=देवि, प्रियं=इष्टम् , ते=तव, निवेदयामि=कथयामि कुमारः, परिकुपित इव=क्रुद्ध इव, लक्ष्यते=दृश्यते ।

---

का दर्शन करने के लिये मेरा हृदय चञ्चल हो रहा है अत स्वामी के आवास का पथ प्रदर्शन कर ।　　( दोनों चली जाती हैं )

चेटी—आइये, आइये स्वामिनी,

द्रौपदी—अये, मेरा आगमन नाथ को कहो ।

चेटी—अच्छा, ऐसा ही करूँगी । युवराज की विजय, विजय ।

भीमसेन—( न सुनकर क्रोधपूर्वक 'यत्तदूर्जितम्' यह श्लोक फिर से पढते हैं ।

चेटी—( द्रौपदी के समीप जाकर ) महारानी, एक कर्णसुखद सम्वाद सुनाती हूं । युवराज क्रुद्ध सा प्रतीत हो रहे हैं ।

द्रौपदी—हञ्जे, जइ एव ता अवहीरणावि एसा मं आसासअदि। ता एअन्ते उवविट्ठा भविअ सुणुमो दाव णाहस्स ववसिदं। (हञ्जे, यद्येवं तदवधीरणाप्येषा मामाश्वासयति। तदेकान्त उपविष्टाभूत्वा शृणुमस्तावन्नाथस्य व्यवसितम्।) ( उमे तथा कुरुतः। )

भीमसेन —( सहदेवमधिकृत्य। ) किं नाम पञ्चभिर्ग्रामैः सन्धिः।

मथ्नामि कौरवशतं समरे न कोपा-
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥ १५ ॥

---

यदि, एवम् = क्रुद्धो भीमसेनः, तदा, अवधीरणा = तिरस्कारः, अपि एषा—भीमकृता, माम्, आश्वासयति = आश्वासन करोति, सुखयतीत्यर्थः। तत्=तस्मात् एकान्ते = रहसि, उपविष्टाः = उपवेश कृतवत्य', शृणुमः = आकर्णयामः, तावत्, नाथस्य = पत्युः, व्यवसितम् = व्यवसायम्।

अन्वयः—समरे, कोपात्, कौरवशतम्, न, मथ्नामि, दुःशासनस्य, उरस्तः, रुधिरम्, न, पिबामि, गदया, सुयोधनोरू, न, सञ्चूर्णयामि, भवताम्, नृपतिः, पणेन, सन्धिम्, करोतु ॥ १५ ॥

राजा सन्धिं करोतु अहन्तु कौरवान्विनाशयिष्याम्येवेत्याह—मथ्नामीति। समरे = सङ्ग्रामे, कोपात् = क्रोधात्, कौरवशतं = दुर्योधनादीन्, न मथ्नामि = न मथिष्यामि अत्र नञा काकोऽप्रत्ययात्, मथिष्याम्येवेति व्यज्यते एवमग्रिमेऽपि क्रियासत्तामेव व्यनक्ति। दुःशासनस्य = दुर्योधनकनिष्ठभ्रातु, उरस्तः = वक्षसः। पञ्चम्यास्तसिल्। धिरम् = रक्तम् न पिबामि = न पास्यामि सर्वत्र वर्तमानसामीप्ये लट्। गदया = शस्त्रविशेषेण, सुयोधनोरू = दुर्योधनस्य सक्थिनी, न सञ्चूर्णयामि = न मर्दयिष्यामि। भवतां = युष्माकं, नृपतिः = राजा, पणेन = पञ्चकग्राम-

---

द्रौपदी—अरी, यदि यह बात है तो यह तिरस्कार भी मुझे आश्वासन [ धैर्य्य ] देता है। अच्छा—एकान्त में बैठकर पहले प्रियतम की व्यवस्था [ कार्य्यक्रम ] को तो सुनें।

( दोनों एकान्त में बैठकर सुनती हैं )

भीम—( क्रोध पूर्वक सहदेव से ) क्या पाँच ही ग्राम पर सन्धि ?

क्या मैं सग्राम में क्रोध से सौ कौरवों का मर्दन न कर डालूगा ? हृदय प्रदेश से क्या दु शासन का रक्त पान न करूँगा ? क्या मैं गदा से दुर्योधन के जाँघ का चूर्ण न बना डालूगा ? तुम लोगों के राजा ( युधिष्ठिर ) इस विनिमय पर सन्धि करें [ अर्थात् मैं तो सन्धि नहीं करता ]।

द्रौपदी—( सहर्षम् । जनान्तिकम् । ) णाह, अस्सुदपुव्वं खु दे एदिसं वअणं । ता पुणो पुणो दाव भणाहि । ( नाथ, अश्रुतपूर्वं खलु त ईदृशं वचनम् । तत्पुनः पुनस्तावद्भण । )

( भीमसेनोऽशृण्वन्नेव 'मथ्नामि कौरवशतम्' ( १।१५ ) इति पुनः पठति । )

सहदेवः—आर्य, किं महाराजस्य सन्देशोऽयमार्येणाव्युत्पन्न इव गृहीतः ।

भीमसेनः—का पुनरत्र व्युत्पत्तिः ।

सहदेवः—आर्य, एवं गुरुणा सन्दिष्टम् ।

भीमसेनः—कस्य ।

सहदेवः—सुयोधनस्य ।

---

रूपेण सन्धि=सन्धानम् , करोतु=सम्पादयतु । प्रतिमुखरूपः सन्धिरत्र, एतल्लक्षणं च—क्षानुषङ्गिककार्येण क्रियते यत्प्रकाशकम् ।

नष्टस्येवेह बीजस्य तद्धि प्रतिमुखं मतम् ॥ इति । वसन्ततिलकाछन्दः ॥ १५ ॥

सहर्षम्=सानन्दम् । जनान्तिकम्=रङ्गदर्शकसमीपे, अन्योन्यामन्त्रणम् , तदुक्तं दर्पणे—अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम् । इति ।

अश्रुतपूर्वं=न श्रुतम् , अश्रुतम् , पूर्वम् अश्रुतम् इति अश्रुतपूर्वम् 'सुप्सुपे'ति समासः । ईदृशम्=पूर्वोक्त मथ्नामीत्यादि, ते=तव, वचनम्=वाणी, तत्=तस्मात् , पुनःपुनः=भूयोभूयः, तावत् , भण=निगद ।

आर्य=श्रेष्ठ, महाराजस्य=युधिष्ठिरस्य, सन्देशः=वाचिकं 'सन्देशवाग्वाचिकं स्या'दित्यमरः । आर्येण = भवता, अव्युत्पन्न इव=तात्पर्याविषय इव, किम् , किमिति प्रश्ने, गृहीतः=अवगत । तत्तात्पर्यानभिज्ञो भवान् , इत्यर्थः ।

अत्र=युधिष्ठिरवाक्ये, व्युत्पत्तिः=तात्पर्यम् । कि तात्पर्यमित्यर्थः ।

---

द्रौपदी—( प्रसन्न होकर सबक समक्ष ) स्वामिन् , आप के वचन अपूर्व हैं ऐसा कभी भी श्रुतिगोचर नहीं हुआ था । अच्छा, एक बार फिर कहने की कृपा कीजिये ।

भीम—सहदेव, देखो ( मथ्नामि कौरव शत '''श्लोक फिर पढ़ते हैं ) ।

सहदेव—क्या महाराज के सन्देश का रहस्य न समझकर आपने इसी प्रकार सुनकर मान लिया ।

भीम—वह सन्देश क्या है ?

सहदेव—आर्य्य, महाराज ने इस प्रकार सन्देश दिया है ।

भीम—किसे सन्देश दिया है ।

सहदेव—सुयोधन को ।

भीमसेनः—किमिति ।

सहदेव—इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् ।
प्रयच्छ चतुरो ग्रामान्कञ्चिदेकं च पञ्चमम् ॥ १६ ॥

भीमसेन—ततः किम् ।

सहदेव—तदेवमनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्तनाद्विषभोजनजतुगृहदाहद्यूतसभाद्यपकारस्थानोद्घाटनमेवेदं मन्ये ।

---

अन्वय—इन्द्रप्रस्थम्, वृकप्रस्थम्, जयन्तम्, वारणावतम्, चतुरः, ग्रामान्, प्रयच्छ, कञ्चित्, एकम्, पञ्चमम्, च, (प्रयच्छ) ॥ १६ ॥

युधिष्ठिरप्रेषितसन्देशमेवाह—इन्द्रप्रस्थमिति । इन्द्रप्रस्थं=खाण्डवप्रस्थम्, 'हस्तिनापुरान्निर्वासितो युधिष्ठिरः स्वनिवासायेन्द्रप्रस्थनामकं नगरं रचयामास' एतेन निर्वासनरूपोऽपकारः सूचितः । वृकप्रस्थम्=भीमस्य वृकोदरनामप्राप्तिस्थानम्, अत्रैव दुर्योधनादिभिः विषदानेन मदमत्तोऽकारि, एतेन विषदानरूपोऽपकारः सूचितः । जयन्तम्=द्यूतक्रीडास्थानम्, अत्रैव द्यूतेन राज्यादीनपहृत्य वनवासो दत्तः, एतेन छलेन राज्याद्यपहरणरूपोऽपकारः सूचितः । वारणावतम्—लाक्षागृहदाहस्थानम् 'लाक्षागृहे निवसति युधिष्ठिरे दुर्योधनाज्ञया पुरोचनेन वह्नौ प्रज्वालिते कष्टेन तस्मान्निर्गतो युधिष्ठिरः', एतेन प्राणहरणोपायरूपोऽपकारः सूचितः । चतुरः=उक्तनामनिर्दिष्टान् चतुःसंख्याकान्, ग्रामान्=संवसथान् 'समौ संवसथग्रामौ' इत्यमरः । प्रयच्छ=देहि, कञ्चित्=नाम्नाऽनिर्दिष्टम्, एकम्, पञ्चमं च । चतुरपकारसूचनानन्तरम्, नाम्नाऽनिर्दिष्टस्य 'पञ्च' पञ्चत्वं भावप्रधाननिर्देशः, माति, ददाति पञ्चम इत्येवं निष्पन्नस्य पञ्चमस्य कथनात् मरणप्रापकयुद्धस्थानं सूचितम् । पथ्यावक्त्रछन्दः ॥ १६ ॥

तात्पर्यानभिज्ञो भीमसेन आह—ततः किमिति ।

सहदेवस्तात्पर्यं स्पष्टतयाऽह—तदेवमिति । प्रतिनामग्रामप्रार्थनया=तत्तद्ग्रामनिर्देशपूर्वकग्रामयाचनेन, पञ्चमस्य च, अकीर्त्तनात्=नामाकथनात् ।

---

भीम—तो इससे क्या ? (अर्थात् इसमें क्या रहस्य है ?) ।

सहदेव—इन्द्रप्रस्थ, वृकप्रस्थ, जयन्त और वारणावत इन चार ग्रामों को और पाचवाँ कोई एक जो इच्छा हो दीजिये' ॥ १६ ॥

सहदेव—इस प्रकार चार ग्रामों का नाम लेकर तथा पाचवें का नाम न लेकर प्रार्थना करने से मुझे विदित होता है, 'महाराज ने विषप्रदान, लाक्षानिर्मित भवन के भस्मीकरण और कपटपाश इत्यादि अपकारों की स्मृति कराई है';

भीमसेनः—( साटोपम् । ) वत्स, एवं कृते किं भवति ?

सहदेवः—आर्य, एवं कृते लोके तावत्स्वगोत्रक्षयाशङ्कि हृदयमाविष्कृतं भवति, कुरुराजस्य तावदसन्धेयता तदैव प्रतिपादिता भवति।

भीमसेनः—मूढ, सर्वमप्येतदनर्थकम् । कुरुराजस्य तावदसन्धेयता तदैव प्रतिपादिता यदैवास्माभिरितो वनं गच्छद्भिः सर्वैरेव कुरुकुलस्य निधनं प्रतिज्ञातम्। लोकेऽपि च धार्तराष्ट्रकुलक्षयः किं लज्जाकरो भवताम्। अपि च रे मूर्ख,

युष्मान्ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः।
न लज्जयति दाराणां सभायां केशकर्षणम् ॥ १७ ॥

द्रौपदी—( जनान्तिकम् । ) णाह, ण लज्जन्ति एदे। तुमं वि दाव मा विसुमरेहि । ( नाथ, न लज्जन्त एते । त्वमपि तावन्मा विस्मार्षीः । )

---

स्वगोत्रक्षयाशङ्कि = निजवंशविनाशाशङ्कम् , आविष्कृतम् = प्रकटितम् । निधनम् = मरणम् ।

अन्वयः—क्रोधात् , शत्रुकुलक्षयः, लोके, युष्मान् , ह्रेपयति, सभायाम् , दाराणाम् , केशकर्षणम् , न, लज्जयति ॥ १७ ॥

युष्मानिति । क्रोधात् = कोपात् , शत्रुकुलक्षयः = रिपुवंशविनाशः, लोके=जगति, युष्मान् = भवतः, ह्रेपयति = त्रपयति, सभायां = सदसि , दाराणां = स्त्रीणाम् , केशकर्षणम् = कचाकर्षणम् , न = नहि लज्जयति—त्रपयति । सभायां द्रौपदीकेशाकर्षणादधिकं न किमपि लज्जाकरमिति भावः। पथ्यावक्त्र छन्दः ॥ १७ ॥

मा विस्मार्षी = न विस्मर । माङि लुङ् , इति लुङ् प्रत्ययः।

---

**भीम**—( आवेश में आकर ) ऐसा करने से क्या लाभ ?

**सहदेव**—( आर्य, ऐसा करने से एक तो संसार के समक्ष स्पष्ट हो जायगा कि महाराज का हृदय अपने गोत्रवध से दुःखी होता है दूसरे उसके अपकारोंको स्मरण कराकर उसके साथ सन्धि न करना ही दिखाया है ।

**भीम**—यह सब व्यर्थ की बात है कौरवों के साथ सन्धि तो तभी स्थगित हो गई जब हम लोगों ने यहाँ से निर्वासित होकर वन में जाते समय कौरवों के वंशनाश की प्रतिज्ञा किया था, धृतराष्ट्र के कुल की समाप्ति की बात संसार जान गया है। क्या यह आपलोगों के लिये लज्जा की बात है ? अरे मूर्ख —

क्रोध से शत्रुवंश का नाश संसार में आप लोगों को लज्जित करता है परन्तु भरी सभा में स्त्री का केशापकर्षण आप लोगों को लज्जित नहीं करता ॥ १७ ॥

**द्रौपदी**—(सबके समक्ष) नाथ ! इन्हें लज्जा नहीं है देखना आप भी मत भूल जाना।

भीमसेन —वत्स, कथं चिरयति पाञ्चाली।

सहदेव—आर्य, का खलु वेलाऽत्रभवत्याः प्राप्तायाः। किन्तु रोषावेशवशादार्याऽऽगताप्यार्येण नोपलक्षिता।

भीमसेनः—( दृष्ट्वा, सादरम्। ) देवि, वर्धितामर्षैरस्माभिरागतापि भवती नोपलक्षिता। अतो न मन्यु कर्तुमर्हसि।

द्रौपदी—णाह, उदासीणेसु तुम्हेसु मह मण्णु, ण उण कुविदेसु। ( नाथ, उदासीनेषु युष्मासु मम मन्यु', न पुन' कुपितेषु।

भीमसेन—यद्येवमपगतपरिभवमात्मानं समर्थयस्व। ( हस्ते गृहीत्वा, पार्श्वे समुपवेश्य, मुखमवलोक्य। ) किं पुनरत्रभवतीमुद्विग्नामिवोपलक्षयामि।

द्रौपदी—णाह, किं वि उव्वेअकालणं तुम्हेसु सण्णिहिदेसु। ( नाथ, किमायुद्वेगकारणं युष्मासु सन्निहितेषु।

---

कथम् = कस्माद्धेतोः, पाञ्चाली = द्रौपदी, चिरयति = विलम्ब कुरुते।

का खलु वेला = चिरकाल.।

वर्धितामर्षैः = उद्दीपितक्रोधैः। नोपलक्षिता = नावगता। मन्युं = क्रोधम्, 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमर.।

उदासीनेषु = विषयानासक्तेषु।

अपगतपरिभवम् = समाप्ततिरस्कारम्। आत्मान - स्वम्, समर्थयस्व = अवगच्छ। उपलक्षयामि = जानामि।

युष्मासु = वीरेषु, भवत्सु, सन्निहितेषु = समीपस्थेषु, नतु अन्यत्र गतेषु, किम·

---

भीमसेन—( स्मरण पूर्वक ) प्रिय, क्यों द्रौपदी को विलम्ब हो रहा है युद्ध के लिये शीघ्रातिशीघ्र तय्यार हो जाने के लिए मेरा मन मुझे प्रेरित कर रहा है।

सहदेव—आर्य्य! श्रीमती जी के आये हुए बहुत विलम्ब हो गया क्रोध के आवेश में पड कर आपने उन्हें देखा ही नहीं।

भीम—( देख कर आदर पूर्वक ) देवि! हम लोगों ने क्रोध के आवेश में होकर नहीं देखा यद्यपि आप सम्मुख खडी हैं अत आप क्रोध न करें।

द्रौपदी—नाथ, यदि आप लोग उपेक्षा कर के बैठ जाते तो मैं क्रोध करती परन्तु आप लोगों को प्रतिशोध करने के लिये उद्यत देखती हू अत क्रोध कैसा!

भीम—यदि ऐसी बात है तो समझ लीजिये आप के अपमान का प्रतिकार हो ही गया। ( हाथ पकड कर बगल में बैठा लेते हैं और उन के मुख की ओर देख कर ) क्यों आप व्याकुल सी प्रतीत हो रही हैं?

द्रौपदी—स्वामिन्, आप लोगों के समीप रहते हुए उद्विग्नता का कारण हो सकता है?

भीमसेनः—किमिति नावेदयसि । ( केशानवलोक्य । ) अथवा किमावेदितेन ।

जीवत्सु पाण्डुपुत्रेषु दूरमप्रोषितेषु च ।
पाञ्चालराजतनया वहते यदिमां दशाम् ॥ १८ ॥

द्रौपदी—हञ्जे बुद्धिमदिए, कहेहि णाहस्स को अण्णो मह परिहवेण खिज्जइ । ( हञ्जे बुद्धिमतिके ! कथय नाथस्य कोऽन्यो मम परिभवेण खिद्यते । )

चेटी—जं देवी आणवेदि । ( भीममुपसृत्य । अञ्जलिं वद्ध्वा ) सुणादु कुमालो । इदो वि अहिअदरं अज्ज उव्वेअकालणं आसी देवीए । ( यद्देव्याज्ञापयति । शृणोतु कुमार । इतोऽप्यधिकतरमद्योद्वेगकारणमासीद्देव्याः ।

---

प्युद्वेगकारणं, न किमपीत्यर्थः ।

अन्वय —पाण्डुपुत्रेषु, जीवत्सु, दूरम्, अप्रोषितेषु, च, पाञ्चालराजतनया, यत्, इमाम्, दशाम्, वहते ॥ १८ ॥

अस्माकं सन्निधाने सति तादृशदशायोग्या द्रौपदी नेत्याह—जीवत्स्विति । पाण्डुपुत्रेषु = युधिष्ठिरादिषु, जीवत्सु = प्राणान्, धारयत्सु, दूरम् = असमीपम् क्रियाविशेषणमिदम् अप्रोषितेषु = परदेशेऽवसत्सु, च, पाञ्चालराजतनया = पञ्चालदेशाधिपसुता, द्रौपदी, इत्यर्थः । राजतनयेत्यनेन दुःखासहनयोग्यता दर्शिता । यत्, इमाम् = अवद्धकेशां, दशा, = स्थितिम्, वहते = प्राप्नोति । या दशा अस्वामिनः प्रोषितभर्तृकाया वा सा, दशा वीरपत्न्या द्रौपद्या वर्तते इति भावः । अत्र विभावनाविशेषोक्त्योः सन्देहसङ्करोऽलङ्कारः । पथ्यावक्त्रं छन्दः ॥ १८ ॥

नाथस्य कथय । उद्वेगकारणमिति शेषः ।

इतोऽपि = अस्मादपि, अधिकतरम् = उत्कृष्टम् अद्य = अस्मिन्नहनि, उद्वेगकारणम् = उद्वेजनहेतु ।

---

भीमसेन—क्यों नहीं कहतीं ? ( बालों को देख कर और उच्छ्वास लेकर ) अथवा कह कर ही क्या करेंगी ! ( क्योंकि )

पाण्डु कुमार अभी जी रहे हैं और कहीं दूर भी नहीं चले गए हैं फिर भी पञ्चाल नरेश की पुत्री हैं और इस दशा को प्राप्त हो गई हैं ।

द्रौपदी—अरी बुद्धिमतिके, सम्पूर्ण घटना स्वामी से कहदो न मेरे अपमानित होने पर इन के अतिरिक्त कौन दुःखी होगा ।

चेटी—अच्छा, महाराणी की जो आज्ञा । ( भीमसेन के समीप जाकर हाथ जोड कर ) कुमार सुनें । इस से भी वढ़ कर आज महारानी की उद्विग्नता में कारण हुआ है ।

भीमसेन —वत्स, कथं चिरयति पाञ्चाली।

सहदेव —आर्य, का खलु वेलाऽत्रभवत्याः प्राप्तायाः। किन्तु रोषावेशवशादार्याऽऽगताप्यार्येण नोपलक्षिता।

भीमसेन —(दृष्ट्वा, सादरम्।) देवि, वर्धितामर्षैरस्माभिरागतापि भवती नोपलक्षिता। अतो न मन्युं कर्तुमर्हसि।

द्रौपदी =णाह, उदासीणेसु तुम्हेसु मह मण्णु, ण उण कुविदेसु। (नाथ, उदासीनेषु युष्मासु मम मन्यु', न पुन' कुपितेषु।

भीमसेन—यद्येवमपगतपरिभवमात्मानं समर्थयस्व। (हस्ते गृहीत्वा, पार्श्वे समुपवेश्य, मुखमवलोक्य।) किं पुनरत्रभवतीमुद्विग्नामिवोपलक्षयामि।

द्रौपदी—णाह, किं वि उव्वेअकालण तुम्हेसु सण्णिहिदेसु। (नाथ, किमप्युद्वेगकारणं युष्मासु सन्निहितेषु।

---

कथम् = कस्माद्धेतोः, पाञ्चाली = द्रौपदी, चिरयति = विलम्बं कुरुते।

का खलु वेला = चिरकालः।

वर्धितामर्षैः = उद्दीपितक्रोधैः। नोपलक्षिता = नावगता। मन्युं = क्रोधम्, 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः।

उदासीनेषु = विषयानासक्तेषु।

अपगतपरिभवम् = समाप्ततिरस्कारम्। आत्मानं - स्वम्, समर्थयस्व = अवगच्छ। उपलक्षयामि = जानामि।

युष्मासु = वीरेषु, भवत्सु, सन्निहितेषु = समीपस्थेषु, नतु अन्यत्र गतेषु, किम-

---

**भीमसेन**—(स्मरण पूर्वक) प्रिय, क्यों द्रौपदी को विलम्ब हो रहा है युद्ध के लिये शीघ्रातिशीघ्र तय्यार हो जाने के लिए मेरा मन मुझे प्रेरित कर रहा है।

**सहदेव**—आर्य्य! श्रीमती जी के आये हुए बहुत विलम्ब हो गया क्रोध के आवेश में पड कर आपने उन्हें देखा ही नहीं।

**भीम**—(देख कर आदर पूर्वक) देवि! हम लोगों ने क्रोध के आवेश में होकर नहीं देखा यद्यपि आप सम्मुख खड़ी हैं अत' आप क्रोध न करें।

**द्रौपदी**—नाथ, यदि आप लोग उपेक्षा कर के बैठ जाते तो मैं क्रोध-करती परन्तु आप लोगों को प्रतिशोध करने के लिये उद्यत देखती हू अत क्रोध कैसा!

**भीम**—यदि ऐसी बात है तो समझ लीजिये आप के अपमान का प्रतिकार हो ही गया। (हाथ पकड़ कर बगल में बैठा लेते हैं और उन के मुख की ओर देख कर) क्यों आप व्याकुल सी प्रतीत हो रही हैं?

**द्रौपदी**—स्वामिन्, आप लोगों के समीप रहते हुए उद्विग्नता का कारण हो सकता है?

भीमसेन —किमिति नावेदयसि । ( केशानवलोक्य । ) अथवा किमावेदितेन ।

जीवत्सु पाण्डुपुत्रेषु दूरमप्रोषितेषु च ।
पाञ्चालराजतनया वहते यदिमां दशाम् ॥ १८ ॥

द्रौपदी—हञ्जे बुद्धिमदिए, कहेहि णाहस्स को अण्णो मह परिहवेण खिज्जइ । ( हञ्जे बुद्धिमतिके ! कथय नाथस्य कोऽन्यो मम परिभवेण खिद्यते । )

चेटी—जं देवी आणवेदि । ( भीममुपसृत्य । अञ्जलिं बद्ध्वा ) सुणादु कुमालो । इदो वि अहिअदरं अज्ज उव्वेअकालणं आसी देवीए । ( यद्देव्याज्ञापयति । शृणोतु कुमार । इतोऽप्यधिकतरमद्योद्वेगकारणमासीद्देव्याः ।

---

प्युद्वेगकारणं, न किमपीत्यर्थः ।

अन्वय —पाण्डुपुत्रेषु, जीवत्सु, दूरम्, अप्रोषितेषु, च, पाञ्चालराजतनया, यत्, इमाम्, दशाम्, वहते ॥ १८ ॥

अस्माकं सन्निधाने सति तादृशदशायोग्या द्रौपदी नेत्याह—जीवत्स्विति । पाण्डुपुत्रेषु = युधिष्ठिरादिषु, जीवत्सु = प्राणान्, धारयत्सु, दूरम् = असमीपम् क्रियाविशेषणमिदम् अप्रोषितेषु = परदेशेऽवसत्सु, च, पाञ्चालराजतनया = पञ्चालदेशाधिपसुता, द्रौपदी, इत्यर्थः । राजतनयेत्यनेन दु खासहनयोग्यता दर्शिता । यत्, इमाम् = अवद्धकेशां, दशा, = स्थितिम्, वहते = प्राप्नोति । या दशा अस्वामिनः प्रोषितभर्तृकाया वा सा, दशा वीरपत्न्या द्रौपद्या वर्तते इति भाव । अत्र विभावनाविशेषोक्त्योः सन्देहसङ्करोऽलङ्कारः । पथ्यावक्त्रं छन्दः ॥ १८ ॥

नाथस्य कथय । उद्वेगकारणमिति शेषः ।

इतोऽपि = अस्मादपि, अधिकतरम् = उत्कृष्टम् अद्य = अस्मिन्नहनि, उद्वेगकारणम् = उद्वेजनहेतु ।

---

भीमसेन—क्यों नहीं कहती ? ( बालों को देख कर और उच्छ्वास लेकर ) अथवा कह कर ही क्या करेंगी ! ( क्योंकि )

पाण्डु कुमार अभी जी रहे है और कहीं दूर भी नहीं चले गए हैं फिर भी पञ्चाल नरेश की पुत्री है और इस दशा को प्राप्त हो गई हैं ।

द्रौपदी—अरी बुद्धिमतिके, सम्पूर्ण घटना स्वामी से कहदो न मेरे अपमानित होने पर इन के अतिरिक्त कौन दु खी होगा ।

चेटी—अच्छा, महारानी की जो आज्ञा । ( भीमसेन के समीप जाकर हाथ जोड़ कर ) कुमार सुनें । इस से भी बढ़ कर आज महारानी की उद्विग्नता में कारण हुआ है ।

भीमसेनः—किं नामास्मादप्यधिकतरम् । बुद्धिमतिके, कथय ।

कौरव्यवंशदावेऽस्मिन्क एष शलभायते ।
मुक्तवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिव ॥ १९ ॥

चेटी—सुणादु कुमालो । अज्ज क्खु देवी अम्बासहिदा सुभद्दाप्पमुहेण सवत्तिवग्गेण परिवुदा अज्जाए गन्धालीए पादवन्दणं कादुं गदा । (शृणोतु कुमारः । अद्य खलु देव्यम्बासहिता सुभद्राप्रमुखेन सपत्नीवर्गेण परिवृता आर्याया गान्धार्याः पादवन्दनं कर्तुं गता ।

भीमसेनः—युक्तमेतत् । वन्द्याः खलु गुरवः । ततस्ततः ।

---

अन्वय—कौरव्यवंशदावे, अस्मिन्, (कृष्णाम्) धूमशिखाम्, इव, बद्धवेणीम्, एनाम्, कृष्णाम्, स्पृशन्, कः, एषः, शलभायते ॥ १९ ॥

कौरव्येति । कौरव्यवंशदावे=कौरव्यः वंश इव । उपमितसमासः । मानसराजहंसवद्, वंशस्य श्लेषेण निर्देशः, एकस्य कुलमर्थः । अन्यस्य वेणुः । तस्मिन् यो दावः दवाग्निः, तस्मिन् कौरव्यवंशदावे, अस्मिन्=मयि, भीमे, कृष्णां=नीलाम्, 'कृष्णा तु नील्यां द्रौपद्यां पिप्पलीद्राक्षयोरपि' इत्यमरः । धूमशिखाम्=धूमकेतुम्, इव, मुक्तवेणीम्=अबद्धकेशवेशाम्, एनाम्=उपस्थिताम्, कृष्णाम्=द्रौपदीम् स्पृशन्=छुपन्, कः, एषः, शलभायते=पतङ्गायते, पतङ्ग इवाचरतीत्यर्थः । कौरव्यवंशेत्यत्र लुप्तोपमा कौरव्यवंशदावेत्यत्र रूपक, व्यङ्ग्योपमा, एतेषामङ्गाङ्गिभावात् सङ्करः । पथ्यावक्त्र छन्दः ॥ १९ ॥

सुभद्राप्रमुखेन=कृष्णस्वसृप्रधानेन, सपत्नीवर्गेण=समानः पतिर्यस्याः सा सपत्नी, तस्याः वर्गेण समुदायेन, परिवृता=युक्ता अम्बासहिता कुन्तीसंयुक्ता, देवी आर्यायाः, गान्धार्याः=धृतराष्ट्रपत्न्याः, पादवन्दनम्=चरणवन्दनां, कर्तुम्, अद्य, खलु, गता, इत्यन्वयः । खल्विति वाक्यालङ्कारे ।

ततस्ततः=तदनन्तरन्तदनन्तरम् ।

---

भीमसेन—क्यों ! बुद्धिमतिके, इस से भी बढ कर ! तो कहो, कहो ।

बाँस के वृक्ष सदृश कुरुवंश के इस दावाग्नि में धूम शिखा के सदृश बद्ध केशपाश पाञ्चाली से विरोध कर कौन व्यक्ति टिड्डी की भाँति जल भुन कर विनष्ट होना चाहता है ॥ १९ ॥

चेटी—कुमार सुनें ! आज महारानी माता के साथ सुभद्रादिक सपत्नियों को लेकर पूज्या गान्धारी (माता) के चरणों में नमस्कारार्थ गई थीं ।

भीमसेन—यह तो उचित ही है बड़े लोग अभिवन्द्य हैं ही—तो फिर ?

चेटी—तदो पडिणिवुत्तमाणा भाणुमदीए देवी दिट्ठा । ( ततः प्रतिनिवर्तमाना भानुमत्या देवी दृष्टा ।

भीमसेन—( सक्रोधम् । ) आः, शत्रोर्भार्यया दृष्टा । हन्त, स्थानं क्रोधस्य देव्याः । ततस्ततः ।

चेटी—तदो ताए देवीं पेक्खिअ सहीजणदिण्णदिट्ठिए सगव्वं ईसि विहसिअ भणिअं । अइ जण्णसेणि, कसि तुम्हाणं अज्जवि केसा ण संजमीअन्ति । ( ततस्तया देवी प्रेक्ष्य सखीजनदत्तदृष्टया सगर्वमीषद्विहस्य भणितम् । अयि याज्ञसेनि, कस्माद्युष्माकमद्यापि केशा न संयम्यन्ते ।

भीमसेन—सहदेव, श्रुतम् ।

सहदेवः—आर्य, उचितमेवैतत्तस्याः । दुर्योधनकलत्रं हि सा पश्य ।

---

प्रतिनिवर्तमाना = प्रत्यागच्छन्ती, भानुमत्या = दुर्योधनपत्न्या ।

हन्त, इति विषादे । विषादोऽयमित्यर्थः । हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोरित्यमरः ।

सखीजनदत्तदृष्टया = सखीजने, आलिजने दत्ता दृष्टिः यया, तया, सगर्वम् = साहङ्कारम् । भणितम् = निगदितम् । याज्ञसेनि = द्रौपदि । अद्यापि = इदानीमपि । संयम्यन्ते = बध्यन्ते ।

एतत् = पूर्वोक्तवचनम्, उचितमेव = युक्तमेव, एवेत्यवधारणे । तस्याः = भानुमत्याः, इत्यन्वयः । हि = यतः, सा = भानुमती, दुर्योधनकलत्रम् = दुर्योधनस्य स्त्री । दुर्योधनकलत्रमित्यनेन यथा दुर्योधनो धृष्टस्तथा तस्य भार्यापीति सूचितम् ।

---

चेटी—उसी समय लौटती हुई महारानी को भानुमती ने देखा ।

भीमसेन—( क्रोध वश होकर ) अरे ! शत्रु की स्त्री ने देखा !

दुःख ! तब तो देवी का क्रोध अवसरोचित है अच्छा फिर क्या हुआ ?

चेटी—इस के अनन्तर उसने ( भानुमती ने ) महारानी की ओर देख कर सखियों को सङ्केत किया और फिर वह थोडा मुसकाती हुई अभिमान से ऐंठ कर बोली । अये ! महारानी द्रौपदी, ( सुना जाता है पाँच गाँव लेकर सन्धि की बात चीत की गई है ) अब भी आपने अपने केशपाशों का सयमन ( बाँधना ) नहीं किया है ।

भीमसेन—सहदेव, सुने ।

सहदेव—आर्य्य, यह तो उस के लिये उचित ही है अन्ततो गत्वा दुर्योधन ही की स्त्री है न देखिये !

एदं वग्वसिदं दे भादरो। ( किं नाथ, दुष्करं त्वया परिकुपितेन। सर्वथाऽनुगृह्णन्त्वेतद्व्यवसितं ते भ्रातरः। )

सहदेव—अनुगृहीतमेतदस्माभिः।

( नेपथ्ये महान्कलकलः। सर्वे सविस्मयमाकर्णयन्ति। )

भीमसेनः—

मन्थायस्तार्णवाऽम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः।

परिकुपितेन, त्वया किं, दुष्करम्—दुःसाध्यम्, न किमपीत्यर्थः। ते, भ्रातरः, एतद्व्यवसितं=इमं व्यवसायम्, अनुगृह्णन्तु=अनुमन्यन्ताम्।

कलकलः=आकस्मिकोऽव्यक्तशब्दः।

अन्वय—मन्थायस्तार्णवाम्भः प्लुतकुहरचलन्मन्दरध्वानधीरः, कोणाघातेषु, ( सत्सु ) गर्जत्प्रलयघनघटान्योन्यसघट्टचण्डः, कृष्णाक्रोधाग्रदूतः, कुरुकुलनिधनोत्पातनिर्घातवातः, अस्मत्सिंहनादप्रतिरसितसखः, अयम्, दुन्दुभिः, केन, ताडित. ॥२२॥

मन्थायस्तेति। मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः = मन्थः, मन्थनदण्डविशेषः, तेन आयस्तं चालितम् अर्णवाऽम्भः समुद्रजल तेन प्लुत, संलग्नं, कुहरं, मध्यं यस्य, तस्य चलतः, मन्दरस्य मन्दरनामकशैलस्य यः ध्वनिः, शब्दः तद्वद्धीरः, गम्भीरः। अस्य दुन्दुभिरित्यत्रान्वयः। एवमग्रिमस्यापि प्रथमान्तस्य। कोणाघातेषु='ढक्काशतसहस्राणि भेरीशतशतानि च। एकदा यत्र हन्यन्ते

आप न कर सकें ] ईश्वर करे आप के इस विचार से आप का भ्रातृवर्ग सहमत हो जाँय।

**सहदेव**—हम लोग सहमत हैं।

( नेपथ्य कोलाहल से गूँज जाता है। सब लोग आश्चर्य चकित हो कर सुन रहे हैं )।

**भीम**—मन्थन दण्ड (मन्दराचल) से प्रक्षिप्त समुद्र जल से पूर्ण कन्दरा सहित चलते हुए मन्दराचल की तरह गम्भीर घोषकारी, कोणाघात होने पर ( सौ हजार डमरू और दस हजार नगाड़े एक साथ बजते हैं तो उसे कोणाघात कहते हैं ) प्रलय काल के गर्जते हुए मेघों की घटाओं के परस्पर टक्कर खाने से भीषण शब्दकारी, द्रौपदी के अथवा प्रलय रात्रि के अग्रदूत के समान, कौरवाधिनाथ [ सुयोधन ] के नाश सूचक उत्पात से उत्थित झञ्झावात की भाँति, तथा हम लोगों के सिंहनाद के सदृश इस नगाड़े को किसने ठोंका है।

( अथवा ) अरे, इस नक्कारे को किसने बजाया ? इस की ध्वनि समुद्र मन्थन के समय मन्थन दण्ड से प्रक्षिप्त जल से परिपूरित कन्दरायुत मन्दराचल के भ्रमण कालीन गम्भीर ध्वनि की तरह है, प्रलय काल के गर्जते हुए मेघ मालाओं के परस्पर सन्ताडित होने पर

कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥२२॥

( प्रविश्य सम्भ्रान्तः । )

कञ्चुकी—कुमार, एष खलु भगवान्वासुदेवः ।

( सर्वे कृताञ्जलयः समुत्तिष्ठन्ति । )

भीमसेन —( ससम्भ्रमम् । ) क्वासौ भगवान् ।

कञ्चुकी—पाण्डवपक्षपातामर्षितेन सुयोधनेन संयमितुमारब्धः ।

( सर्वे सम्भ्रमं नाटयन्ति । )

---

कोणाघातः स उच्यते ॥' इति । लक्षणलक्षितेषु सत्सु, गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः = गर्जन्तो ये प्रलयकालिकघनाः, तेषां-घटा, समुदायः, तस्या अन्योन्यसङ्घट्टः, परस्परसङ्घर्षः, तस्माच्चण्डः, विकटः, कृष्णाक्रोधाग्रदूतः = द्रौपदीकोपप्रथमकथकः, कुरुकुलनिधनोत्पातनिर्घातवातः = कुरुवंशविनाशाशुभसूचकप्रचण्डवायुः, अस्मत्सिंहनादप्रतिरसितसखः = अस्माकं यः सिंहनादः, केशरिशब्दतुल्यशब्दः तस्य यत्, प्रतिरसितं प्रतिरवः, तस्य सखा 'राजाहः सखिभ्यष्टच्' इति टच् प्रत्ययः । अयं, दुन्दुभिः=भेरी 'भेरी स्त्री दुन्दुभिः पुमान्' इति विश्वः । केन कर्त्रा, ताडितः=आहतः । अत्र दूत इत्यत्र वात इत्यत्र चोत्प्रेक्षे स्रग्धरा छन्दः । लक्षणमुक्तं तृतीयश्लोके ॥२२॥

कञ्चुकी = सौविदल्लः, राज्ञां स्त्र्यगारे बहीरक्षाधिकारीत्यर्थः ।

पाण्डवपक्षपातामर्षितेन = पाण्डुपुत्रपक्षग्रहणक्रुद्धेन, संयमितुं = बद्धुम् । स्वार्थे-णिच् , ततस्तुमुन्प्रत्ययः ।

---

निकलने वाला भीषण निर्घोष को भी जीत लेती है । यह ( नक्कारा ) द्रौपदी के अथवा प्रलय काल की रात्रि के क्रोध का सूचक है इतना ही नहीं, किन्तु सुयोधन के नाश के लिये उत्पात कालीन झन्झावात की तरह है और हम लोगों के सिंहनाद की भाँति इस में से ध्वनि निकलती है ॥ २२ ॥

( प्रवेश कर घबड़ाया हुआ )

कञ्चुकी—कुमार, ये भगवान वासुदेव ··

( सब लोग हाथ जोडकर खडे हो जाते हैं ) ।

भीमसेन—( अत्यन्त आतुर होकर ) कहाँ, कहाँ हैं, भगवान वासुदेव ?

कञ्चुकी—पाण्डवों के पक्षपात से क्रुद्ध होकर सुयोधन ने, भगवान वासुदेव को पकडने के लिये उद्यत हुआ है ।

( सब व्याकुल हो जाते हैं )

स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि ।
मधुरापि हि मूर्च्छयते विषविटपिसमाश्रिता वल्ली ॥ २० ॥

भीमसेन—बुद्धिमतिके, ततो देव्या किमभिहितम् ।

चेटी—कुमाल, जइ पडिहीण मम वयणं भवे तदो देवी भणादि । ( कुमार, यदि परिहीनं मम वचनं भवेत्तदा देवी भणति । )

भीमसेन—किं पुनरभिहितं भवत्या ।

चेटी—तदो मए परिकुविअ भणिअं । अइ भाणुमदि तुम्हाणं अमुक्केसु केसहत्थेसु कधं अम्हाण देवीए केसा सजमीअन्तित्ति । ( ततो मया परिकुप्य भणितम् । अयि भानुमति, युष्माकममुक्तेषु केशहस्तेषु कथमस्माकं देव्या केशा संयम्यन्त इति । )

---

अन्वय—साहचर्यात्, स्त्रीणाम्, चेतांसि, भर्तृसदृशानि, भवन्ति, हि, हि, विषविटपिसमाश्रिता मधुरा, अपि, वल्ली, मूर्च्छयते, ( जनम् ) ॥ २० ॥

पूर्वोक्तेऽर्थे प्रमाणमाह=स्त्रीणामिति । साहचर्यात्=सहवासात्, स्त्रीणां=नारीणाम्, चेतांसि=चित्तानि, भर्तृसदृशानि—पतितुल्यानि, भवन्ति, हि । हि अवधारणे । 'हि हेताववधारणे' इत्यमरः । हि=यत, विषविटपिसमाश्रिता=विषवृक्षाश्रिता, मधुरा=मधुररसा, अपि, वल्ली=लता, 'वल्ली तु व्रततिर्लता' इत्यमरः । मूर्च्छयते=मोहयति, जनमिति शेषः । आर्याछन्द. ॥ २० ॥

बुद्धिमतिके=बुद्धिमतिका नाम्नी चेटी तत्सम्बोधने । अभिहितम्=उक्तम् ।

परिहीन=विनष्टम्, मम मुखादनिःसृतमित्यर्थः । देवी=द्रौपदी, भणति=वदति, वदेदित्यर्थः ।

परिकुप्य=परिक्रुध्य, भणितम्=उक्तम् । अमुक्तेषु=बद्धेषु, केशहस्तेषु केशव्रातेषु 'हस्त' करे करिकरे सप्रकोष्ठकरेऽपि च । ऋचे केशात्परो व्राते, इत्यमरः । कथं=केन प्रकारेण संयम्यन्ते=बध्यन्ते ।

---

स्त्रियों को साथ में रहने के कारण उन के स्वभाव भी पतिदेव के सदृश ही होते हैं क्योंकि विष वृक्ष में उलझी हुई लता मीठी होती हुई भी मूर्च्छाकारी गुणों से युक्त हो जाती है ॥

भीमसेन—बुद्धिमतिके ! पुन देवी ने क्या समाधान किया ?

चेटी—कुमार, यदि मैं नहीं बोलती तो महारानी अवश्य उत्तर देतीं ( अर्थात् मेरे साथ रहते हुए महारानी को समाधान देने की कोई आवश्यकता नहीं )

भीमसेन—तुमने फिर क्या कहा ?

चेटी—कुमार मैंने इस प्रकार कहा, ऐ भानुमती, तुम लोगों के केश तो बँधे हुए हैं तो मेरी महारानी के केश क्यों बँधे रहेंगे ?

भीमसेनः—( सपरितोषम् । ) साधु बुद्धिमतिके, साधु । तदभिहितं यदस्मत्परिजनोचितम् । ( अधीरमासनादुत्तिष्ठन् । ) भवति पाञ्चालराजतनये, श्रूयताम् । अचिरेणैव कालेन ।

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावविद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥ २१ ॥

द्रौपदी—किं णाह, दुक्करं तुए परिकुविदेण । सव्वहा अणुगेह्णन्तु

अस्मत्परिजनोचितम् = आस्माकजनसमुचितम् । अचिरेण = शीघ्रेण ।

अन्वय.—( हे ) देवि, चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य, सुयोधनस्य, स्त्यानापविद्धघनशोणितशोणपाणिः, भीमः, तव, कचान् उत्तंसयिष्यति ॥२१॥

शीघ्रमेव शत्रून् विजित्य तव कचान् भन्त्स्यामीत्याह—चञ्चदिति । ( हे ) देवि = महिषि द्रौपदि । चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य = चञ्चद्भ्यां, चलद्भ्यां, भुजाभ्यां दोर्भ्यां, भ्रमिता, या चण्डगदा, भयावहशस्त्रविशेषः, तस्य अभिघातेन, हननेन, सञ्चूर्णितम्, ऊरुयुगलम्, सक्थिद्वयम्, यस्य, तस्य, सुयोधनस्य = दुर्योधनस्य = स्त्यानापविद्धघनशोणितशोणपाणिः = स्त्यानं, क्लिन्नम्, अपविद्धं, आविद्धम्, घनं, निविडं यच्छोणित, रुधिर, तेन शोणः, रक्तः पाणि., हस्तः यस्य सः, भीम. = अह तव, कचान् = केशान्, उत्तंसयिष्यति = अवभूपयिष्यति = तसु भूषायामिति निष्पन्नः । अत्र दुर्योधनोरुसञ्चूर्णनात्मकयुद्धवृत्तान्तरूपकाव्याऽर्थस्य निश्चयेनोपस्थितेः परिन्यासाख्य मुखाङ्गम् । तदुक्त दर्पणे—'तन्निष्पत्तिः परिन्यासः' इति । निष्पत्ति निश्चयेनोपस्थिति. । अत्र चञ्चद्भुजभ्रमितचण्डेत्यत्र वृत्त्यनुप्रासः शोणितशोणेत्यत्र छेकानुप्रासोऽलङ्कारः । वसन्ततिलका छन्द ॥ २१ ॥

भीम—( सन्तुष्ट होकर ) ठीक बुद्धिमतिके ठीक, तुमने वही कहा जो हम लोगों के भृत्यों को कहना चाहिये । ( व्याकुलाहट के साथ उठते हुए ) ऐ पाञ्चालपुत्रि, विषाद से कोई लाभ नहीं । अधिक मैं क्या कहू बहुत शीघ्र जो करूंगा उसे सुनिये ।

हे देवि ! [ यह ] भीम अपने चपल भुजदण्डों से घुमाये हुए भीषण गदा के प्रहार से सुयोधन के जङ्घों को रौंद कर निकाले गये सूख गाढ़े रक्त से निश्चल हाथों को रङ्गता हुआ तुम्हारे केशकलापों को सँवारेगा ॥ २१ ॥

द्रौपदी—स्वामिन् आप के क्रुद्ध हो जाने पर कौन कार्य्य दुष्कर है [ अर्थात् जिसे

एदं दवसिदं दे भादरो। ( किं नाथ, दुष्करं त्वया परिकुपितेन। सर्वथाऽनुगृह्णन्त्वेतद्व्यवसितं ते भ्रातरः। )

सहदेव—अनुगृहीतमेतदस्माभिः।

( नेपथ्ये महान्कलकलः। सर्वे सविस्मयमाकर्णयन्ति। )

भीमसेनः—

मन्थायस्तार्णवाऽम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः।

परिकुपितेन, त्वया किं, दुष्करम्—दुःसाध्यम्, न किमपीत्यर्थः। ते, भ्रातरः, एतद्व्यवसितं=इम व्यवसायम्, अनुगृह्णन्तु=अनुमन्यन्ताम्।

कलकलः=आकस्मिकोऽव्यक्तशब्दः।

अन्वय—मन्थायस्तार्णवाम्भः प्लुतकुहरचलन्मन्दरध्वानधीरः, कोणाघातेषु, ( सत्सु ) गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः, कृष्णाक्रोधाग्रदूतः, कुरुकुलनिधनोत्पातनिर्घातवातः, अस्मत्सिंहनादप्रतिरसितसखः, अयम्, दुन्दुभिः, केन, ताडितः॥२२॥

मन्थायस्तेति। मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः = मन्थः, मन्थनदण्डविशेषः, तेन आयस्तं चालितम् अर्णवाऽम्भः समुद्रजलं तेन प्लुतं, सलग्नं, कुहरं, मध्यं यस्य, तस्य चलतः, मन्दरस्य मन्दरनामकशैलस्य यः ध्वनिः, शब्दः तद्वद्धीरः, गम्भीरः। अस्य दुन्दुभिरित्यत्रान्वयः। एवमग्रिमस्यापि प्रथमान्तस्य। कोणाघातेषु = 'ढक्काशतसहस्राणि भेरीशतशतानि च। एकदा यत्र हन्यन्ते

---

आप न कर सकें ] ईश्वर करे आप के इस विचार से आप का भ्रातृवर्ग सहमत हो जाँय।

**सहदेव**—हम लोग सहमत हैं।

( नेपथ्य कोलाहल से गूँज जाता है। सब लोग आश्चर्य चकित हो कर सुन रहे हैं )।

**भीम**—मन्थन दण्ड (मन्दराचल) से प्रक्षिप्त समुद्र जल से पूर्ण कन्दरा सहित चलते हुए मन्दराचल की तरह गम्भीर घोषकारी, कोणाघात होने पर ( सौ हजार डमरू और दस हजार नगाडे एक साथ बजते हैं तो उसे कोणाघात कहते हैं ) प्रलय काल के गर्जते हुए मेघों की घटाओं के परस्पर टक्कर खाने से भीषण शब्दकारी, द्रौपदी के अथवा प्रलय रात्रि के अग्रदूत के समान, कौरवाधिनाथ [ सुयोधन ] के नाश सूचक उत्पात से उत्थित झञ्झावात की भाँति, तथा हम लोगों के सिंहनाद के सदृश इस नगाडे को किसने ठोंका है।

( अथवा ) अरे, इस नक्कारे को किसने बजाया ? इस की ध्वनि समुद्र मन्थन के समय मन्थन दण्ट से प्रक्षिप्त जल से परिपूरित कन्दरायुत मन्दराचल के भ्रमण कालीन गम्भीर ध्वनि की तरह है, प्रलय काल के गर्जते हुए मेघ मालाओं के परस्पर सन्ताडित होने पर

कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम् ॥२२॥

( प्रविश्य सम्भ्रान्तः । )

कञ्चुकी—कुमार, एष खलु भगवान्वासुदेवः ।

( सर्वे कृताञ्जलयः समुत्तिष्ठन्ति । )

भीमसेन—( ससम्भ्रमम् । ) क्वासौ भगवान् ।

कञ्चुकी—पाण्डवपक्षपातामर्षितेन सुयोधनेन संयमितुमारब्धः ।

( सर्वे सम्भ्रमं नाटयन्ति । )

---

कोणावातः स उच्यते ॥' इति । लक्षणलक्षितेषु सत्सु, गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः = गर्जन्तो ये प्रलयकालिकघनाः, तेषां—घटा, समुदायः, तस्या अन्योन्यसङ्घट्ट', परस्परसङ्घर्षः, तस्माच्चण्ड., विकटः, कृष्णाक्रोधाग्रदूतः = द्रौपदीकोपप्रथमकथकः, कुरुकुलनिधनोत्पानविर्घातवातः = कुरुवंशविनाशाशुभसूचकप्रचण्डवायुः, अस्मत्सिंहनादप्रतिरसितसखः = अस्माकं यः सिंहनादः, केशरिशब्दतुल्यशब्दः तस्य यत्, प्रतिरसित प्रतिरवः, तस्य सखा 'राजाह. सखिभ्यष्टच्' इति टच् प्रत्ययः । अयं, दुन्दुभिः=भेरी 'भेरी स्त्री दुन्दुभिः पुमान्' इति विश्वः । केन कर्त्रा, ताडितः=आहतः । अत्र दूत इत्यत्र वात इत्यत्र चोच्छेदे स्रग्धरा छन्दः । लक्षणमुक्तं तृतीयश्लोके ॥२२॥

कञ्चुकी = सौविदल्लः, राज्ञां स्त्र्यगारे बहीरक्षाधिकारीत्यर्थः ।

पाण्डवपक्षपातामर्षितेन = पाण्डुपुत्रपक्षग्रहणक्रुद्धेन, संयमितुं = बद्धुम् । स्वार्थे णिच्, ततस्तुमुन्प्रत्ययः ।

---

निकलने वाला भीषण निर्घोष को भी जीत लेती है । यह ( नक्कारा ) द्रौपदी के अथवा प्रलय काल की रात्रि के क्रोध का सूचक है इतना ही नहीं, किन्तु सुयोधन के नाश के लिये उत्पात कालीन झञ्झावात की तरह है और हम लोगों के सिंहनाद की भाँति इस में से ध्वनि निकलती है ॥ २२ ॥

( प्रवेश कर घबडाया हुआ )

कञ्चुकी—कुमार, ये भगवान वासुदेव ··

( सब लोग हाथ जोडकर खडे हो जाते हैं ) ।

भीमसेन—( अत्यन्त आतुर होकर ) कहाँ, कहाँ हैं, भगवान वासुदेव ?

कञ्चुकी—पाण्डवों के पक्षपात से क्रुद्ध होकर सुयोधन ने भगवान वासुदेव को पकडने के लिये उद्यत हुआ है ।

( सब व्याकुल हो जाते हैं )

भीमसेन.—किं संयतः ।

कञ्चुकी—नहि नहि, सर्यमितुमारब्धः ।

भीमसेन.—किं कृतं देवेन ।

कञ्चुकी—ततः स महात्मा दर्शितविश्वरूपतेजःसम्पातमूर्च्छितमवधूय कुरुकुलमस्मच्छिबिरसन्निवेशमनुप्राप्तः कुमारमविलम्बितं द्रष्टुमिच्छति ।

भीमसेनः—( सोपहासम् । ) किं नाम दुरात्मा सुयोधनो भगवन्तं संयमितुमिच्छति । ( आकाशे दत्तदृष्टिः । ) आः दुरात्मन्कुरुकुलपांसुल, एवमतिक्रान्तमर्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन भवितव्यम् ।

सहदेव—आर्य, किमसौ दुरात्मा सुयोधनहतको वासुदेवमपि भगवन्तं स्वरूपेण न जानाति ।

भीमसेन—वत्स, मूढः खल्वयं दुरात्मा कथं जानातु । पश्य ।

---

दर्शितविश्वरूपतेजःसम्पातमूर्च्छितम् = दर्शितं, यद्, विश्वरूप [विराट्शरीरम्] तस्य यत्तेजः तस्य यः सम्पातः, मेलनम्, ; तेन मूर्च्छितम्, कुरुकुलं दुर्योधनादीन्, अवधूय = तिरस्कृत्य ।

कुरुकुलपांसुल = कुरुकुलपापिष्ठ ।

स्वरूपेण = ईश्वररूपेण ।

---

**भीमसेन**—क्या पकड़ लिया ।

**कञ्चुकी**—नहीं, नहीं, पकड़नेके लिये तय्यार हुआ ।

**भीम**—भगवान ने क्या किया ?

**कञ्चुकी**—अनन्तर उस योगीश्वर ने प्रदर्शित अपने विराट स्वरूप तेज पुंज से कौरवों को चकाचौंध कर हम लोगों के शिबिर पर चले आये हैं आपको शीघ्र ही देखना चाहते हैं ।

**भीमसेन**—( हँसता हुआ ) क्या दुरात्मा सुयोधन भगवान वासुदेव को बन्धन में डालना चाहता है ( आकाश की ओर अवलोकन कर ) अरे ! दुष्ट, कुरुकुलाङ्गार !, इस प्रकार तूने अपनी मर्य्यादा का उच्छेद कर दिया है कि तुम्हारे नाशार्थ पाण्डवों का क्रोध तो निमित्त कारण मात्र होगा ( अर्थात् तेरा पाप ही तुझे चाट जायगा ) ।

**सहदेव**—आर्य्य, क्या यह दुराचारी सुयोधन भगवान वासुदेव के स्वरूप से परिचित नहीं है ?

**भीम**—प्रिय भ्रात मूढ यह पापात्मा कैसे जान सकता है देखो —

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोत्सेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्ता
त्तं मोहान्धः कथमयममु वेत्ति देवं पुराणम् ॥ २३ ॥

आर्य जयन्धर, किमिदानीमध्यवस्यति गुरुः ।

---

अन्वय —आत्मारामाः, निर्विकल्पे, समाधौ, विहितरतयः, ज्ञानोत्सेकात्, विघटिततमोग्रन्थयः, सत्त्वनिष्ठाः, तमसाम् , ज्योतिषाम् , वा, परस्तात् , यम् , कम् अपि, वीक्षन्ते, तम् , पुराणम् , अमुम् , मोहान्ध , अयम् , कथम् , वेत्ति ॥ २३ ॥

वासुदेवो न साधारणमनुष्यज्ञानविषय ईश्वरत्वेन भवितुमर्हतीत्याह—आत्मारामा इति । आत्मारामाः=आ सम्यक् रमते अस्मिन्निति आरामः, रमणस्थानम्, आत्मा आरामः येषां ते आत्मारामाः, आत्मनिष्ठा , योगिन इत्यर्थः । अथवा आत्मनि आ समन्तात् रमन्त इत्यात्मारामाः, निर्विकल्पे=विकल्पो विकल्पना मिथ्याज्ञानमित्यर्थः स निर्गतो यस्मात्, तस्मिन्, समाधौ=ध्यातृध्यानपरित्यागपूर्वकध्येयमात्रविषयकज्ञाने, अथवा ध्यानोत्तरकालिकयोगाङ्गविशेषे, ( च ) विहितरतयः=कृतानुरागाः, ज्ञानोत्सेकात्=ज्ञानस्योत्सेको विशुद्धता तत्त्वज्ञानादित्यर्थः । विघटिततमोग्रन्थयः=विघटिताः, दूरीकृताः तमोग्रन्थयः, तूलाविद्या यैः ते, एतेन रजस्तमोराहित्य सूचितम् । तमसाम्=अन्धकाराणाम्, ज्योतिषां=तेजसाम् , वा, परस्तात्=भिन्नम् , तदुक्तं श्रुतौ—'तस्य भासा सर्वमिदं विभाति ।' इति । यम्=परमात्मानं, कमपि=अनिर्वचनीयम् वीक्षन्ते=पश्यन्ति, पुराणम्=आद्यन्तहीनम्, तम्, देवं=पर ब्रह्म, अमुं=कृष्णम् , मोहान्धः=तमोगुणावृतः, अयं=दुर्योधनः, कथं, वेत्ति=जानाति, न कथमपीत्यर्थः । एतेन योगिनामेव गम्योऽयमिति सूचितम् । मन्दाक्रान्ताछन्दः । मन्दाक्रान्ताम्बुधिरसनगैर्मो भ नौ गौ य युग्ममिति लक्षणात् ॥ २३ ॥

अध्यवस्यति=सम्पादयति ।

---

कल्पनातीत समाधि लगा कर आत्मारूपी उपवन में पूर्णतया अनुरक्त, ज्ञान के आधिक्य से तमोगुण की ग्रन्थियों के विच्छेदक सत्त्वगुणालम्बनकर्त्ता योगीजन अन्धकार से परे अथवा प्रकाश से परे जिस किसी को देख पाते हैं । इस पुराण पुरुष को मूढ सुयोधन किस प्रकार समझ सकता है ॥ २३ ॥

आर्य्य जयन्धर, अब महाराज क्या करना चाहते हैं ?

कञ्चुकी—स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः। ( इति निष्क्रान्तः। )

( नेपथ्ये कलकलानन्तरम्। )

भो भो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयोऽस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च, शृण्वन्तु भवन्तः।

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते॥ २४॥

अन्वय—सत्यव्रतभङ्गभीरुमनसा, ( कर्त्रा ) यत्, यत्नेन, मन्दीकृतम्, कुलस्य, शान्तिम्, इच्छता, शमवता, यत्, विस्मर्तुम्, अपि, ईहितम्, द्यूतारणिसम्भृतम्, तत्, यौधिष्ठिरम्, इदम्, क्रोधज्योतिः, नृपसुताकेशाम्बराकर्षणैः, महत्, (सत्) कुरुवने जृम्भते॥ २४॥

यत्सत्यव्रतेति। सत्यव्रतभङ्गभीरुमनसा=सत्यमेव व्रतं सत्यव्रतं तस्य भङ्गः, विच्छेदः तस्मात् भीरु, भीतम् मनः यस्य, तेन, यत्=क्रोधज्योतिः, यत्नेन=आयासेन, मन्दीकृतम्=अल्पीकृतम् न तु विनाशितमिति भावः। क्रोधमन्दो यदि न स्यात्तदा सत्यभङ्गः स्यादित्येव भीरुरिति भावः, कुलस्य = वंशस्य शान्तिं = शमनम् इच्छता = अभिलषता शमवता = शान्तेन, मयेत्यर्थः। यद्, विस्मर्तुम् = विस्मृतिं कर्तुम्, अपि, ईहितम् = चेष्टितम्, द्यूतारणिसम्भृत=द्यूतमरणिः वह्निमन्थनदारु इव तेनोत्पन्न, तत्, यौधिष्ठिरं = युधिष्ठिरे भवम् इदम्, क्रोधज्योतिः = ज्योतिरिव क्रोधः, उपमितसमासः। नृपसुताकेशाम्बराकर्षणैः = द्रौपदीकचवस्त्राकर्षणैः, महत्=

कान्चुकी—स्वयं कुमार महाराज के यहां जाकर उनके कर्तव्य को समझ सकते हैं ( चला गया )

( नेपथ्य की कल कल ध्वनि के पश्चात् )

अये, अये, द्रुपद, विराट, वृष्णि, अन्धक और सहदेव प्रभृति मेरी अक्षौहिणी सेना के नायकों, तथा कौरवसेना के अग्रगण्य शूरवीरों, आप लोग ध्यानदें! जिस क्रोध की ज्वाला को सत्य व्रत परायण अपने व्रत भंग की आशङ्का से बड़े परिश्रम के साथ मन्द किया था, जिस को शान्ति के पुजारी ने कुल के कल्याण की कामना से भूल जाने का निश्चय करलिया था वह द्यूत रूपी अरणी नाम के काष्ठ में अन्तर्हित युधिष्ठिर के क्रोध की ज्योति द्रौपदी के केश और वस्त्रों के आकर्षण से कौरववन में अगड़ाई ले रही है॥ २४॥

भीमसेन —( आकर्ण्य । सहर्षम् । ) जृम्भतां जृम्भतामप्रतिहतप्रसरमार्यस्य क्रोधज्योतिः ।

द्रौपदी—णाह, किं दाणीं एसो पलअजलहरत्थणिदमंसलोद्धोसो क्खणे क्खणे समरदुन्दुही ताडीअदि । ( नाथ, किमिदानीमेष प्रलयजलधरस्तनितमांसलोद्घोषः क्षणे क्षणे समरदुन्दुभिस्ताड्यते । )

भीमसेन—देवि, किमन्यत् । यज्ञः प्रवर्तते ।

द्रौपदी—( सविस्मयम् । ) को एसो जण्णो । ( क एष यज्ञः । )

भीमसेन —रणयज्ञः । तथाहि ।

चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः

---

संवृद्ध सत् कुरुवने = वन इव कुरुराजे, जृम्भते = प्रकाशते । अत्र न कुत्रापि रूपकसमासः विस्मरणकेशाम्बराकर्षणकृतमहत्त्वयोः ज्योतिष्यसम्बन्धादनन्वयापत्तेः । अत्र पूर्वार्द्धे हेतोः पदार्थत्वेन काव्यलिङ्गद्वयम् , उत्तरार्द्धे धृतारणीत्यत्र क्रोधज्योतिरित्यत्र कुरुवन इत्यत्र च लुप्तोपमात्रयम् । शार्दूलविक्रीडितं छन्दः ॥ २४ ॥

प्रलयेति—प्रलयकालिकमेघस्य मन्थरस्तनितं, धीरगर्जितम् तद्वन्मांसलः बलवान् उद्घोषः शब्दः यस्य सः । समरदुन्दुभिः = युद्धकालिकभेरी ।

अन्वय.—वयम् , चत्वारः, ऋत्विजः, सः, भगवान् , हरिः, कर्मोपदेष्टा, नरपतिः, सङ्ग्रामाध्वरदीक्षितः, पत्नी, गृहीतव्रता, कौरव्याः, पशवः, फलम् , प्रियापरिभवक्लेशोपशान्तिः, राजन्योपनिमन्त्रणाय, यशोदुन्दुभिः, स्फीतम् , रसति ॥ २५ ॥

सङ्ग्राम यज्ञरूपेण वर्णयति—चत्वार इति । वयं = भीमादयः, चत्वारः = चतुःसङ्ख्याकाः, ऋत्विजः = वृताः सन्तो यज्ञकर्तारः, हरिः = कृष्णः, स भगवान् , कर्मो-

---

भीमसेन—( सुनकर हर्ष और क्रोध के साथ ) भडक उठे, भडक उठे महाराज के क्रोध की ज्वाला बिना किसी अवरोध के भली भांति बढे ।

द्रौपदी—स्वामिन् , इस समय भीषण निर्घोष के कारण असह्य, प्रलयकालिक मेघगर्जन के सदृश गर्जनकारिणी यह रणभेरी ( नागाडा ) प्रतिक्षण क्यों बजाई जारही है ?

भीमसेन—देवि, और कुछ नहीं । यज्ञ का प्रारम्भ है ।

द्रौपदी—यह कौन यज्ञ है ?

भीमसेन—रणयज्ञ, देखिए —

हम लोग चारो भाई ऋत्विज हैं, भगवान वासुदेव यज्ञीय-विधानोपदेशक आचार्य्य हैं, भूमिपाल युधिष्ठिर यजमान हैं, व्रतधारण की हुई द्रौपदी [ इस यज्ञ में ] पत्नी हैं

सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः ॥२५॥

सहदेव—आर्य, गच्छामो वयमिदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम् ।

भीमसेनः—वत्स, एते वयमुद्यता आर्यस्यानुज्ञामनुष्ठातुमेव । (उत्थाय ।) तत्पाञ्चालि, गच्छामो वयमिदानीं कुरुकुलक्षयाय ।

द्रौपदी—( बाष्पं धारयन्ती । ) णाह, असुरसमराहिमुहस्स हरिणो विअ मङ्गलं तुम्हाणं होदु । जं च अम्बा कुन्दी आसासदि तं तुम्हाणं होदु । ( नाथ, असुरसमराभिमुखस्य हरेरिव मङ्गलं युष्माकं भवतु । यच्चाम्बा कुन्त्याशास्ते तद्युष्माकं भवतु । )

---

पदेष्टा = आचार्य', नरपतिः = युधिष्ठिरः, सङ्ग्रामाध्वरदीक्षितः = सङ्ग्रामः, अध्वर इव तत्र दीक्षितः, पत्नी = द्रौपदी, गृहीतव्रता = आचरितनियमा, कौरव्याः = कुरुवंशजाताः, पशवः = यज्ञे आलम्भनीया जन्तुविशेषाः, फलं = लाभः, प्रियापरिभवक्लेशोपशान्ति' = द्रौपदीतिरस्कारजन्यदुःखविनाशः, राजन्योपनिमन्त्रणाय = क्षत्रियाह्वानाय, स्फीतं, यथास्यादेवम् , यशोदुन्दुभिः, रसति = शब्दं करोति । अत्रोद्भेदाख्य नाटकाङ्गम् तदुक्तं दर्पणे—बीजार्थस्य प्ररोहः स्यादुद्भेद.' इति । शार्दूलविक्रीडित छन्द. ॥ २५ ॥

---

कौरव बलि के लिये पशु का काम देंगे, प्रियतमा के अपमानजनित दुःख की शान्ति ही इस यज्ञ के विधान का फल होगा। राजाओं को निमन्त्रित करने के लिये यह मूर्ति मती यश की दुन्दुभि बार २ बज रही है ॥ २५ ॥

**सहदेव**—आर्य, अब हमलोग भी पूज्यलोगों से आज्ञा प्राप्त कर अपने २ बल पराक्रम के अनुसार कार्य्य करने के लिये चलें।

**भीमसेन**—वत्स, ये हम लोग महाराज की आज्ञापालन के लिये ही उद्यत हैं (उठकर) पाञ्चालपुत्रि, अब हम लोग कुरुवंश के नाशार्थ चल रहे हैं।

**द्रौपदी**—( अश्रु भर कर ) नाथ, दैत्यों के साथ युद्ध के लिये प्रस्थित विष्णु भगवान की भाँति आप लोगों का मङ्गल हो। और आप लोगों के लिये जिस मगल की कामना माता कुती करती हैं वह भी हो।

उभौ—प्रतिगृहीतं मङ्गलवचनमस्माभिः ।

द्रौपदी—अण्णं च णाह, पुणोवि तुम्हेहिं समरादो आअच्छिअ अहं समास्सासइदव्वा । ( अन्यच्च नाथ, पुनरपि युष्माभिः समरादागत्याहं समाश्वासयितव्या । )

भीमसेन—ननु पाञ्चालराजतनये, किमद्याप्यलीकाश्वासनया ।

भूयः परिभवक्लान्तिलज्जाविधुरिताननम् ।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम् ॥ २६ ॥

द्रौपदी—णाह, मा क्खु जण्णसेणीपरिहवुद्दीविदकोवाणला अणवेक्खिदसरीरा सञ्चरिस्सध । जदो अप्पमत्तसञ्चरणिज्जाइं रिउबलाइं सुणीअन्ति । ( नाथ ! मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनवेक्षितशरीराः संचरिष्यथ । यतोऽप्रमत्तसंचरणीयानि रिपुबलानि श्रूयन्ते ।

भीमसेन—अयि सुक्षत्रिये,

---

प्रतिगृहीतम्=स्वीकृतम् ।

अन्वय—भूयः परिभवक्लान्तिलज्जाविधुरिताननम् , अनिःशेषितकौरव्यम्, वृकोदरम् , न, पश्यसि ॥ २६ ॥

निहतकौरवमेव मां त्व पश्यसीत्याह—भूय इति । भूयःपरिभवक्लान्तिलज्जाविधुरिताननम्=भूयान् , बहुलो यः परिभवः, परीभावः तेन या क्लान्तिः, ग्लानिः तया या लज्जा तया विधुरितम् , उदस्तम् , आननम् , मुखं यस्य तम् , अनिःशेषितकौरव्यम्=अनिःशेषिताः समूलमविनाशिताः कौरव्याः येन तम् , वृकोदरम्=भीमम् , न, पश्यसि=द्रक्ष्यसि, वर्तमानसामीप्ये, भविष्यति लट् । अत्र हेतोः पदार्थत्वेन काव्यलिङ्गमलङ्कारः । पथ्यावक्त्र छन्दः ॥ २६ ॥

---

दोनों—[ सहदेव और भीम ]—आप के आशीवेचनों को हम लोगों ने स्वीकार कर लिया ।

द्रौपदी—नाथ ! आप रणभूमि से आकर फिर मुझे आश्वासित करें ।

भीमसेन—पाञ्चाली, आज इस असत्य आश्वासन से क्या ?

निरन्तर के अपमान से उत्पन्न दुःख और लज्जा से म्लान मुखवाले भीम को कौरवों के समाप्त हुये विना न देखोगी ॥ २६ ॥

द्रौपदी—नाथ, मुझ याज्ञसेनीके अपमान से क्रोधाग्नि को उद्दीप्त करके अपने शरीर की उपेक्षा करके संग्राम में न जाना क्यों कि सुना जाता है कि बड़ी सावधानी के साथ शत्रुसैन्य का अनुसरण करना चाहिए ।

भीमसेन—अयि, क्षत्रियवरे !

अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः॥२७॥

(इति निष्क्रान्ताः सर्वे।)

## इति प्रथमोऽङ्कः।



अन्वय—अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के, मग्नानाम्, स्यन्दनानाम्, उपरिकृतपदन्यासविक्रान्तपत्तौ, स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे सङ्ग्रामैकार्णवान्त पयसि, विचरितुम्, पाण्डुपुत्राः पण्डिताः॥२७॥

अन्योऽन्येति। अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के = अन्योन्यास्फालः, परस्परसङ्घर्षः, तेन भिन्ना ये द्विपाः, हस्तिनः तेषां यानि रुधिरवसामांसमस्तिष्कानि, तान्येव पङ्कम् तस्मिन्, मग्नानां = पतितानाम्, स्यन्दनानां = रथानाम्, उपरिकृतपदन्यासविक्रान्तपत्तौ = उपरिकृतः, पदन्यासः यया सा विक्रान्तपत्तिः वीरसेनाविशेषः यस्मिन्, तदुक्तं भरतेन—

एको रथो गजश्चैको भटाः पञ्च पदातयः। त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते॥ इति।

तस्मिन्, स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे = स्फीतासृजां या पानगोष्ठी, पानसभा, तस्यां रसन्त्यः, नदन्त्यः या अशिवा, अमङ्गलहेतुभूताः शिवाः, शृगाल्यः तत्स्वरूप एव तूर्यः, वाद्यविशेषः तेन नृत्यन्तः कबन्धाः, अमस्तकदेहाः यस्मिन् तस्मिन्, सङ्ग्रामैकार्णवान्तः पयसि = सङ्ग्रामः एकार्णवान्तः पय इव तस्मिन्, विचरितुं=सञ्चरितुम्, पाण्डुपुत्राः=युधिष्ठिरादयः, पण्डिताः=अभिज्ञः। अत्रोपमा रूपकं चालङ्कारः। स्रग्धराछन्दः। लक्षणमुक्तं तृतीयश्लोके॥ २७॥

इति प्रबोधिनीव्याख्यायां प्रथमोऽङ्कः।



जिस समर भूमिसमुद्र के गम्भीर जल में, परस्पर अभिहत हाथियों के फूटे हुए मस्तक से निकलते हुये रक्त, मास, चर्वी तथा मस्तिष्क के कीचडबीच धँसे हुए रथोंपर पैर रख कर पैदल योद्धा आक्रमण कर रहे हों और विशुद्ध रक्त के प्रीतिसहभोज में आस्वादन करके अमगल शब्द करती हुई शृगाली को तुरही मान कबन्ध नृत्य कर रहे हों, उस में विचरण करने के लिए पाण्डव दक्ष हैं॥ २७॥

प्रथमाङ्क समाप्त।



# द्वितीयोऽङ्कः

( ततः प्रविशति कञ्चुकी । )

कञ्चुकी—आदिष्टोऽस्मि महाराजदुर्योधनेन—'विनयंधर, सत्वरं गच्छ त्वम् । अन्विष्यतां देवी भानुमती । अपि निवृत्ता अम्बायाः पादवन्दनसमयान्न वेति । यतस्तां विलोक्य निहताभिमन्यवो राधेयजयद्रथप्रभृतयोऽस्मत्सेनापतयः समरभूमिं गत्वा समाजयितव्याः' इति । तन्मया

---

पुण्यानामुद्भवेन प्रणिहततमसाविन्दिराद्दृष्टिपाता-
च्छित्वा तृष्णां सुखेष्वाशुभवबनहरिं भङ्गुरेष्वैहिकेषु ।
ज्ञानाढ्यणाऽऽनादिनित्यं सदमरपुरुष योगिनौ द्रष्टुकामौ
नित्यानन्दाश्रयाख्यौ शमितनिजरिपू नौमि नम्रः पितृव्यौ ॥१॥

वीररसप्रधाननाटकेऽस्मिन् प्रथमेऽङ्के युद्धसूचकदुन्दुभिताडनादिना वर्णिते कुरुपाण्डवयुद्धप्रारम्भे—'एक एव भवेदङ्गी शृङ्गारो वीर एव वा । अङ्गमन्ये रसाः सर्वे ।' इति दर्पणात् । सर्वान्तर्गतशृङ्गाररस वर्णयितु द्वितीयोऽङ्क आरभ्यते—द्वितीयोऽङ्क इति । केचित्तु—अत्र शृङ्गाररसवर्णनमयुक्तमित्याहु' । 'दूराह्वानं वधो युद्ध राज्यदेशादिविप्लव' । स्नानानुलेपने चैभिर्वर्जितो नास्तिविस्तरः ॥' इति दर्पणकारवचनाद् ।

युद्धेऽभिमन्युवध रङ्गभूमावप्रदर्श्य कञ्चुकिमुखेन वर्णयितुमाह—कञ्चुकीति ।

महाराजदुर्योधनेन = कौरवराजेन, विनयन्धरेत्यादिसभाजयितव्या इत्यन्तस्य आदिष्टोऽस्मि = आज्ञापितोऽस्मि, इत्यनेनान्वयः । विनयन्धरः = विनयन्धरनामककञ्चुकिविशेष' । सत्वरम् = त्वरया सहितम् , शीघ्रमित्यर्थ' । अन्विष्यताम् = अन्वेषणं क्रियताम् , देवी = कृताभिषेका भानुमती = दुर्योधनस्त्री । अपिशब्दः प्रश्ने, किमित्यर्थ' । अम्बाया' = मातु' गान्धार्या', पादवन्दनसमयात् = चरणवन्दनरूपाचारात् , 'समयाः शपथाचारकालसिद्धान्तसंविदः, इत्यमर' । निवृत्ता = परावृत्ता, नवेत्यन्वयः । ताम् = भानुमतीम् विलोक्य = दृष्ट्वा, निहताभिमन्यवः = निहतः अभिमन्यु' यैः ते । राधेय. = कर्णः । जयद्रथ. = दुर्योधनस्य स्वसृपतिः । समरभूमिं = सङ्ग्रामस्थानम् । सभाजयितव्या' = ससम्मानमभिनन्दनीयाः । तत् =

---

( कञ्चुकी का प्रवेश )

कञ्चुकी—महाराज दुर्योधन के द्वारा मुझे आज्ञा दी गई है—'विनयन्धर ! तू शीघ्र जा भानुमती का अन्वेषण कर । माता जी का पादवन्दन करके वे लौटीं या नहीं । क्यों कि उन्हें देख कर मुझे रणक्षेत्र में जाकर कर्ण, जयद्रथ इत्यादि अपने सेनापतियों को, जिन्हों ने अभिमन्यु का वध किया है, सम्मानित करना है'—अत मुझे शीघ्र जाना चाहिए ।

द्रुततरं गन्तव्यमिति । अहो प्रभविष्णुता महाराजस्य, यन्मम जरसाभिभूतस्य मर्यादामात्रमेवावरोधव्यापारः अथवा किमिति जरामुपालभेय, यतः सर्वान्तःपुरचारिणामयमेव व्यावहारिको वेषश्चेष्टा च । तथाहि—

नोच्चैः सत्यपि चक्षुषीक्षितुमलं श्रुत्वापि नाकर्णितं
शक्तेनाप्यधिकार इत्यधिकृता यष्टिः समालम्बिता ।

---

तस्मात् , मया = कन्चुकिना, द्रुततरम् = अतिशीघ्रम् । अहो = अद्भुतम् , महाराजस्य = दुर्योधनस्य, प्रभविष्णुता = प्रभुता, इत्यन्वयः ।

तदेवाह—यदिति । जरसाभिभूतस्य = वृद्धस्य, मर्यादामात्रम् = नाहं रक्षितुं समर्थः किन्तु मम सम्मानमात्रमेवेति भावः। अवरोधव्यापारः=अन्तःपुररक्षणम्। उपालभेय = आक्षिपेयम् । व्यावहारिकः=व्यवहारसम्बन्धी, वेषः=आकल्पः, 'आकल्पवेषौ नेपथ्य'मित्यमरः । चेष्टा = क्रिया ।

अन्वय —चक्षुषि, सति, अपि, उच्चैः, ईक्षितुम् , अलम् , न, श्रुत्वा, अपि, न आकर्णितम् , शक्तेन, अपि, ( मम ) अधिकार इति, ( हेतोः ) अधिकृता, यष्टिः, समालम्बिता, तथा, सर्वत्र, स्खलितेषु, दत्तमनसा, ( अतएव ) उद्धतम् , न, यातम् , सेवाऽन्धीकृतजीवितस्य मे, यत् , ( तत् ) जरसा, किम् , नाम, कृतम् ॥

अन्तःपुरस्थजनानां वेषादीनाह—नोच्चै सत्यपीति ।

चक्षुषि = नेत्रे, सत्यपि = वर्तमानेऽपि, उच्चैः = ऊर्ध्वम् । ईक्षितुं = द्रष्टुम् , अलं = समर्थः, न, एतेन अन्तःपुरस्थरक्षकानामधोदृष्टिः कर्तव्येतिसूचितम् । श्रुत्वा= आकर्ण्य, अपि, न, आकर्णितम् = श्रुतम् , श्रुतमपि अश्रुतमेवेति भावः । शक्तेन = यष्टिं विना गमनसमर्थेन, अपि, ममेत्यध्याहारः । मम, अधिकार इति = मम कञ्चुकिनोऽधिकारो यष्टिसमालम्बनमिति हेतोः, अधिकृता = ग्रहणार्हा, यष्टिः = यष्टिका, समालम्बिता = गृहीता, एतेनान्तःपुरनिवासयोग्योऽहमशक्तत्वादिति सूचितम् । तथा = तेनैव प्रकारेण सर्वत्र = सर्वस्थानेषु, स्खलितेषु = चलनव्यापारप्रत्ययेषु,

---

राजाधिराज की बात है—मुझ बुड्ढे की अन्त पुर ( रनिवास ) के कार्य्य में नियुक्ति मर्य्यादा की रक्षा मात्र है अर्थात् मैं तो नाम मात्र के लिए हू महाराज के प्रतापसे ही अन्त पुर की रक्षा है अथवा मुझे बुढापे में भी ये कार्य करने पडते हैं । और बुढापा को क्या दोष दूँ क्यों कि सभी अन्त पुर के कर्मचारियों की वेषभूषा भी व्यवहारानुकूल होती है जैसा कि सुनाजाता है.—

सेवार्थ जीते हुए पुरुष आँखें होते हुए भी उसे ऊपर उठाकर नहीं देखसकते; सुन कर भी अनसुनी करजाते हैं, सामर्थ्य रहते हुए भी राजचिन्ह के नाते दण्ड ग्रहण किए

सर्वत्र स्खलितेषु दत्तमनसा जातं तथा नोद्धतं
सेवान्धीकृतजीवितस्य जरसा किं नाम यन्मे कृतम् ॥ १ ॥

( परिक्रम्य दृष्ट्वा । आकाशे । ) विहङ्गिके, अपि श्वश्रूजनपादवन्दनं कृत्वा प्रतिनिवृत्ता भानुमती । ( कर्णं दत्वा । ) किं कथयसि—आर्य, एषा भानुमती देवी पत्युः समरविजयाशंसया निर्वर्तितगुरुजनपादवन्दनाद्य-प्रभृत्यारब्धनियमा देवगृहे बालोद्याने तिष्ठतीति । तद्भद्रे, गच्छ त्वमात्म-व्यापाराय यावदहमप्यत्रस्थां देवीं महाराजस्य निवेदयामीति । (परिक्रम्य ।)

दत्तमनसा = दत्त मनः येन तेन, उद्धतं यथा स्यात्तथा, न जातम् = न भूतम्, गमने औद्धत्यं न कर्तव्यमिति भाव । तथाच सेवान्धीकृतजीवितस्य = सेवया अन्धीकृतम् व्यर्थीकृतं जीवितं जीवन येन तस्य, मे = मम, यत् मदीयङ्कार्यम्, तव, जरसा = वार्द्धक्येन, किन्नाम कृतम्, न किमपीत्यर्थः । जरा नोपलम्भनीयेतिभावः ।

अत्र चक्षुरादिकारणानां सत्त्वेऽपि दर्शनसामर्थ्यादिकार्याणामभावाद्विशेषोक्तय. । तथा पूर्वोक्तदर्शनसामर्थ्याभावादिकार्याणां हेतो. सेवान्धीकृतजीवितस्येत्येतत्पदार्थ-त्वेन काव्यलिङ्गम् । शार्दूलविक्रीडित छन्द. ॥ १ ॥

आकाश इति—पात्र विनाऽनुक्तमपि विषयं श्रुत्वेव किं कथयसीत्यर्थकं वाक्यं यदुच्यते तदाकाशवचन कथ्यत इति भाव । तथाचात्र विहङ्गिकाया अभावेऽपि तयोक्त मत्वा स्वयमेव प्रश्नोत्तरे करोति कञ्चुकी । कञ्चुकी पृच्छति—विहङ्गिक इति । विहङ्गिका काचित् तन्नामिका परिचारिका ।

प्रतिनिवृत्ता = समागता भानुमती = दुर्योधनस्त्री । पत्युः = स्वामिनो दुर्योध-नस्य, समरविजयाऽऽशंसया = सङ्ग्रामजयेच्छया, निर्वर्तितगुरुजनपादवन्दना = सम्पा-दितश्रेष्ठजनप्रणामा, अद्यप्रभृति = अद्यारभ्य, आरब्धनियमा = उपक्रान्तव्रता, देव-गृहे = देवस्य गृह यस्मिन् तस्मिन् बालोद्याने = नूतनक्रीडास्थाने, तिष्ठतीति । तत् = तस्मात् भद्रे = साध्वि । आत्मव्यापाराय = स्वकार्याय । अत्रस्थाम् = उद्यान-स्थाम्, देवीं = भानुमतीम्, महाराजस्य = दुर्योधनस्य । किमिति—बलवन्तु

रहते हैं, त्रुटि होने के सभी स्थानों से सावधान रहते हैं । अत मैं भी फूँक फूँक कर चलता हूं, इस में बुढापा का क्या दोष है ॥ १ ॥

( घूमकर देखता है फिर आकाश की ओर ) विहङ्गिके ! क्या भानुमती अपने सासु के चरणों की वन्दना करके लौट आई ? ( कान लगाकर ) क्या कहते हो ?—आर्य, यह देवी भानुमती अपने पतिदेव के सग्राम में विजय प्राप्त करने की अभिलाषा से गुरुजनोंके चरणोंको वन्दना करके लौट आई हैं और आजसे व्रत का सकल्प कर के देवमन्दिर की

साधु पतिव्रते, साधु, स्त्रीभावेऽपि वर्तमाना वरं भवती न पुनर्महाराजः। योऽयमुद्यतेषु बलवत्सु अथवा किं बलवत्सु वासुदेवसहायेषु पाण्डुपुत्रेष्वरिष्वद्याप्यन्तःपुरविहारसुखमनुभवति। (विचिन्त्य।) इदमपरमयथातथं स्वामिनश्चेष्टितम्। कुतः।

आ शस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो

नास्ति किन्तु वासुदेवसहायत्वमेव महद्बलमित्यर्थः।

वासुदेवेति—वासुदेवसहायेष्वित्यनेन पाण्डुपुत्रेषु दुर्जेयवैरित्वं सूचयति।

अन्वय—आ, शस्त्रग्रहणात्, अकुण्ठपरशोः, तस्य, मुनेः, अपि, जेता, अयम्, भीष्मः, पाण्डुसूनुभिः, शरैः, शायितः, (तत्) अस्य, तापाय, न, (किन्तु) प्रौढानेकधनुर्धरारिविजयश्रान्तस्य, एकाकिनः, अरातिलूनधनुषः, च, बालस्य, अभिमन्योः, वधात्, अयम्, प्रीतः, (अस्ति)॥ २॥

अयथातथकारणमाह—आशस्त्रग्रहणादिति। आशस्त्रग्रहणात् = शस्त्रग्रहणमभिव्याप्य, अकुण्ठपरशोः—सफलकुठारस्य, तस्य = प्रसिद्धस्य, मुनेः = परशुरामस्य, अपि, जेता = जयकर्ता, अयम्, भीष्मः = गङ्गातनयः, पाण्डुसूनुभिः, शरैः = वाणैः, शायितः = स्वापितः पातित इत्यर्थः। यः खलु परशुरामस्य जेता भीष्मः सोऽपि पाण्डुपुत्रैः पातित इति भावः। तत्, अध्याहारस्तत्पदस्य। अस्य = मत्स्वामिनो दुर्योधनस्य, तापाय = दुःखाय न किन्तु प्रौढानेकधनुर्धरारिविजयश्रान्तस्य = प्रौढाश्च ते अनेकधनुर्धरा इति प्रौढानेकधनुर्धराः ते च अरयः तेषां विजयेन श्रान्तस्य, एकाकिनः = असहायस्य, अरातिलूनधनुषः = अरातिना शत्रुणा लूनं धनु-

क्रीडावाटिका में ठहरी हुई है। अत कल्याणि, जाओ अपने कार्य्य में लगजाओ तब तक मैं भी यहां वाटिकास्थ महारानी की सूचना महाराज को दे दूँ। (घूमकर) धन्य! पतिव्रतपराधणे धन्य!! आप स्त्री हो कर भी अच्छी हैं महाराज नहीं क्योंकि पाण्डव इन के शत्रु शिर पर खड़े हैं चाहे वह प्रवल हों चाहे निर्वल, हैं तो शत्रु। उनकी सहायता भगवान वासुदेव कर रहे हैं, तो भी महाराज रनिवास के सुख में भूले हुए हैं (समझ बूझकर) और भी एक दूसरा अनुचित कार्य है जिसे महाराज कर रहे हैं। क्योंकि—

परशुराम सदृश वीर मुनि के, जिनका कुठार कभी कुण्ठित नहीं हुआ, विजेता भीष्मपितामहको पाण्डुकुमारों ने वाणवर्षा कर शराशायी बनादिया यहभी महाराज को लेशमात्र भी चिन्तित नहीं करता है और असहाय बालक अभिमन्यु के, जिसके धनुष को शत्रुओं

बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥ २ ॥

सर्वथा दैवं नः स्वस्ति करिष्यति । तद्यावदत्रस्थां देवीं महाराजस्य निवेदयामि । ( इति निष्क्रान्तः । )

विष्कम्भकः ।

( ततः प्रविशत्यासनस्था देवी भानुमती, सखी, चेटी च । )

सखी--सहि भाणुमदि, कीस दाणिं तुमं सिविणअदंसणमेत्तस्स किदे अहिमाणिणो महाराअदुज्जाहणस्स महिसी भविअ एव्वं विअलिअधीर-

---

-यस्य तस्य, अत्र धनुषश्चेति प्राप्तानङोऽभावस्तु समासान्तविधेरनित्यत्वादेव । च, बालस्य = अल्पवयस्कस्य, अभिमन्योः = अर्जुनपुत्रस्य, वधात् = हननात्, अयं = दुर्योधनः प्रीतः = प्रसन्नः, अस्तीति शेषः । पराक्रमिणो भीष्मस्य पातनाद्दुःखस्थानेऽपि दुःखाभावः बहुभिर्महारथैर्मिलित्वाऽसहायस्याभिमन्योर्वधात् हर्षस्थानाभावेऽपि हर्ष इति ध्वनितमनेन श्लोकेन । अत्र भीष्मपातनरूपतापकारणस्य सत्त्वेऽपि तापरूपकार्याभावाद् विशेषोक्तिरलङ्कारः । तथोत्तरार्द्धे बालस्य बहुकर्तृकवधेन हर्षकारणाभावेपि हर्षरूपकार्यस्य सत्त्वाद्विभावनालङ्कारः । शार्दूलविक्रीडित छन्दः । लक्षणमुक्तं प्रथमश्लोके ॥ २ ॥

दैवं = भाग्यम् , नः = अस्माकम् , स्वस्ति = मङ्गलं करिष्यतीत्यन्वयः ।

विष्कम्भक इति । भूतस्य भीष्माभिमन्युवधस्य भविष्यतोऽन्तःपुरविहारस्य च सूचनादस्य विष्कम्भकत्वं तदुक्तम्—

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥ इति ।

अत्र शुद्ध एव विष्कम्भः, तदुक्तम्—

मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः । शुद्धः स्यादिति ।

सेनापतिवधवर्णनेऽपि न विष्कम्भकत्वहानिः विष्कम्भकेऽधिकारिण एव वधवर्णननिषेधात् । तदुक्तं दर्पणे—विष्कम्भकाद्यैरपि न वधो वाच्योऽधिकारिणः । इति ।

---

ने काट डाला और अनेक युवा धनुर्धर शत्रुओं पर विजय प्राप्त करने से थका हुआ था, वधसे महाराज प्रसन्न हैं ॥ २ ॥

भगवान सबतरह से कुशल करेंगे । तब तक यहा ठहरी हुई महारानी की सूचना महाराज को देदें । ( निकल पडता है )

( विष्कम्भक )

( सखियों और चेटियों के साथ भानुमती देवी का प्रवेश )

**सखी**—सखि भानुमति, क्या कारण है कि तुम मानी महाराज दुर्योधन की स्त्री

करोति महतीं प्रीतिमपकारोऽपकारिणाम् ॥ ३ ॥

येनाद्य द्रोणकर्णजयद्रथादिभिर्हतमभिमन्युमुपश्रुत्य समुच्छ्वसितमिव नश्चेतसा।

कञ्चुकी—देव, नैवमतिदुष्करमाचार्यस्य शस्त्रप्रभावात्। कर्णजयद्रथयोर्वा का नामात्र श्लाघा।

राजा—विनयन्धर, किमाह भवान्। एको बहुभिर्बालो लूनशरासनश्च निहत इत्यत्र का श्लाघा कुरुपुङ्गवानाम्। तदत्र न खलु कश्चिद्दोषः। मूढ, पश्य।

---

साक्षात्=प्रत्यक्षम्, वा, वा, इति सर्वत्रान्वेति। महान्=बृहत्, अल्पः=ईषत्, स्वयं=निजेन अन्येन=परेण, कृतः=सम्पादितः, अपकारः=अपकृतिः, महतीं=अधिकाम्, प्रीतिं=प्रसन्नताम्, करोति। पथ्यावक्त्र छन्दः। युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम् ॥ ३ ॥

उपश्रुत्य=विज्ञाय, समुच्छ्वसितं=सोच्छ्वासम्, शान्तमित्यर्थ।

नैवमिति। नेदमिति पाठ. सम्यक्। आचार्यस्य=द्रोणस्य, शस्त्रप्रभावात्, न, इदम्=अभिमन्युहननम्, अतिदुष्करम्=दुःसाध्यमित्यन्वयः। श्लाघा=कत्थनम्, प्रशंसेत्यर्थः। लूनशरासनः=छिन्नधन्वा।

दुर्योधन., काऽत्रश्लाघेति श्रवणमात्रेण कृतापराध· स्वयमेव शङ्कत इति न्यायात्, कञ्चुकिना, एकाकी बहुभिर्बालो लूनशरासनश्च निहत इति काऽत्र श्लाघा कुरुपुङ्गवानामित्याकारकं वाक्यमुक्तमिति विज्ञाय, आह—विनयन्धरेत्यादि। कुरुपुङ्गवानाम्=कौरवश्रेष्ठानाम्।

---

रूप से किया गया हो अथवा प्रकट रूप से चाहे बडा अपकार हो चाहे थोडा अथवा चाहे किसी दूसरे व्यक्ति के द्वारा किया गया हो चाहे अपने आप किया गया हो ॥ ३ ॥

जिससे आज द्रोण, कर्ण, और जयद्रथ प्रभृति वीरों के द्वारा किये गये अभिमन्युवध को सुन कर हम लोगों के मन में हर्षोद्रेक हो रहा है।

कञ्चुकी—महाराज, द्रोणाचार्य्य की शस्त्रमहिमा के लिये अथवा कर्ण और जयद्रथ के लिए यह कोई कठिन कार्य्य नहीं फिर यह प्रसन्नता कैसी?

राजा—विनयन्धर, आपने क्या कहा 'असहाय बालक, जिसका धनुप काट दिया था, अनेकवीरों के द्वारा मारा गया, कौरवशिरोमणियोंके लिये प्रसन्नता कैसी?' इस में कोई अपराध नहीं। देखिये न.—

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम् ।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥ ४ ॥

कञ्चुकी—( सवैलक्ष्यम् । ) देव, न ममायं सङ्कल्पः । किंतु वः पौरुष-प्रतीघातोऽस्माभिरनालोचितपूर्व इत्यत एवं विज्ञापयामि ।

राजा—एवमिदम् ।

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।

---

अन्वय- शिखण्डिनम् , पुरस्कृत्य, जरति, गाङ्गेये, हते ( सति ) पाण्डुपुत्राणाम् , या, श्लाघा, सा, एव, अस्माकम् , भविष्यति ॥ ४ ॥

यदि स श्लाघनीयस्तदा वयमपि श्लाघनीया इत्याह—हत इति ।

शिखण्डिनं = द्रुपदपुत्रम् , पुरस्कृत्य = अग्रे कृत्वा जरति = वृद्धे, गाङ्गेये = गङ्गातनये भीष्म इत्यर्थः ॥ हते = पातिते, सति, पाण्डुपुत्राणाम् = युधिष्ठिरादीनाम् , या, श्लाघा = प्रशंसा, सा = श्लाघा, एव, अस्माकम् = धार्तराष्ट्राणाम् , भविष्यति । शिखण्डिन क्लीव पुरस्कृत्य, अर्जुनेन भीष्मे बाणप्रहारः कृत. भीष्मश्च क्लीबस्याग्रे स्थितत्वात् क्लीवोपरि वीरकर्तृकप्रहारस्यानुचितत्वान्न प्रजहार । तथाच यदि न श्लाघनीय. पाण्डुपुत्र., तदा सप्तभिर्महारथैरभिमन्युवधान्न श्लाघनीया वयमपि यदि तादृशेन कार्येण स श्लाघनीस्तदा वयमपि एतादृशेन कार्येण श्लाघनीया इति गूढाभिप्रायः । अत्र सादृश्यप्रदर्शनाभिप्रायकवाक्यकथनात् श्लेशनामक नाटकाङ्गं तदुक्त दर्पणे—'स श्लेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम् ॥' इति ।

पथ्यावक्त्रं छन्द.। लक्षणमुक्तं तृतीयश्लोके ॥ ४ ॥

अन्वय —पाण्डुसुत., संयुगे, स्वबलेन, नचिरात् , सहभृत्यगणम् , सबान्धवम् , सहमित्रम् , सहानुजम् , ससुतम् , सुयोधनम् , निहन्ति ॥ ५ ॥

स्वप्रशसाश्रवणादहङ्कारेण ज्ञानशून्यो दुर्योधनो विपरीतमाह—सहभृत्यगणमित्यादि । पाण्डुसुतमिति कर्मपदस्थाने पाण्डुसुत इति कर्तृपदं प्रयुक्तम् । सुयोधन

---

शिखण्डी को आगे रख कर जराग्रस्त भीष्मपितामह के वध से जो प्रसन्नता पाण्डवों को हुई वही हमलोगों को भी होगी ॥ ४ ॥

कन्चुकी—( लज्जा का अभिनय करते हुए ) महाराज, आप ऐसी कल्पना न करें क्यों कि हम लोगोंसे आज तक आप के पुरुषार्थ की विफलता कभी नहीं देखी गई । इसी लिए मैं इस तरह कह रहा हूँ ।

राजा—उचित कहा

पाण्डुनन्दन अपने पराक्रम से भाई, बन्धु, पुत्र, मित्र तथा नौकर चाकर के साथ

शावा अतिमेत्तं संतप्पसि। ( सखि भानुमति, कस्मादिदानीं त्वं स्वप्नदर्शनमात्रस्य कृतेऽभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वैवं विगलितधीरभावातिमात्रं संतप्यसे।)

चेटी—भट्टिणि, सोहणं भणादि सुवअणा। सिविणअन्तो जणो किं ण क्खु प्पलवदि। ( भट्टिनि, शोभनं भणति सुवदना। स्वपञ्जन: किं न खलु प्रलपति। )

भानुमती—हञ्जे, एव्वं णेदं। किंणु एदं सिविणअं अदिमेत्तं अकुसलदंसणं मे पडिभादि। ( हञ्जे, एवमेतत्। किन्त्वयं स्वप्नोऽतिमात्रमकुशलदर्शनो मे प्रतिभाति। )

सखी—जइ एव्वं ता कहेदु पिअसही जेण अह्मे वि पडिट्ठावअन्तीओ पसंसाए देवदासंकित्तणेण अ पडिहडिस्सामो। ( यद्येवं तत्कथयतु प्रियसखी। येनावामपि प्रतिष्ठापयन्त्यौ प्रशंसया देवतासंकीर्तनेन च परिहरिष्याव:। )

---

सखी, दृष्टाशुभसूचकस्वप्ना भानुमतीं सम्यक तोषयति—सखि भानुमतीति। स्वप्नदर्शनमात्रस्य कृते = स्वप्नावलोकनमात्रहेतुना। अभिमानिन इत्यनेन तस्या न कोऽपि किमपि कर्तुं शक्नोतीति सूचितम्। महिषी = कृताभिषेका स्त्री। एतेन त्वयि गरीयान् स्नेह इति सूचितम्। एवमिति सन्तप्यस इत्यनेनान्वेति। विगलितधीरभावा = विगलितः शिथिलः धीरभाव. धैर्यं यस्याः सा, अतिमात्रम् = भृशम्, 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भर' मित्यमर.। सन्तप्यसे = दु.खिता भवसि।

सुवदना = एतन्नामिका सखी, शोभनं = सुष्ठु, भणति = कथयति। स्वपन् = शयान'। प्रलपति = असम्बद्ध वचो वदति।

हञ्जे इति चेटीप्रत्याह्वाने प्रयुज्यते, 'हण्डे हञ्जे हलाऽह्वानं नीचां चेटीं, सखीं प्रति, इत्यमर.। अकुशलं दर्शयतीति अकुशलदर्शन' 'नन्दिग्रहिपचादिभ्यः' इति ल्युप्रत्यय'। प्रतिभाति = अवगतो भवति।

एवम् = अकुशलदर्शनः। प्रियसखी = भानुमती। आवाम् = सखीचेट्यौ, अपि प्रतिष्ठापयन्त्यौ = अशुभस्वप्नं शुभं कुर्वत्यौ, प्रशंसया = पूजया, देवतासङ्कीर्तनेन = देवस्तुत्या। परिहरिष्याव. = निवर्तयिष्याव।

---

होकर केवल स्वप्न देखने से धैर्य्यच्युत होकर अत्यन्त सतप्त हो रही हो।

चेटी—स्वामिनि, सुवदना ठीक कहती है, सोया हुआ व्यक्ति क्या क्या नहीं बकजाता?

भानुमती—अरी, यह ठीक है परन्तु स्वप्नदर्शन तो मुझे अमगलकारी प्रतीत हो रहा है।

सखी—प्रियसखि, यदि ऐसा है तो उस स्वप्न को कहिये जिससे हम लोग भी धार्मिक कथाओं से देवताओं के नाम लेने से और दूब इत्यादि मांगलिक वस्तुओं के स्पर्श से शान्ति करेंगी।

चेटी—देवि, एव्वं णेदं। अकुसलदंसणावि सिविणआप्पसंसाए कुसल-परिणामा होन्ति त्ति सुणीअदि। (देवि, एवमेतत्। अकुशलदर्शना अपि स्वप्नाः प्रशंसया कुशलपरिणामा भवन्तीति श्रूयते।)

भानुमती—जइ एव्वं ता कहइस्सम्। अवहिदा होध (यद्येवं तत्कथयिष्ये। अवहिते भवतम्।)

सखी—कहेदु पिअसही। (कथयतु प्रियसखी।)

भानुमती—मुहुत्तअं चिट्ठ जाव सव्वं सुमरिस्सम्। (इति चिन्तां नाटयति।) (मुहूर्तं तिष्ठ यावत्सर्वं स्मरिष्यामि।)

(ततः प्रविशति दुर्योधन कञ्चुकी च।)

दुर्योधन—सूक्तमिदं कस्यचित्।

गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः।

---

कुशलपरिणामाः=कुशलस्वरूपाः कुशलदायिन इत्यर्थः।
अवहिते=सावधाने, द्विवचनान्तमिदम्।
मुहूर्तं=किञ्चित्कालम्।
धैर्यापसादात् स्वप्नो विस्मृत इत्यत आह—सर्वं स्मरिष्यामीति।
सूक्तं=शोभनोक्तिः, भावे क्तप्रत्ययः।

अन्वय—अपकारिणाम्, गुप्त्या, साक्षात्, वा, महान्, अल्पः (वा) स्वयम् अन्येन (वा) कृतः, अपकारः, महतीम्, प्रीतिम्, करोति॥ २॥

सूक्तिमेवाह—गुप्त्या साक्षादिति। अपकारिणाम्=शत्रूणां, गुप्त्या=गोपनेन,

---

चेटी—शोभना ठीक कहती है—ऐसा सुना जाता है कि अमंगलकारी भी स्वप्न देवताओं के नाम कीर्तन से कुशल कारक हो जाते हैं।

भानुमती—यदि ऐसा है तो मैं कहती हूँ। पहले सावधान हो जाओ।

सखी—हम लोग शान्तचित्त हैं प्रियसहेली कहें तो।

भानुमती—सखि, भय से भूल गई हूँ अच्छा तो थोडा ठहर जाओ स्मरण कर के सब कह रही हूँ।

(दुर्योधन का कञ्चुकी के साथ प्रवेश)

दुर्योधन—किसी ने ठीक कहा है कि—

शत्रु के प्रति किया गया अपकार असीम आनन्द का जनक होता है चाहे वह अप्रकट

करोति महतीं प्रीतिमपकारोऽपकारिणाम् ॥ ३ ॥

येनाद्य द्रोणकर्णजयद्रथादिभिर्हतमभिमन्युमुपश्रुत्य समुच्छ्वसितमिव नश्चेतसा।

कञ्चुकी—देव, नैवमतिदुष्करमाचार्यस्य शस्त्रप्रभावात्। कर्णजयद्रथयोर्वा का नामात्र श्लाघा।

राजा—विनयन्धर, किमाह भवान्। एको बहुभिर्बालो लूनशरासनश्च निहत इत्यत्र का श्लाघा कुरुपुङ्गवानाम्। तदत्र न खलु कश्चिद्दोषः। मूढ, पश्य।

साक्षात्=प्रत्यक्षम्, वा, वा, इति सर्वत्रान्वेति। महान्=बृहत्, अल्पः=ईषत्, स्वयं=निजेन अन्येन=परेण. कृतः=सम्पादितः, अपकारः=अपकृतिः, महतीं=अधिकाम्, प्रीतिं=प्रसन्नताम्, करोति। पथ्यावक्त्रं छन्दः। युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम् ॥ ३ ॥

उपश्रुत्य=विज्ञाय, समुच्छ्वसितं=सोच्छ्वासम्, शान्तमित्यर्थः।

नैवमिति। नेदमिति पाठ सम्यक्। आचार्यस्य=द्रोणस्य, शस्त्रप्रभावात्, न, इदम्=अभिमन्युहननम्, अतिदुष्करम्=दुःसाध्यमित्यन्वयः। श्लाघा=कत्थनम्, प्रशंसेत्यर्थ.। लूनशरासनः=छिन्नधन्वा।

दुर्योधन., काऽत्रश्लाघेति श्रवणमात्रेण कृतापराधः स्वयमेव शङ्कत इति न्यायात्, कञ्चुकिना, एकाकी बहुभिर्बालो लूनशरासनश्च निहत इति काऽत्र श्लाघा कुरुपुङ्गवानामित्याकारकं वाक्यमुक्तमिति विज्ञाय, आह—विनयन्धरेत्यादि। कुरुपुङ्गवानाम्=कौरवश्रेष्ठानाम्।

रूप से किया गया हो अथवा प्रकट रूप से चाहे बड़ा अपकार हो चाहे थोड़ा अथवा चाहे किसी दूसरे व्यक्ति के द्वारा किया गया हो चाहे अपने आप किया गया हो ॥ ३ ॥

जिससे आज द्रोण, कर्ण, और जयद्रथ प्रभृति वीरों के द्वारा किये गये अभिमन्युवध को सुन कर हम लोगों के मन में हर्षोद्रेक हो रहा है।

कञ्चुकी—महाराज, द्रोणाचार्य्य की शस्त्रमहिमा के लिये अथवा कर्ण और जयद्रथ के लिए यह कोई कठिन कार्य्य नहीं फिर यह प्रसन्नता कैसी ?

राजा—विनयन्धर, आपने क्या कहा 'असहाय बालक, जिसका धनुष काट दिया था, अनेकवीरों के द्वारा मारा गया, कौरवशिरोमणियोंके लिये प्रसन्नता कैसी ?' इस में कोई अपराध नहीं। देखिये न —

हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम् ।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥ ४ ॥

कञ्चुकी—( सवैलक्ष्यम् । ) देव, न ममायं सङ्कल्पः । किंतु वः पौरुष-प्रतीघातोऽस्माभिरनालोचितपूर्व इत्यत एवं विज्ञापयामि ।

राजा—एवमिदम् ।

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।

अन्वय.- शिखण्डिनम् , पुरस्कृत्य, जरति, गाङ्गेये, हते ( सति ) पाण्डुपुत्राणाम् , या, श्लाघा, सा, एव, अस्माकम् , भविष्यति ॥ ४ ॥

यदि स श्लाघनीयस्तदा वयमपि श्लाघनीया इत्याह—हत इति ।

शिखण्डिनं = द्रुपदपुत्रम् , पुरस्कृत्य = अग्रे कृत्वा जरति = वृद्धे, गाङ्गेये = गङ्गा-तनये भीष्म इत्यर्थः। हते = पातिते, सति, पाण्डुपुत्राणाम् = युधिष्ठिरादीनाम् , या, श्लाघा = प्रशंसा, सा = श्लाघा, एव, अस्माकम् = धार्तराष्ट्राणाम् , भविष्यति । शिखण्डिनं क्लीव पुरस्कृत्य, अर्जुनेन भीष्मे वाणप्रहारः कृत. भीष्मश्च क्लीवस्याग्रे स्थितत्वात् क्लीबोपरि वीरकर्तृकप्रहारस्यानुचितत्वान्न प्रजहार । तथाच यदि न श्लाघनीय पाण्डुपुत्रः, तदा सप्तभिर्महारथैरभिमन्युवधान्न श्लाघनीया वयमपि यदि तादृशेन कार्येण स श्लाघनीस्तदा वयमपि एतादृशेन कार्येण श्लाघनीया इति गूढाभिप्रायः । अत्र सादृश्यप्रदर्शनाभिप्रायकवाक्यकथनात् श्लेशनामक नाटकाङ्गं तदुक्त दर्पणे—'स श्लेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम् ॥' इति ।

पथ्यावक्त्रं छन्द । लक्षणमुक्तं तृतीयश्लोके ॥ ४ ॥

अन्वय —पाण्डुसुत', संयुगे, स्वबलेन, नचिरात् , सहभृत्यगणम् , सबान्धवम् , सहमित्रम् , सहानुजम् , ससुतम् , सुयोधनम् , निहन्ति ॥ ५ ॥

स्वप्रशसाश्रवणादहङ्कारेण ज्ञानशून्यो दुर्योधनो विपरीतमाह—सहभृत्यगण-मित्यादि । पाण्डुसुतमिति कर्मपदस्थाने पाण्डुसुत इति कर्तृपदं प्रयुक्तम् । सुयोधन

शिखण्डी को आगे रख कर जराग्रस्त भीष्मपितामह के वध से जो प्रसन्नता पाण्डवों को हुई वही हमलोगों को भी होगी ॥ ४ ॥

कन्चुकी—( लज्जा का अभिनय करते हुए ) महाराज, आप ऐसी कल्पना न करें क्यों कि हम लोगोंसे आज तक आप के पुरुषार्थ की विफलता कभी नहीं देखी गई । इसी लिए मैं इस तरह कह रहा हूँ ।

राजा—उचित कहा

पाण्डुनन्दन अपने पराक्रम से भाई, बन्धु, पुत्र, मित्र तथा नौकर चाकर के साथ

स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम् ॥ ५ ॥

कञ्चुकी—( कर्णौ पिधाय । ससम्भ्रमम् । ) शान्तं पापम् । प्रतिहतममङ्गलम् ।

राजा—विनयन्धर, किं मयोक्तम् ।

कञ्चुकी—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतं सुयोधनः ॥ ६ ॥

एतद्विपरीतमभिहितं देवेन ।

राजा—विनयन्धर, अद्य खलु भानुमती यथापूर्वं मामनामन्त्र्य वास-

इति कर्तृपदस्थाने कर्मपदं प्रयुक्तम् । पाण्डुसुतः=युधिष्ठिरः, संयुगे=सङ्ग्रामे, स्वबलेन=स्वसेनया । न चिरात्=शीघ्रम्, सहभृत्यगणम्=भृत्यगणेन सहितम्, सहशब्दस्य सर्वत्र वैकल्पिकत्वादिदं साधु । सबान्धवम्=बन्धुजनसहितम्, सहमित्रम्, सहानुजम्=सावरजम्, ससुतम्=सपुत्रम्, सुयोधनम्=दुर्योधनम् निहन्ति=हनिष्यति । वर्तमानसामीप्ये लट् । अत्र दृप्तस्य दुर्योधनस्य वक्तव्यादन्य-द्वाक्यमस्तीति अशाख्यं नाटकाङ्गम् । तदुक्तं दर्पणे—

दृप्तादीनां भवेद्भ्रंशो वाच्यादन्यतरद्वचः ॥ इति ।

ललिताछन्दः । स स जा विषमे यदा गुरुः स भ रा स्याल्ललिता समे ल गौ इति लक्षणात् ॥ ५ ॥

दुर्योधनाभिप्रायानुसारेण कञ्चुक्याह—सहभृत्यगणमिति । कञ्चुकिवाक्ये पाण्डुसुतमिति द्वितीयान्तम् । सुयोधन इति प्रथमान्तम् । तथा च सुयोधन-पाण्डुसुतस्य हन्तेति दुर्योधनाभिप्रायः प्रतिपादितो भवति ॥ ६ ॥

अनामन्त्र्य=अननुज्ञाय, वासभवनात्=शयनमन्दिरात् । प्रातः=प्रभाते, निष्क्रान्ता=बहिर्गता । व्याक्षिप्तम्=विशेषेणाक्षिप्तम्, उद्विग्नमित्यर्थः । किं

सुयोधन का शीघ्र वध करेगा ॥ ५ ॥

कञ्चुकी—( कान के छिद्रों को बन्दकर भयपूर्वक ) पाप शान्त हो, अमङ्गल का नाश हो ।

राजा—विनयन्धर मैं ने क्या कहा ?

कञ्चुकी—'दुर्योधन अपने पराक्रम से भाई बन्धु, पुत्र, मित्र तथा नौकर-चाकर समेत शीघ्र पाण्डु पुत्र का संहार करेगा' ॥ ६ ॥

इस के विपरीत महाराजने कहा ।

राजा—आज भानुमती पूर्ववत मुझ से परामर्श न करके प्रभातकाल में ही घर से

भवनात्प्रातरेव निष्क्रान्तेति व्याक्षिप्तं मे मनः । तदादेशय तमुद्देशं यत्रस्था भानुमती ।

कञ्चुकी—इत इतो देवः ।

( उभौ परिक्रामतः )

कञ्चुकी—( पुरोऽवलोक्य । समन्ततो गन्धमाघ्राय । ) देव, पश्य पश्य ? एतत्तुहिनकणशिशिरसमीरणोद्वेल्लितवृन्तबन्धुरशेफालिकाविरचितकुसुमप्रकरम्, ईषदालोहितमुग्धवधूकपोलपाण्डुफलिनीविजितश्यामलतासौभाग्यम्, उन्मीलितबहुलकुन्दकुसुमसुरभिशीतलं प्रभातकालरमणीयमग्रतस्ते

---

कथयेत्याह—तमिति । तत्=तस्मात्, आदेशय=कथय । उद्देशं=स्थानम् । यत्र तिष्ठतीति यत्रस्था ।

तुहिनकणशिशिरसमीरणोद्वेल्लितवृन्तबन्धुरशेफालिकाकुसुमप्रकरम् = तुहिनकणेन हिमलेशेन शिशिरः शीतलो यः समीरणः वायुः तेन उद्वेल्लितम् चञ्चलम् यद् वृन्तम् प्रसवबन्धनम् तेन बन्धुरशेफालिका निम्नोन्नतनिर्गुण्डी तया विरचितः कुसुमप्रकरः पुष्पसमुदायो यत्र तत्, इद बालोद्यानविशेषणम् 'वृन्तं प्रसवबन्धनम्'। 'बन्धुरं तून्नतानतम्' इति चामरः। ईषदालोहितमुग्धवधूकपोलपाण्डुफलिनीविजितश्यामलतासौभाग्यम् ईषद्, आलोहितं रक्तम् यत् मुग्धवधूकपोलम् सलज्जवनितागण्डस्थलम् तद्वत् पाण्डु पाण्डुरः फलिनी प्रियङ्गु तया विजितं श्यामलतासौभाग्यम् सोमलतासौन्दर्यम् यत्र तत्, 'हरिणः पाण्डुरः पाण्डुः' इति, 'प्रियङ्गुः फलनी,फली'इति चामरः । श्यामा सोमलतानिशोरितिहैमः । 'सुभगः सुन्दरे प्रिये' इति विश्वः । उन्मीलितबहुलकुन्दकुसुमसुरभिशीतलम् = विकसित-

---

चल दीं । अत मेरा मन उद्विग्न सा हो रहा है ( अर्थात् अनाप-शनाप बकजाने का यही कारण है ) इस लिये उस स्थान का निदर्शन कराओ जहा भानुमती गई है ।

कञ्चुकी—इधर से आइये महाराज !

( दोनों चलपडते हैं )

कञ्चुकी—( सामने देखकर और कुछ गन्ध सूँघने का अभिनय कर के ) महाराज ! देखिये देखिये यह अन्त.पुर की अभिनववाटिका है इस में, ओस के कणों के सम्पर्क से शीतलवायु के झकोरों के द्वारा प्रकम्पित निर्गुण्डी की लताओं के वृन्द [ डठल ] से मुक्त फूलों का ढेर लगा हुआ है, और इस ( वाटिका ) में अभिनववयस्का युवती के अरुणाभ कपोलों के सदृश लोध्रपुष्पों से श्यामलता के पुष्पों का सौन्दर्य्य पराभूत हो रहा है । अपरञ्च विकसित मौलश्री और कुन्द के पुष्पों से यह उद्यान सुरभिसम्पन्न तथा शीतलच्छाय है

द्बालोद्यानम्। तदवलोकयतु देवः। तथाहि—

प्रालेयमिश्रमकरन्दकरालकोशैः
पुष्पैः समं निपतिता रजनीप्रबुद्धैः।
अर्कांशुभिन्नमुकुलोदरसान्द्रगन्ध-
संसूचितानि कमलान्यलयः पतन्ति॥ ७॥

राजा—( समन्तादवलोक्य। ) विनयन्धर, इदमपरममुष्मिन्नुषसि रमणीयतरम्। पश्य—

---

प्रचुरकुन्दपुष्पसुगन्धिशीतलम्। अग्रतः=अग्रे, सार्वविभक्तिकस्तसिल्। बालोद्यानं=नूतन राज्ञ' साधारणं वनम्। 'पुमानाक्रीड उद्यानं राज्ञ. साधारणं वनम्' इत्यमर.।

अन्वय —प्रालेयमिश्रमकरन्दकरालकोशैः, रजनीप्रबुद्धैः, पुष्पै', समम्, निपतिताः, अलय', अर्कांशुभिन्नमुकुलोदरसान्द्रगन्धसंसूचितानि, कमलानि, पतन्ति॥

अवलोकनार्हामुद्यानशोभां दर्शयति—प्रालेयमिश्रेति। प्रालेयमिश्रमकरन्दकरालकोशै.=प्रालेयेन हिमेन मिश्र. प्रालेयमिश्र स चासौ मकरन्दः पुष्पमधु तेन कराल उन्नतनतः कोशः मध्यं येषां तै., रजनीप्रबुद्धै'=निशायां स्फुटितैः, पुष्पै.=कुसुमै, सम=साकम्, निपतिताः=अधोगताः, रात्रिविकसितपुष्पाणां प्रभाते पतनात्तत्रस्था भ्रमरा अपि पतिता इति भाव.। अलय=भ्रमराः, अर्कांशुभिन्नमुकुलोदरसान्द्रगन्धसंसूचितानि=अर्कस्य सूर्यस्य' अंशुभि., किरणै. भिन्नानि यानि मुकुलानि कुड्मला. तेषामुदरेषु ये सान्द्रगन्धाः निबिडसुरभय तै संसूचितानि अनुमितानि, अवगतानीत्यर्थ.। कमलानि=पद्मानि, पतन्ति=गच्छन्ति। अत्र सहोक्ति। तथैकस्यैवालेरनेकत्र सम्बन्धात्पर्यायश्चालङ्कार'। वसन्ततिलका छन्दः। ज्ञेयं वसन्ततिलकं त भ जा ज गौ ग इति लक्षणात्॥ ७॥

उपसि=प्रभाते, रमणीयतरम्=सुशोभम्।

---

प्रभातकाल में इस की शोभा अपूर्व हो जाती है इसे महाराज देखें। जैसा कि —

रात्रि काल में विकसित होनेवाले तथा नीहारकणविमिश्रित पुस्परस के कारण अधखुले कोषशाली कुमुदपुष्पों के पतनदशा के साथ साथ भ्रमर उनका परित्याग कर सूर्य्यं की किरणों से विकसित कमलकलिका के अन्दर से निकलते हुए गन्ध से प्रतीत होने वाले कमलों पर टूट रहे हैं॥ ७॥

**राजा**—( चारों तरफ दृष्टि फैला कर ) विनयन्धर, इस प्रभातकाल में एक दूसरे प्रकार की रमणीयता का अवलोकन कीजिये —

जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टै-
भाभिर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धाः ।
स्त्रीभिः सार्धं घनपरिमलस्तोकलक्ष्याङ्गरागा
मुञ्चन्त्येते विकचनलिनीगर्भशय्यां द्विरेफाः ॥ ८ ॥

कञ्चुकी—देव, नन्वेषा भानुमती सुवदनया तरलिकया च सहोपविष्टा

अन्वय — जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टैः, भानोः, भाभिः, स्पृश्यमानाः, (अत एव) विबुद्धाः, नृपतयः, इव, एते, द्विरेफाः, घनपरिमलस्तोकलक्ष्याङ्गरागाः, (सन्तः) स्त्रीभिः, सार्द्धम्, विकचनलिनीगर्भशय्याम्, मुञ्चन्ति ॥ ८ ॥

जृम्भेति । जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टैः=जृम्भारम्भेण विकाशोपक्रमेण प्रवितताानि विस्तृतानि यानि दलानि पुष्पपत्राणि तेषामुपान्तः समीपवर्तिस्थानम् तदेव जालम् गवाक्षरन्ध्रम् नृपपक्षे तत्सदृशगवाक्षरन्ध्रम्, तेन प्रविष्टैः भानोः=सूर्यस्य, भाभिः=प्रकाशैः, स्पृश्यमानाः=छुप्यमानाः, अतएव विबुद्धाः=विनिद्राः, अन्योऽपि स्पर्शेन जागरितो भवति । नृपतयः=राजानः इव, भ्रमरपक्षे विबुद्धाः=उत्थिताः, कीदृशाः—घनपरिमलस्तोकलक्ष्याङ्गरागाः=घनपरिमलस्य निविडगन्धस्य नृपपक्षे चन्दनगन्धस्य स्तोकेन लक्ष्यः अनुमेयः अङ्गरागः अङ्गरक्तिमा नृपपक्षे गात्रानुलेपनयोग्यसुगन्धिद्रव्यम् येषां ते, एते, द्विरेफाः=भ्रमराः स्त्रीभिः=नृपपक्षे देवीभिः भ्रमरपक्षे भ्रमरीभिः, सार्द्धम्=सह विकचनलिनीगर्भशय्यां=विकसितकमलिनीमध्यशयनीयम्, मुञ्चन्ति=त्यजन्ति । नृपतयोऽपि विबुद्धाः सन्तः स्त्रीभिः सार्द्धं शय्यां मुञ्चन्ति । भ्रमराः कमलगर्भं प्रातःकाले मुञ्चन्तीति भावः ।

अत्र पूर्णोपमाऽलङ्कारः । विकचनलिनीगर्भशय्यामित्यत्र रूपकम् । मन्दाक्रान्ता वृत्तम् मन्दाक्रान्ताम्बुधिरसनगैर्मो भं नौ गौ य युग्ममितिलक्षणात् ॥ ८ ॥

नन्विति अवधारणे । सुवदनया=एतन्नामकसख्या, तरलिकया=एतन्नामक-

कलियों के विकास के प्रारम्भ काल में फैलती हुई पँखड़ियों के अन्तिम भाग के अवकाशों के द्वारा प्रविष्ट सूर्य-किरणों के संस्पर्श से जगे हुए भ्रमर अपनी भ्रमरियों के साथ प्रचुर पराग के सँलग्न होने के कारण शरीर का रङ्ग थोड़ा २ उपलक्षित कराते हुए प्रस्फुटित कमलिनीदलरूप शय्या का परित्याग राजाओं की भाँति कर रहे हैं अर्थात् जिस प्रकार राजा लोग कोमल किशलय तुल्य करों के द्वारा स्पृष्ट होकर निद्रा परित्याग कर स्त्रियों के साथ कमलपुष्परचित शय्या का परित्याग करते हैं उनके शरीर का अङ्गराग कुँकुमादि के अधिक प्रलेप से थोड़ा थोड़ा झलकता रहता है ॥ ८ ॥

कञ्चुकी—महाराज, यह महारानी भानुमती बैठी हुई सुवदना और तरलिका से

तिष्ठति । तदुपसर्पतु देवः ।

राजा—( दृष्ट्वा । ) आर्य विनयंधर, गच्छ त्वं साङ्ग्रामिकं मे रथमुपकल्पयितुम् । अहमप्येष देवीं दृष्ट्वाऽनुपदमागत एव ।

कञ्चुकी—एष कृतो देवादेशः । ( इति निष्क्रान्तः । )

सखी—पिअसहि, अवि सुमरिदं तुए । ( प्रियसखि, अपि स्मृतं त्वया । )

भानुमती—सहि, सुमरिदम् । अज्ज किल पमदवणे आसीणाए मम अग्गदो एव्व दिव्वरूविणा णउलेन अहिसदं वावादिदम् । (सखि, स्मृतम् । अद्य किल प्रमदवन आसीनाया ममाग्रत एव दिव्यरूपिणा नकुलेनाहिशतं व्यापादितम् ।)

---

चेट्या । उपसर्पतु = प्रचलतु ।

साङ्ग्रामिकं = युद्धे गन्तुं योग्यम्, रथ = स्यन्दनम्, उपकल्पयितुम् = सन्नद्धं कर्तुम् । एष = उपस्थितः, अहमपि, अनुपदम्=अनुगम् पश्चादित्यर्थः । 'अन्वगन्वक्षमनुगेऽनुपद क्लीवमव्ययम्' । इत्यमरः । पदस्य पश्चादिति विग्रहे पश्चादर्थेऽव्ययीभावसमासः । देवीं = भानुमतीम्, दृष्ट्वा, आगत एवेत्यन्वयः ।

देवादेशः = भवदीयाज्ञा ।

भानुमत्या दृष्टं स्वप्नं बोद्धुकामा सुवदना सखी भानुमतीं पप्रच्छ—प्रियसखीति । भवत्या यदुक्तं सर्वं स्मरिष्यामीति, तत्किं स्मृतमित्यर्थः । अपिशब्दः प्रश्ने, 'अपिः सम्भावनाप्रश्नाशङ्कागर्हासमुच्चये' इति विश्वः ।

अतीतायां रात्रे पश्चार्द्धेनागामिन्याः पूर्वार्द्धेन सहितकालस्य अद्यतनशब्दार्थत्वादतीतरात्रिस्वप्नकालेऽपि अद्यशब्दप्रयोगः । प्रमदवने = राज्ञीक्रीडावने, आसीनायाः = उपविष्टायाः, मम, अग्रतः = पुरस्तात्, एव दिव्यरूपिणा = अतिसुन्दरेण, नकुलेन = सर्पघातकजन्तुना 'सपनौर' इति प्रसिद्धः । अहिशत = सर्पशत, व्यापादितम् = मारितम् ।

---

परिचारित हो रही हैं महाराज उनके समीप चलें ।

**राजा**—( देखकर ) आर्य्य विनयन्धर, युद्धार्थ रथ तय्यार करने के लिये तुम जाओ मैं श्रीमती के दर्शनोपरान्त आही पहुचा ।

**कन्चुकी**—यह लीजिये महाराज की आज्ञा का पालन किया । (चला जाता है )

**सखी**—प्रिय सहेली, क्या तुम्हें स्मरण हुआ ?

**भानुमती**—हाँ सखि, स्मरण हुआ ( याद आया ) आज मैं प्रमदकानन में बैठी हुई थी मेरे समक्ष ही देवताओं के स्वरूप को लज्जित करने वाले किसी एक नेवले ने सैकड़ों सर्पों को मारडाला ।

उभे—( अपवार्य । आत्मगतम् । ) सान्तं पावम् । पडिहदं अमङ्गलम् । ( प्रकाशम् । ) तदो तदो । ( शान्तं पापम् । प्रतिहतममङ्गलम् । ततस्ततः । )

भानुमती—अदिसदावोव्विग्गहिअआए विसुमरिदं मए । ता पुणोवि सुमरिअ कहइस्सम् । ( अतिसंतापोद्विग्नहृदयया विस्मृतं मया । तत्पुनरपि स्मृत्वा कथयिष्ये । )

राजा—( आत्मगतम् ) अहो, देवी भानुमती सुवदनातरलिकाभ्यां सह किमपि मन्त्रयमाणा तिष्ठति । भवतु । अनेन लताजालेनान्तरितः शृणोमि तावदासां विश्रब्धालापम् । ( तथा स्थितः । )

सखी—सहि, अल संदावेण । कहेदु पिअसही । (सखि, अलं संतापेन । कथयतु प्रियसखी । )

राजा—( आत्मगतम् ) किं नु खल्वस्याः संतापकारणम् । अथवाऽनामन्त्र्य मामियमद्य वासभवनान्निष्क्रान्तेति समर्थित एवास्या मया कोपः । अयि भानुमति, अविषयः खलु दुर्योधनो भवत्याः कोपस्य ।

---

उभे=सखीचेट्यौ अपवार्य्य=अन्यस्य रहस्यमप्रकाश्य, आत्मगतं=परस्यश्रवणायोग्यम् तदुक्तं दर्पणे—अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् । इति ॥

शान्तमिति—शान्त पापमनिर्देश्ये ॥ इति वचनात् । न वाच्यमित्यर्थः । प्रकाशं =सर्वश्राव्यम् । तदुक्तं तत्रैव—सर्वश्राव्यं प्रकाशं स्यात् । इति ।

अतिसन्तापोद्विग्नहृदया=अतिसन्तापेन उद्विग्नम् सम्भ्रान्तं हृदयं यस्याः तया । सन्तापेन, अलम्=निरर्थकम् । 'अलं भूषणपर्याप्तिवारणेषु निरर्थके' इति विश्व. ।

---

दोनों सखियां—( छिपाकर अपने आप ) पाप और अमगल का नाश हो ( प्रकट रूप से ) अच्छा तो फिर क्या हुआ ?

भानुमती—सन्ताप ने मेरे हृदय पर अपना अधिकार जमा लिया । फिर मैं भूल गई ।

राजा—( देख कर ) अरे ! श्रीमती भानुमती सुबदना और तरलिका के साथ कुछ वार्तालाप करती हुई बैठी है । अच्छा झाडी के पीछे छिप कर पहले इन के विश्वस्त वार्तालाप तो सुनूँ ।

सखी—शोक करने से क्या लाभ ? सखि, कहैं तो ।

राजा—अरे, इनके खेद का क्या कारण है ? अथवा आज ये मुझ से आज्ञा लिये विना घर से चली आई हैं इस से प्रतीत होता है कि ये मुझ पर क्रुद्ध हैं, अयि भानुमती ! यह दुर्योधन आप के क्रोध का पात्र नहीं है देखिये.—

किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया
निद्राच्छेदविवर्तनेष्वभिमुखी नाद्यासि सम्भाविता।
अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो
दोषं पश्यसि कं प्रिये परिजनोपालम्भयोग्ये मयि॥ ९॥

(विचिन्त्य।) अथवा।

इयमस्मदुपाश्रयैकचित्ता मनसा प्रेमनिबद्धमत्सरेण।

अन्वय—मया, प्रमादात्, कण्ठे, भुजलतापाशः, किम्, शिथिलीकृतः, अद्य, निद्राच्छेदविवर्तनेषु, अभिमुखी, न, सम्भाविता (किम्) त्वया, अहम्, अन्यस्त्रीजनसङ्कथालघुः, स्वप्ने, लक्षितः, (हे) प्रिये, परिजनोपालम्भयोग्ये, मयि, कम्, दोषम्, पश्यसि॥ ९॥

मत्तः किमपराधोऽभूदित्याह—किमिति। मया=दुर्योधनेन, कण्ठे=मदीयग्रीवायाम्, भुजलतापाशः=त्वत्कृतभुजबन्धनम्, किम्, किंशब्दः प्रश्ने। प्रमादात्=अनवधानात्, सावधानतया न कथमपीदं सम्भाव्यत इति सूचितमनेन। शिथिलीकृतः, न तु दूरीकृत इति भावः। किंशब्दस्य द्वितीयतृतीयचरणयोरप्यन्वयः। अद्य, निद्राच्छेदविवर्तनेषु=सुषुप्तिभङ्गेन पार्श्वपरिवर्तनेषु, अभिमुखी=आभिमुख्यं प्राप्ता, न, सम्भाविता=सालिङ्गनं न सम्मानिता, किम्। त्वया=भानुमत्या, अन्यस्त्रीजनसङ्कथालघुः=अन्यनारीजनवार्तालापेन लघुः निःसारः क्षुद्र इत्यर्थः। 'लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबं' मिति मेदिनी। अहं=दुर्योधनः, स्वप्ने=निद्रावस्थायाम्, एतेन जागरणं नास्य सम्भावनापीति सूचितम्। लक्षितः=ज्ञातः, हे प्रिये परिजनोपालम्भयोग्ये=परिचारकसदृशपरिभाषणार्हे, मयि, एतेषां मध्ये, कं दोषम्=अपराधं पश्यसि=अवलोकसे। शार्दूलविक्रीडितं छन्दः॥ ९॥

अन्वय—अस्मदुपाश्रयैकचित्ता, इयम्, प्रेमनिबद्धमत्सरेण, मनसा, अतिवल्लभत्वात्, मम, अपराधलेशम्, स्वयम्, उत्प्रेक्ष्य, नियतम्, कुपिता॥ १०॥

कथं क्रुद्धा भानुमतीत्याह—इयमिति। अस्मदुपाश्रयैकचित्ता=मदालम्बनमा-

क्या कभी मैंने (भूल कर) कण्ठगत भुजा के बन्धनों को विच्छिन्न तो नहीं किया? [अर्थात् आपके प्रेमालिङ्गन का तिरस्कार तो नहीं किया?] अथवा शयनावस्था में करवट बदल कर मेरे सम्मुख होने पर आज भी मैंने क्या आपका स्वागत नहीं किया? अथवा आप स्वप्न में मुझे परस्त्री से वातचीत करने में अनुरक्त तो नहीं देखीं फिर सेवाकार्यरत मुझ में कौन सा अवगुण देखती है?॥ ९॥

(सोचकर)

इन्होंने अपने चित्त को मेरे आश्रित कर दिया है। प्रेम के कारण इन के मन में

नियतं कुपितातिवल्लभत्वात्स्वयमुत्प्रेक्ष्य ममापराधलेशम् ॥ १० ॥

तथापि शृणुमस्तावत्किन्नु वक्ष्यतीति ।

भानुमती—तदो अहं तस्स अदिसइददिव्वरूविणो णउलस्स दंसणेण उच्छुआ जादा हिदहिअआ अ। तदो उज्झिअ तं आसणट्ठाणं लदामण्डवं पविसिदुं आरद्धा । (ततोऽहं तस्यातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च । तत उज्झित्वा तदासनस्थानं लतामण्डपं प्रवेष्टुमारब्धा ।)

राजा—(सवैलक्ष्यम्, आत्मगतम्) किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता हृतहृदया च । तत्किमनया पापया माद्रीसुतानु-

---

रचेता., इयम्=भानुमती, प्रेमविवद्धमत्सरेण=प्रेम्णा विवद्ध. स्थापित मत्सरः यस्मिन् तेन कारणाभावेऽपि केवलं प्रेम्णैव मात्सर्यमुत्पादितमिति भावः । प्रीतिवद्धमात्सर्येणेत्यर्थः । मनसा=हृदा, अतिवल्लभत्वात्=अतिस्नेहात्, मम, अपराधलेशम्=अपराधगन्धं 'गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयो'रिति विश्वः। स्वयम्, उत्प्रेक्ष्य=प्रकल्प्य, नियतं, कुपिता=क्रुद्धा । एतेन ममापराधलेशोऽपि न वर्तते केवलं कल्पनैव तस्या इति ध्वनितम् । औपच्छन्दसिकं छन्दः । षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः । तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसिकं कवीन्द्रहृद्यमिति लक्षणात् ॥१०॥

तत=सर्पशतव्यापादनानन्तरम् । नकुलस्य=सर्पघातकजन्तुविशेषस्य, दुर्योधनस्य भ्रान्तिपक्षे—नकुलस्य=माद्रीपुत्रस्य । उत्सुका=उत्कण्ठिता ।

किमिति—किमिति प्रश्ने तस्य विप्रलब्ध इत्यनेनान्वयः । नामशब्द क्रोधे, 'नामप्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने, इत्यमर. । सर्पघातकजन्तुतात्पर्येणोच्चरितनकुलशब्दस्य प्रकरणानभिज्ञो दुर्योधन नकुलसञ्ज्ञक माद्रीसुतमर्थं निश्चित्य क्रुद्ध इति भावः । अनया=भानुमत्या, माद्रीसुते=नकुले, पाण्डुपुत्रे इत्यर्थः । अनुर-

---

नाम मात्र को भी क्रोध नही है ऐसा प्रतीत होता है कि प्रेमाधिक्य से मेरे लवमात्र अपराध की कल्पना कर के क्रुद्ध हैं ॥ १० ॥

तो भी क्या कहेंगी सुनें तो ।

**भानुमती**—अरी सखि, इस के अनन्तर दिव्यरूप के तिरस्कर्ता उस नकुल के दर्शन से मैं उत्कुण्ठित हो उठी । मेरा हृदय उसपर आसक्त हो गया । फिर उस स्थान को छोड़ कर लता-कुञ्ज में जाने लगी ।

**राजा**—क्या देवताओं के स्वरूप के तिरस्कर्ता नकुल के दर्शन से यह उत्कण्ठित हो उठी है ? क्या माद्री के पुत्र में आसक्त इस के द्वारा मैं वञ्चित हो गया ? (पहली वार्ता

यस्मिश्चिरप्रणयनिर्भरबद्धभाव—
सावेदितो रहसि मत्सुरतोपभोग. ।
तत्रैव दुश्चरितमद्य निवेदयन्ती
ह्रीणासि पापहृदये न सखीजनेऽस्मिन् ॥ १२ ॥

उभे—तदो तदो ( ततस्तत । )

भानुमती—तदो तेण सप्पगब्भप्पसारिअकरेण अवहिदं मे त्थणंसुअम् । ( ततस्तेन सप्रगल्भप्रसारितकरेणापहृतं मे स्तनांशुकम् । )

=लज्जाराहित्यम् । शालाप्रवेशमर्हतीति शालीना 'शालीनकौपीने अधृष्टाकार्ययो' रिति निपातनात्खप्रत्यय' । अत्रावयवार्थस्तु न विवक्षितः, रूढिशब्दत्वात् ।

अन्वय —यस्मिन् , रहसि, मत्सुरतोपभोग., चिरप्रणयनिर्भरबद्धभावम् , आवेदित., तत्रैव, अस्मिन् , सखीजने, दुश्चरितम् , अद्य, निवेदयन्ती, हे पापहृदये ! न, ह्रीणा, असि ॥ १२ ॥

लज्जाकारणसत्त्वेऽपि लज्जारहित्यं दर्शयति—यस्मिन्निति । यस्मिन्=सखीजने, रहसि=एकान्ते, मत्सुरतोपभोगः=मदीयरतिजन्यभोग', चिरप्रणयनिर्भरबद्धभावम्=बहुकालिकप्रेमातिशयेन कृतबन्धनाभिप्रायम् , यथा स्यात्तथा आवेदित'=कथित', तत्रैव=तस्मिन्नेव एवशब्दोऽवधारणे । अस्मिन्=उपस्थिते, तदिदंशब्दाभ्यां प्रत्यभिज्ञां दर्शयति । सखीजने=आलिसङ्घे, दुश्चरितम्=परपुरुषसङ्गमरूपदुराचारम् , अद्य=इदानीम् , 'इदानीमद्ये' ति कलापसूत्रेण निष्पन्नं सम्प्रत्यर्थे अद्येति । निवेदयन्ती=कथयन्ती, हे पापहृदये ! न ह्रीणा=लज्जिता, असि । लज्जास्थानेऽपि कथ न लज्जस इति भावः। अत्रैकस्मिन्नेव सखीजने अनेकयोः स्वामिसुरतोपभोगदुश्चरितयोः स्थापनात्पर्य्यायालङ्कारः। वसन्ततिलका छन्दः ॥ १२ ॥

तत.=मत्कर्तृकलतामण्डपप्रवेशानन्तरम् , सप्रगल्भप्रसारितकरेण=सप्रगल्भं यथा स्यात्तथा प्रसारितः कर. हस्तः येन तेन सप्रगल्भप्रसारितशब्दयोः स्तोकनम्रा इतिवत्समासः । तेन=नकुलेन, मे, स्तनांशुक=कुचस्योपरि स्थितं वस्त्रम् , अपहृतम्=आकृष्टम् ।

अरी पापचित्ते, जिन सहेलियों से चिरकाल के प्रेम और अत्यन्त आसक्ति के साथ मेरे रमणक्रिया की वार्ता की थी आज वही उन सखियों से अपने दुष्कृत्यों की वार्ता करते हुए तुम्हें लज्जा नहीं उत्पन्न होती ?

**दोनों सखियां**—तो आगे क्या हुआ ?

**भानुमती**—तब उसने बड़ी धृष्टता से हाथ फैलाकर मेरे स्तनावरणको दूर हटा दिया ।

राजा—( सक्रोधम्, आत्मगतम् ) अलमिदानीमतः परमाकर्णनेन । भवतु तावत्तस्य परवनितावस्कन्दनप्रगल्भस्य माद्रीसुतहतकस्य जीवितमपहरामि । ( किंचिद्गत्वा । विचिन्त्य । ) अथवा इयमेव तावत्पापशीला प्रथममनुशासनीया । ( इति निवर्तते । )

उभे—तदो तदो । ( ततस्तत । )

भानुमती—तदो अज्जउत्तस्स पभादमङ्गलतूररवमिस्सेण वारविलासिणीजणसगीदरवेण पडिबोधिदह्मि । ( तत आर्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वारविलासिनीजनसङ्गीतरवेण प्रतिवोधितास्मि । )

राजा—( सवितर्कम्, आत्मगतम् । ) कि नाम प्रतिबोधितास्मीति स्वप्नदर्शनमनया वर्णितं भवेत् । अथवा सखीवचनादेव व्यक्तिर्भविष्यति ।

सुवदना—जं एत्थ अच्चाहिदं तं भाईरहीप्पमुहाणं णईणं सलिलेण अवहारिअदु । ब्रह्मणाणं वि आसीसाए हुदाहुदिसुअन्धिणा ज्जलणेण अव-

---

आर्यपुत्रस्य = पत्युः, प्रभातमङ्गलतूर्यरवमिश्रेण, राज्ञः प्रभाते जागरणार्थं वाद्यवादनं गणिकासंगीतिश्च भवत इत्याकूतम् । वारविलासिनी=वेश्या । प्रतिबोधिता = जागरिता ।

नामेति—नामशब्दोऽत्र विस्मये । प्रतिवोधितास्मीतीति-किमुक्त प्रतिवोधिताऽस्मीति, यन्मयाऽवगतं तन्नास्यास्तात्पर्यं किन्तु स्वप्नदर्शनम् ।

---

राजा—( विचार कर ) 'बडी धृष्टता से हाथ फैला कर स्तनावरण को दूर हटा दिया ?' ( क्रुद्ध होकर ) बस, अब इससे अधिक सुनने की कोई आवश्यकता नहीं—अच्छा अब परदारलम्पटपटु उस हतभाग्य माद्रीपुत्र को यमराज के घर का अतिथि बनाता हू । ( थोडा आगे बढ़कर फिर ठहर कर ) अथवा सर्वप्रथम इसी दुराचारिणी को दण्ड देना चाहिए । ( पीछे लौट आता है )

दोनों सखियां—फिर क्या हुआ ?

भानुमती—इसके अनन्तर आर्यपुत्र के उद्बोधननिमित्त प्रभातकालिक मृदङ्गध्वनि के साथ वेश्याओं के सङ्गीत से मैं जाग पडी ।

राजा—( तर्कित होकर ) क्या कहा—'मैं जाग पडी' ? स्वप्न का वर्णन इन्होंने किया होगा अथवा सखियों की वात से ही स्पष्ट हो जायगा ।

सुवदना—जो कुछ भी अमङ्गल हो उसे गङ्गाप्रभृति नदियों के जल से दूर कीजिए ;

रक्तया वयमेवं विप्रलब्धाः। ('सोत्प्रेक्षम् . इयमस्मत्-'(२।१०) इति पठित्वा।) मूढ दुर्योधन, कुलटाविप्रलभ्यमात्मानं बहुमन्यमानोऽधुना किं वक्ष्यसि। ( किं कण्ठे-(२।९ ) इत्यादि पठित्वा। दिशोऽवलोक्य।) अहो, एतदर्थमेवास्याः प्रातरेव विविक्तस्थानाभिलापः सखीजनसंकथासु च पक्षपातः। दुर्योधनस्तु मोहादविज्ञातबन्धकीहृदयसारः क्वापि परिभ्रान्तः। आः पापे मत्परिग्रहपांसुले।

तद्भीरुत्वं तव मम पुरः साहसानीदृशानि

---

क्तया=स्नेहवत्या माद्रीसुत कामयमानयेत्यर्थः। विप्रलब्धाः=वञ्चिताः 'विप्रलब्धस्तु वञ्चित' इत्यमरः। सोत्प्रेक्षम्=स्नेहप्रयुक्तपूर्वविषयस्मरणपूर्वकम्। कुलटाविप्रलभ्यम्=पुंश्चलीवञ्चनीयम् स्मरसीत्यध्याहृत्य वक्ष्यसि इत्यत्र अभिज्ञावचने लृडिति सूत्रे लृट्, तेन किं किमब्रवीरित्यर्थः। विविक्तस्थानाभिलाप.=निर्जनस्थानेच्छा मोहात्=वंचित्यात्, अविज्ञातबन्धकीहृदयसार.=अनवगतकुलटाहृदयतत्त्वः, 'पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरी' इत्यमरः। मत्परिग्रहपांशुले=परिग्रह. पत्नी सा चासौ पांशुला कुलटा तस्याः सम्बोधने। 'पत्नीपरिजनादानमूलशापा परिग्रहा.' इत्यमर.।

अन्वय—मम, पुर., तव, तत्, भीरुत्वम्, ईदृशानि साहसानि, असमद्वपुषि, सा, श्लाघा, विनयव्युत्क्रमे, अपि, एषः, रागः, जडमतौ, मयि, तत्, औदार्य्यम्, चापले, च, कोऽपि, पन्था', वितमसि, ख्याते, तस्मिन्, कुले, जन्म, एतत्, कौलीनम्॥

असमप्रयुक्तकुलटात्व मन्यमानस्तदनुगुणं विरुद्धक्रिया दर्शयति=तद्भीरुत्वमिति।

मम, पुरः=अग्रे, तव, तत्=पूर्वप्रसिद्धम्, भीरुत्वं=भयम् ईदृशानि=परपुरुषप्रेमरूपाणि, साहसानि=दुष्करकर्माणि। एतेन निर्भयता सूचिता। 'साहसं तु दमे दुष्करकर्मणि, इति हैमः। भयनिर्भयतारूपविरुद्धधर्मद्वयं दृश्यते त्वयीति

---

का स्मरण करता हुआ) (इयमस्मद० श्लोक १० को पढ़ कर) मूर्ख दुर्योधन! व्यभिचारिणी से प्रतारित हो कर अपने को बहुत कुछ समझता हुआ अब क्या कहोगे? (किं कण्ठे इत्यादि श्लो० ९ को पढता हुआ) अहा! कारण समझ में आगया। इसी लिए प्रभात में ही एकान्त स्थान के लिए इसकी उत्कट इच्छा थी। सखियों के साथ बात चीत करने में भली भाँति अभ्यस्त हैं। दुर्योधन को मोह में पडे रहने के कारण व्यभिचारिणी के हृदय की बात क्या मालूम? अयि दुराचारिणि! मेरी अधम रमणी!

मेरे समक्ष तुम्हारी वह भीरुता और इस प्रकार का साहस। मेरे शरीर में वह प्रीति ।।११ इतनी विनम्रता तथा शील के विरुद्ध यह प्रेम, मुझ मूर्ख में वह उदारता और यह

श्लाघा सास्मद्वपुषि विनयव्युत्क्रमेऽप्येष रागः ।
तच्चौदार्यं मयि जडमतौ चापले कोऽपि पन्थाः
ख्याते तस्मिन्वितमसि कुले जन्म कौलीनमेतत् ॥ ११ ॥

सखी—तदो तदो । ( ततस्तत । )

भानुमती—यदो सोविसं अणुसरन्तो एव्व लदामण्डवं पविट्ठो । ( ततः सोऽपि मामनुसरन्नेव लतामण्डपं प्रविष्टः । )

राजा—(आत्मगतम्) अहो, कुलटोचितमस्याः पापाया अशालीनत्वम् ।

---

महदाश्चर्यमिति भावः । अस्मद्वपुषिः = अस्माक शरीरे, सा = प्रसिद्धा, श्लाघा = प्रशंसा प्रेमातिशय इत्यर्थः । विनयव्युत्क्रमे = सदाचारातिक्रमणे, अपि एषः = अन्यपुरुषविषयकः, रागः = अनुरागः, यदैवाह न श्लाघनीयस्तदैव त्वयाऽन्यत्र रागः कर्तव्य इति मम शरीरे श्लाघा तदभावमूलकोऽन्यत्र राग इतिविरुद्धमिति भावः । जडमतौ = तत्त्वाज्ञातरि, मयि, तत् = प्रसिद्धम् , औदार्यम् = उदारता महत्त्वमित्यर्थः । शुद्धस्वभाव इति यावत् । चापले पुंश्चलीत्वे, च, कोऽपि, पन्थाः = अनुसरणमार्गः, शुद्धस्वभावता पुंश्चलीत्वानुसरणम् विरुद्धमिति भावः । 'मीनेऽपि चपला तु स्यात् पिप्पल्यां विद्युति स्त्रियां पुंश्चल्यामि'ति हैमः । वितमसि = विशुद्धे, ख्याते = सर्वजनवेद्ये तस्मिन् = दोषरहिते, कुले = वंशे, जन्म = उत्पत्तिः, एतत् = परपुरुषसङ्गमरूपम् , कौलीनम् = लोकवाद , 'स्यात्कौलीनं लोकवादः' इत्यमरः । तथा च कुलटोचितमेव सर्वं तवेति भावः । अत्र विरुद्धयोः सङ्घटनातो विषमालङ्कारः । मन्दक्रान्ता छन्दः । लक्षणमुक्तमष्टमश्लोके ॥ ११ ॥

लतामण्डपम् = निकुञ्जम् । अनुसरन् = पश्चादागच्छन् । अशालीनत्वं पापायाः = पापमस्ति अस्या इति अर्श आदित्वान्मतुबर्थेऽच्प्रत्ययः ।

---

धृष्टता, उस शुभ्र निष्कलङ्क कुल में जन्म और यह दुराचार [ अर्थात् मेरे सामने तो वडी डरपोक सी बनी रहती थी और अब दूसरे पति के साथ इस प्रकार सम्बन्ध करने का यह साहस हो रहा है । मेरे रूप और लावण्य की खूब प्रशंसा करती थी और अब यह भोलेपन के विरुद्ध कार्य कर रही हो, मुझ मूर्ख के प्रति वडी उदारता प्रकट करती थी परन्तु अब इस प्रकार के कुमार्ग पर चली जा रही हो जन्म तो तुम्हारा विशुद्धकुल में हुआ है परन्तु यह नीच कर्म कर रही हो ] ॥ ११ ॥

सखी—तो फिर क्या हुआ ?

भानुमती—तो फिर मैं शीघ्र ही लताकुञ्जों में चली गई वह भी मेरा अनुसरण करता हुआ उसी लतानिकुञ्ज में प्रवेशकर गया ।

राजा—अहो, इस दुराचारिणी में व्यभिचारिणियों की सी निर्लज्जता भी है ।

यस्मिश्चिरप्रणयनिर्भरबद्धभाव—
सावेदितो रहसि मत्सुरतोपभोग. ।
तत्रैव दुश्चरितमद्य निवेदयन्ती
ह्रीणासि पापहृदये न सखीजनेऽस्मिन् ॥ १२ ॥

उभे—तदो तदो ( ततस्तत । )

भानुमती—तदो तेण सप्पगब्भप्पसारिअकरेण अवहिदं मे त्थणंसुअम् । ( ततस्तेन सप्रगल्भप्रसारितकरेणापहृतं मे स्तनांशुकम् । )

---

=लज्जाराहित्यम् । शालाप्रवेशमर्हतीति शालीना 'शालीनकौपीने अधृष्टाकार्ययो' रिति निपातनात्खप्रत्ययः । अत्रावयवार्थस्तु न विवक्षितः, रूढिशब्दत्वात् ।

अन्वय —यस्मिन् , रहसि, मत्सुरतोपभोगः, चिरप्रणयनिर्भरबद्धभावम् , आवेदित , तत्रैव, अस्मिन् , सखीजने, दुश्चरितम् , अद्य, निवेदयन्ती, हे पापहृदये ! न, ह्रीणा, असि ॥ १२ ॥

लज्जाकारणसत्त्वेऽपि लज्जारहित्यं दर्शयति—यस्मिन्निति । यस्मिन् = सखीजने, रहसि = एकान्ते, मत्सुरतोपभोगः = मदीयरतिजन्यभोग., चिरप्रणयनिर्भरबद्धभावम् = बहुकालिकप्रेमातिशयेन कृतबन्धनाभिप्रायम् , यथा स्यात्तथा आवेदित = कथितः, तत्रैव = तस्मिन्नेव एवशब्दोऽवधारणे । अस्मिन् = उपस्थिते, तदिदंशब्दाभ्या प्रत्यभिज्ञां दर्शयति । सखीजने = आलिसङ्घे, दुश्चरितम् = परपुरुषसङ्गमरूपदुराचारम् , अद्य = इदानीम् , 'इदानीमद्ये' ति कलापसूत्रेण निष्पन्नं सम्प्रत्यर्थे अद्येति । निवेदयन्ती = कथयन्ती, हे पापहृदये ! न ह्रीणा = लज्जिता, असि । लज्जास्थानेऽपि कथ न लज्जस इति भावः । अत्रैकस्मिन्नेव सखीजने अनेकयोः स्वामिसुरतोपभोगदुश्चरितयोः स्थापनात्पर्य्यायालङ्कारः । वसन्ततिलका छन्दः ॥ १२ ॥

तत = मत्कर्तृकलतामण्डपप्रवेशानन्तरम् , सप्रगल्भप्रसारितकरेण = सप्रगल्भं यथा स्यात्तथा प्रसारितः कर. हस्तः येन तेन सप्रगल्भप्रसारितशब्दयोः स्तोकनम्रा इतिवत्समास. । तेन = नकुलेन, मे, स्तनांशुक = कुचस्योपरि स्थितं वस्त्रम् , अपहृतम् = आकृष्टम् ।

---

अरी पापचित्ते, जिन सहेलियों से चिरकाल के प्रेम और अत्यन्त आसक्ति के साथ मेरे रमणक्रिया की वार्ता की थी आज वही उन सखियों से अपने दुष्कृत्यों की वार्ता करते हुए तुम्हें लज्जा नहीं उत्पन्न होती ?

**दोनों सखियाँ**—तो आगे क्या हुआ ?

**भानुमती**—तब उसने बड़ी धृष्टता से हाथ फैलाकर मेरे स्तनावरणको दूर हटा दिया ।

राजा—( सक्रोधम्, आत्मगतम् ) अलमिदानीमतः परमाकर्णनेन । भवतु तावत्तस्य परवनितावस्कन्दनप्रगल्भस्य माद्रीसुतहतकस्य जीवितमपहरामि । ( किंचिद्गत्वा । विचिन्त्य । ) अथवा इयमेव तावत्पापशीला प्रथममनुशासनीया । ( इति निवर्तते । )

उभे—तदो तदो । ( ततस्ततः । )

भानुमती—तदो अज्जउत्तस्स पभादमङ्गलतूररवमिस्सेण वारविलासिणीजणसगीदरवेण पडिबोधिदह्मि । ( तत आर्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वारविलासिनीजनसङ्गीतरवेण प्रतिबोधितास्मि । )

राजा—( सवितर्कम्, आत्मगतम् । ) किं नाम प्रतिबोधितास्मीति स्वप्नदर्शनमनया वर्णितं भवेत् । अथवा सखीवचनादेव व्यक्तिर्भविष्यति ।

सुवदना—जं एत्थ अच्चाहिदं तं भाईरहीप्पमुहाणं णईणं सलिलेण अवहारिअदु । ब्रह्मणाणं वि आसीसाए हुदाहुदिसुअन्धिणा ज्जलणेण अव-

---

आर्यपुत्रस्य = पत्युः, प्रभातमङ्गलतूर्यरवमिश्रेण, राज्ञः प्रभाते जागरणार्थं वाद्यवादनं गणिकासंगीतिश्च भवत इत्याकूतम् । वारविलासिनी=वेश्या । प्रतिबोधिता = जागरिता ।

नामेति—नामशब्दोऽत्र विस्मये । प्रतिबोधितास्मीतीति-किमुक्त प्रतिबोधिताऽस्मीति, यन्मयाऽवगत तच्चास्यास्तात्पर्यं किन्तु स्वप्नदर्शनम् ।

---

राजा—( विचार कर ) 'बडी धृष्टता से हाथ फैला कर स्तनावरण को दूर हटा दिया ?' ( क्रुद्ध होकर ) बस, अब इससे अधिक सुनने की कोई आवश्यकता नहीं—अच्छा अब परदारलम्पटपटु उस हतभाग्य माद्रीपुत्र को यमराज के घर का अतिथि बनाता हू । ( थोडा आगे बढकर फिर ठहर कर ) अथवा सर्वप्रथम इसी दुराचारिणी को दण्ड देना चाहिए । ( पीछे लौट आता है )

दोनों सखियां—फिर क्या हुआ ?

भानुमती—इसके अनन्तर आर्यपुत्र के उद्बोधननिमित्त प्रभातकालिक मृदङ्गध्वनि के साथ वेश्याओं के सङ्गीत से मैं जाग पडी ।

राजा—( तर्कित होकर ) क्या कहा—'मैं जाग पडी' ? स्वप्न का वर्णन इन्होंने किया होगा अथवा सखियों की बात से ही स्पष्ट हो जायगा ।

सुवदना—जो कुछ भी अमङ्गल हो उसे गङ्गाप्रभृति नदियों के जल से दूर कीजिए ;

हारिश्रद्ु। ( यदिहात्याहितं तद्भागीरथीप्रमुखाना नदीना सलिलेनापहियताम् । ब्राह्मणानामप्याशिषा हुताहुतिसुगन्धिना ज्वलनेन (च) अपहियताम् । )

राजा—( आत्मगतम् ) अलं विकल्पेन। स्वप्नदर्शनमेवैतदनया वर्णितम्। मया पुनर्मन्दधियाऽन्यथैव सम्भावितम् ।

दिष्ट्यार्धश्रुतविप्रलम्भजनितक्रोधादहं नो गतो
दिष्ट्या नो परुषं रुषार्धकथने किञ्चिन्मया व्याहृतम् ।

---

दृष्टे = स्वप्ने, यत्, अत्याहितम् = महाभयम्, तत् भागीरथीप्रमुखाना = गङ्गाप्रधानानां, नदीनां = सरिताम्, सलिलेन = जलेन, अपह्रियताम् = निराक्रियताम्। ब्राह्मणानाम्, आशिषा = हिताशसया, 'आशीर्हिताशसा' इत्यमर.। हुताहुतिसुगन्धिना = शोभनः गन्धः अस्येति सुगन्धि. हुता या आहुतिः तया सुगन्धि. तेन, ज्वलनेन = अग्निना, अपह्रियतामिति, अत्याहितमित्यनेनान्वेति।

स्वप्नदर्शनमिति—अनया स्वप्नदर्शनमेवैतद् वर्णितमित्यन्वयः। एवकारेण दुर्योधनावगतमाद्रीसुतमन्त्रस्य व्यवच्छेदः।

अन्वय—अर्धश्रुतविप्रलम्भजनितक्रोधात्, अहम्, नो, गतः, दिष्ट्या, अर्धकथने, रुषा, मया, किञ्चित्, परुषम्, नो व्याहृतम्, दिष्ट्या, विमूढहृदयम्, माम्, प्रत्याययितुम्, कथा, अन्तम्, गता, दिष्ट्या, मिथ्यादूषितया, अनया, विरहितम्, जगत्, न, जातम्, दिष्ट्या ॥ १३ ॥

आनन्दोऽयं यन्मया चाञ्चल्यं न कृतमित्याह—दिष्ट्येति। अर्धश्रुतविप्रलम्भजनितक्रोधात् = अर्धश्रुतो यो विप्रलम्भः अन्यथावगतवाक्यम् तेन जनितो यः क्रोधः तस्मात्, अहं, नो=न, गत' माद्रीसुतहननार्थमिति भावः। दिष्ट्या = आनन्दोऽयम् 'दिष्ट्या समुपजोष चेत्यानन्दे' इत्यमर'। दिष्ट्येत्यस्याग्रेऽपि एवमेवार्थः। अर्धकथने= अर्धोक्तौ, रुषा = क्रोधेन, मया, किञ्चित्, परुषं = कर्कशवचनम् नो, व्याहृतम् = उक्तम्, दिष्ट्या, विमूढहृदयम्=विमूढं मोहाच्छन्नं हृदयं यस्य तम्, मां=दुर्योधनम्,

---

एवं ब्राह्मणों के आशीर्वाद से तथा आहुतिप्रक्षेप से प्रज्वलित अग्निदेव के द्वारा अमङ्गल का नाश कीजिए।

राजा—सन्देह करना व्यर्थ है—ये स्वप्न का ही यह वर्णन की हैं और मैं मूर्ख इसे दूसरे ही रूप में समझा।

अच्छा हुआ आधा ही सुन कर आत्मवञ्चना से उत्पन्न क्रोध के वश में न हुआ, सौभाग्य की बात है कि मैंने सब बात पूरी नहीं हो पायी थी तभी क्रोध से कटुवचन का प्रयोग नहीं किया ; भाग्य से ही मुझे श्रीमती के प्रति विश्वास दिलाने के लिए ही उनकी

माम्प्रत्याययितुं विमूढहृदयं दिष्ट्या कथान्तं गता
मिथ्यादूषितयानया विरहितं दिष्ट्या न जातञ्जगत् ॥ १३ ॥

भानुमती—हला, कहेहि किं एत्थ किं वा असुहसूअअंत्ति । ( हला, कथय किमत्र प्रशस्तं किं वाऽशुभसूचकमिति । )

सखी चेटी च—( अन्योन्यमवलोक्य । अपवार्य । ) एत्थ णत्थि त्थोअं वि सुहसुअअम् । तदो अलीअं कधअन्ती पिअसहीए अवराहिणी भविस्सम् । सो दाणीं सिणिद्धो जणो जो पुच्छिदो परुसं वि हिदं भणादि । ( प्रकाशम् । ) सहि, सव्वं एव्वं एद असुहणिवेदणम् । ता देवदाणं पणामेण दुजादि-जणपडिग्गहेण अ अन्तरीअदु । ण हु दाढिणो णउलस्स वा दंसणं अहि-सदवहं अ सिविणेय पसंसन्ति विअक्खणाओ । ( अत्र नास्ति स्तोकमपि शुभसूचकम् । ततोऽलीकं कथयन्ती प्रियसख्या अपराधिनी भविष्यामि । स इदानीं स्निग्धो जनो यः पृष्ट परुषमपि हितं भणति । सखि, सर्वमेवैतदशुभनिवेदनम् ।

---

प्रत्याययितुम् = बोधयितुम् , कथा = वर्तालापः, अन्तं = समाप्तिम् , गता, दिष्ट्या, मिथ्यादूषितया = मिथ्याव्यभिचाररूपदोषयुक्तया, अनया, विरहितम्=शून्यं, जगत्= संसारः, न जातम् मया अमास्ता न हतेति भावः । भाग्येनैतत्सर्वं जातमिति गूढाभि-प्राय. । शार्दूलविक्रीडितं छन्दः । लक्षणमुक्त प्रथमश्लोके ॥ १२ ॥

अत्र = स्वप्ने, प्रशस्तम् = शुभसूचकम् ।

स्तोकम् = अल्पम् । अलीक = मिथ्या । अशुभसूचकमपि शुभसूचकमिति, कथ-यिष्यामि तदा मिथ्याकथनादपराधभागिनी भविष्यामीत्यर्थ. । स्निग्धः = स्नेही हितेच्छुरित्यर्थ. । पृष्ट = स्वामिनेति शेपः । परुष = निष्ठुरम् । साम्प्रतं श्रवणमात्रेण

---

बातचीत समाप्त हो गई ; और यह भी पुण्य की बात है नहीं तो मुझ से ये व्यर्थ ही कलङ्कित हो अपने प्राण विसर्जन कर देतीं और इन से वियुक्त हो कर मैं अपने लिए ससार को शून्य समझता ॥ १२ ॥

भानुमती—ऐ सखि कहो इस स्वप्न में कितना अंश अशुभ और कितना शुभ है ?

सखी और दासी—( एक दूसरे को देख कर और छिपा कर ) इस में कुछ भी शुभ-सूचक नहीं है, यदि असत्य भाषण करूंगी तो प्रिय सहेली की अपराधिनी हो जाऊंगी। अत सुहृज्जन जो पूछें यदि उसके उत्तर में हित की बात चाहे श्रोत्राभिराम न हो कहनी चाहिए। सखि, यह स्वप्न तो सब रीति से अमङ्गल का ही सूचक है- अत देवताओं के नमस्कार से, दूर्वादल इत्यादि माङ्गलिक वस्तुओं के स्पर्श से अमङ्गल का शमन करना चाहिए, क्योंकि दाँत वाले प्राणियों में चाहे न्यौला हो चाहे दूसरा कोई हो उस का स्वप्न

तद्देवताना प्रणामेन द्विजातिजनप्रतिग्रहेण चान्तर्यताम् । न खलु दंष्ट्रिणो नकुलस्य वा दर्शनमहिशतवधं च स्वप्ने प्रशंसन्ति विचक्षणाः । )

राजा—( आत्मगतम् ) अवितथमाह सुवदना । नकुलेन पन्नगशतवधः स्तनांशुकापहरणं च नियतमनिष्टोदर्कं तर्कयामि ।

पर्यायेण हि दृश्यन्ते स्वप्नाः कामं शुभाशुभाः ।
शतसंख्या पुनरियं सानुजं स्पृशतीव माम् ॥ १४ ॥

दुःखकरमपि अग्रे शुभकरमवश्यं वक्तव्यमित्यर्थः । प्रकाशम् = सर्वश्राव्यम् , तदुक्तं दर्पणे—'सर्वश्राव्य प्रकाश स्यात् ।' इति ।

देवतानां = देवानां, प्रणामेन, द्विजातिजनप्रतिग्रहेण = ब्राह्मणोद्देश्यकदानेन, 'चतुर्थी तदर्थार्थे'ति सूत्रे चतुर्थीति योगविभागात्समासः । अन्तर्यताम् = व्यवहितं क्रियताम् । स्वप्नदर्शनजन्यप्राप्ताशुभं विनाश्यतामिति यावत् । दंष्ट्रिणः = दंशकस्य सर्पस्येत्यर्थः अहि. = सर्पः । विचक्षणाः = विद्वांसः, प्रशंसन्ति = शुभं कथयन्ति ।

सुवदना, अवितथम् = सत्यम् , आहेत्यन्वयः । नियतम् = निश्चयम् , क्रियाविशेषणं भावप्रत्ययान्तोऽयम् । अनिष्टोदर्कम् = अनिष्टम् उदर्कम्, उत्तरकालिकफलं यस्य तत् । तर्कयामि—अनुमिनोमि ।

अन्वय —हि, पर्यायेण, शुभाशुभाः, स्वप्नाः, कामम् , दृश्यन्ते, इयम् , पुनः, शतसख्या, सानुजम् , माम् , स्पृशति, इव ॥ १४ ॥

उत्तरकाले सम्भाव्यमशुभमाह—पर्यायेणेति । हि = यत', पर्यायेण = अनुक्रमेण, शुभाशुभा. = शुभा अशुभाश्च, शोभत एभिरिति शुभाः, करणे घञ्' । स्वप्नाः = शयनकालेऽन्तःकरणपरिणामविशेषः, कामम्=यथेष्टम् , दृश्यन्ते = विलोक्यन्ते, इयं= अहिगता, शतसख्या = शतत्वसख्या, पुनः, सानुजम् = कनिष्ठभ्रातृसहितम् , मां = दुर्योधनम् , स्पृशति=विषयीकरोति इव, वयमपि शतं भ्रातर. सर्पाश्च शतं, तथा च सख्यासामान्यादस्माकं भयमित्यर्थः । पथ्यावक्त्रं छन्द. । लक्षणमुक्त तृतीयश्लोके ॥

में दर्शन होना अथवा एक सौ सर्पों का स्वप्न में वध होना स्वप्न के शुभाशुभ कथनकर्ता पण्डित लोग अच्छा नहीं कहते ।

**राजा**—सुवदना सत्य कहती है , 'नकुल के द्वारा सौ सर्पों का वध और स्तन के वस्त्र का अपहरण करना हम लोगों के भविष्य के लिए अच्छा नहीं है'—यह मानी हुई बात है—इस प्रकार मैं समझता हूँ ।

स्वप्न तो कभी शुभ और कभी अशुभ क्रमपूर्वक दिखाई पडते रहते हैं, परन्तु यह सौ की सख्या मेरे भ्रातृवर्गों के प्रति मुझे मर्मविद्ध कर रही है ॥ १४ ॥

( वामाक्षिस्पन्दनं सूचयित्वा । )

आः ममापि नाम दुर्योधनस्यानिमित्तानि हृदयक्षोभमावेदयन्ति । ( सावष्टम्भम् । ) अथवा भीरुजनहृदयप्रकम्पनेषु का गणना दुर्योधनस्यैवंविधेषु । गीतश्चायमर्थोऽङ्गिरसा ।

ग्रहाणां चरितं स्वप्नोऽनिमित्तौत्पातिक तथा ।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति ॥ १५ ॥

तद्भानुमत्याः स्त्रीस्वभावसुलभामलीकाशङ्कामपनयामि ।

भानुमती—हला सुवअणे, पेक्ख दाव उदअगिरिसिहरन्तरविमुक्करह-

---

वामाक्षिस्पन्दनमिति—वामनेत्रस्पन्दनं पुरुषाणामशुभसूचकं लोके ख्यातमस्ति । अनिमित्तानि = अशुभसूचकानि, हृदयक्षोभं = मनोदुःखम् ।

अन्वय —ग्रहाणाम् , चरितम् , स्वप्नः, तथा, अनिमित्तौत्पातिकम्, ( एते ), काकतालीयं यथा स्यात्तथा, फलन्ति, तेभ्यः, प्राज्ञाः, न, बिभ्यति ॥ १५ ॥

पूर्वोक्तेऽर्थे प्रमाणमाह—ग्रहाणामिति । ग्रहाणां = सूर्यादीनाम् , चरितं = सञ्चरणम् , राश्यन्तर इति भावः । स्वप्नः, तथा, अनिमित्तौत्पातिक = आकस्मिकमहावायुप्रवहणम् , एते, काकतालीयम् = अतर्कितागतं यथास्यात्तथा । फलन्ति = फलदायका भवन्ति । यथा तालवृक्षाधः सञ्चरत काकस्योपरि तालफलपतनेन कदाचिदेव मृत्युर्भवति तथैव कदाचिदेव तेऽपि फलवन्तो भवन्तीति भावः । तेभ्यः=स्वप्नादिभ्यः, प्राज्ञाः = विद्वांसः न, बिभ्यति = भयं प्राप्नुवन्ति । 'अदभ्यस्तादि'ति क्षस्यादादेशः । अत्र प्राकरणिकस्य स्वप्नस्याप्राकरणिकयोरन्ययोश्चैकस्मिन्फले सम्बन्धाद्दीपकालङ्कारः । पथ्यावक्त्रं छन्दः ॥ १५ ॥

स्त्रीस्वभावसुलभां = नारीणां स्वभावतः प्राप्तियोग्याम् , अलीकाशङ्काम्=मिथ्यासंशयम् , स्वप्नदर्शनजन्यामिति भाव । अपनयामि = निवर्तयामि ।

---

( वाम नेत्र के स्पन्दन का अभिनय कर के )

ओह, क्यों ये अपशकुन दुर्योधन के भी हृदय को क्षुब्ध कर रहे हैं ? ( अभिमान के साथ ) ऐसे अपशकुन जो कायरों के हृदय को क्षुब्ध कर देते हैं उनमें दुर्योधन की क्या बात ? इस अर्थ की पुष्टि अङ्गिरा के वचन से होती है.—

ग्रहों का शुभाशुभ फल, स्वप्न, अपशकुन तथा उत्पात काकतालीयन्याय से फल देते हैं अर्थात् फल देते भी हैं नहीं भी देते हैं , बुद्धिमान् व्यक्ति इस से भयभीत नहीं होते ॥

अतः भानुमती के स्त्री स्वभाव के लिये स्वाभाविक इस अमङ्गलकी आशङ्का दूर करूंगा।

भानुमती—अरी सुवदने, देखो तो उदयाचल के शिखर के प्रान्त भाग का परित्याग

वरो विअलन्तसंझारानअप्पसण्णदुरालोअमण्डलो जादो भअवं दिवहणाहो।
(हला सुवदने, पश्य तावदुदयगिरिशिखरान्तरविमुक्तरथवरो विगलत्सन्ध्यारागप्रसन्नदुरालोकमण्डलो जातो भगवान् दिवसनाथ।)

सखी—सहि, रोसाणिदकणअपत्तसरिसेण लदाजालन्तरापडिदकिरणणिवहेण पिञ्जरिदोज्जाणभूमिभाओ पूरिदपदिण्णो विअ रिउदुप्पेक्खणिज्जो जादो भअवं सहस्सकिरणो। ता समओ दे कुसुमचन्दणगब्भेण अग्घेण पज्जुवट्ठादुम्। (सखि, रोसानितकनकपत्रसदृशेन लताजालान्तरापतितकिरणनिवहेन पिञ्जरितोद्यानभूमिभाग: पूरितप्रतिज्ञ इव रिपुदुःप्रेक्षणीयो जातो भगवान्सहस्रकिरणः। तत्समयस्ते कुसुमचन्दनगर्भेणार्घेण पर्युपस्थातुम्।)

भानुमती—हञ्जे तरलिए, उवणेहि से अग्घभाअणं जाव भअवदो सहस्सरस्सिणो सवरिअं णिव्वट्ठेमि। (हञ्जे तरलिके, उपनय मेऽर्घभाजनं

उदयगिरिशिखरान्तरविमुक्तरथवर = उदयाचलस्य यः शिखरः श्रृङ्ग तस्यान्तरात् मध्याद् विमुक्तः प्रचलितः रथवरः स्यन्दनश्रेष्ठः यस्य सः। विगलितसन्ध्यारागप्रसन्नदुरालोकमण्डलः = विगलितः सन्ध्यारागः सन्धिकालिकरक्तिमा यस्य सः अत एव प्रसन्नं दुरालोकमण्डल प्रकृष्टप्रकाशविम्बः यस्य सः, 'बहुव्रीहिगर्भकर्मधारयसमास.'। जातः, भगवान्, दिवसनाथः = सूर्य.।

रोसानितेति—परीक्षितस्वर्णतुल्येनेत्यर्थः। लताजालान्तरपतितकिरणनिवहेन= लतासमूहमध्यप्रविष्टरश्मिसमुदायेन। पिञ्जरितोद्यानभूमिभागः = पिञ्जरितः पीतीकृत उद्यानभूमिभागो येन सः। पूरितप्रतिज्ञ इव, रिपुदुःप्रेक्षणीयः = प्रचण्डातपः जातः, भगवान्, सहस्रकिरणः = सूर्य। पर्युपस्थातुम् = अर्चितुम्।

अर्घभाजनम् = अर्घदानार्थं पात्रम्। सहस्ररश्मेः = सूर्यस्य, सपर्य्याम्=पूजाम्।

करते हुए सुवर्णमय रथ से उषाकाल की लालिमा के दूर हो जाने से भगवान् भास्कर (सूर्य) का आलोकमण्डल प्रकाशित हो उठा।

सखी—तपाये हुए सुवर्ण की दीप्ति के सदृश किरणों के पुञ्ज से, जो लताओं के कुञ्जों के अवकाश भाग से छन छन कर नीचे आरही हैं, वाटिका की भूमि पिङ्गल वर्ण की बनाते हुए सहस्रांशु (सूर्य) मानों अपनी प्रतिज्ञा पूर्ण कर के शत्रुओं के लिये दुष्प्रेक्ष्य बन गए हैं अर्थात् सूर्य भगवान् ऊँचे आगये हैं जिस से उन की तरफ शत्रु वर्ग आँख उठा कर देख भी, नहीं सकता अत पुष्प-चन्दन-विमिश्रित अर्घ के द्वारा उपस्थान करने के लिये आप का समय हो गया है।

भानुमती—अरी तरलिके, मेरा अर्घ्य-पात्र ला दो जिससे मैं भगवान् भास्कर का पूजन करूँ।

यावद्भगवतः सहस्ररश्मे सपर्यां निर्वर्तयामि । )

चेटी—जं देवी आणवेदि । (इति निष्क्राम्य पुन प्रविशन्ती ) देवि, एदं अग्घभाअणम् । ता णिव्वट्टीअदु भअवदो सहस्सरस्सिणो सवरिआ (यद्देवी आज्ञापयति । देवि एतदर्घभाजनम् । तन्निर्वर्त्यतां भगवत' सहस्ररश्मेः सपर्या।)

राजा—(आत्मगतम्) अयमेव साधुतरोऽवसरः समीपमुपगन्तुं देव्याः ।

( प्रविशति । )

( राजोपसृत्य संज्ञया परिजनमुत्सार्य स्वयमेवार्घ्यपात्रं गृहीत्वा ददाति । )

सखी—( स्वगतम् । ) कहं महाराओ समाअदो । हन्त, किदो से पिअसहीए णिअमभङ्गो रण्णा । ( कथं महाराज समागत । हन्त, कृतोऽस्याः प्रियसख्या नियमभङ्गो राज्ञा । )

भानुमती—( दिनकराभिमुखी भूत्वा । ) भअवं, अम्बरमहासरेक्कसहस्सपत्त, पुव्वदिसावहूमुहमण्डलकुङ्कुमविसेसअ, सअलभुवणाङ्गणदीवअ, एत्थ सिविणअदंसणे जं किं वि अच्चाहिदं तं भअवदो पणामेण कुसलपरिणामि ससदव्भादुअस्स अज्जउत्तस्स होदु । ( अर्घ्यं दत्त्वा । ) हला, उवणेहि मे कुसुमाइं जाव अवराणं वि देवदाणं सवरिअं णिव्वट्टेमि । ( हस्तौ प्रसारयति । ) ( भगवन् , अम्बरमहासर-एकसहस्रपत्र, पूर्वदिशा-

निर्वर्त्तयामि = सम्पादयामि ।

सुयोधनो मनसि विचारयति कथयति वा—अयमेवेति ।

सञ्ज्ञया = सङ्केतेन, परिजनम् = सखीचेट्यौ, उत्सार्य्य = पृथक्कृत्वा ।

अम्बरमहासर-एकसहस्रपत्र = अम्बरम् आकाशमेव महासरः सरोवरम् । तस्मि-

चेटी—अच्छा जो आज्ञा श्रीमति, यह पात्र लीजिए और सविता देवता का पूजन कीजिए।

राजा—यही प्रिया के पास जाने का अच्छा अवसर है ।

( समीप जाकर इशारे से सखियो को हटाकर अर्घपात्र लेकर भानुमती के हाथ में देना चाहता है )

सखी—( देख कर अपने आप ) अरे ! महाराज क्यों आगए ? खेद ! इनका नियमोछङ्घन हो गया ।

भानुमती—( सूर्याभिमुख होकर ) ऐ आकाश सरोवर के कमल, पूर्व दिशारूपी वधूटी के मुख मण्डनार्थ कुङ्कुम विशेष तथा समस्त संसार के लिये एक मात्र रत्न प्रदीप ! जो कुछ इस स्वप्न में विघ्न हों आप के प्रणाम से भातृवर्गों के साथ आर्यपुत्र के लिए

वधूमुखमण्डलकुङ्कुमविशेषक, सकलभुवनाङ्गनदीपक, अत्र स्वप्नदर्शने यत्किमप्यत्याहितं तद्भगवत प्रणामेन कुशलपरिणामि सशतभ्रातृकस्यार्यपुत्रस्य भवतु। हला, उपनय मे कुसुमानि यावदपरासामपि देवताना सपर्यां निर्वर्तयामि।)

( राजा पुष्पाण्युपनयति। स्पर्शसुखमभिनीय कुसुमानि भूमौ पातयति।)

भानुमती—( सरोषम्। ) अह्रो पमादो परिअणस्स। ( परिवृत्य दृष्ट्वा। ससम्भ्रमम् ) कथ अज्जउत्तो। ( अहो प्रमादः परिजनस्य। कथमार्यपुत्र·। )

राजा—देवि अनिपुणः परिजनोऽयमेवंविधे सेवावकाशे। तत्प्रभवत्यनुशासने देवी। अयि प्रिये

विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः
परिजनपथवर्तिन्यत्र किं सम्भ्रमेण।

---

न्यदेक सहस्रपत्रम् कमलम् तस्य सम्बोधने। पूर्वदिशावधूमुखमण्डलकुङ्कुमविशेषक= पूर्वदिगेव वधूः तस्याः मुखमण्डलस्य कुङ्कुममेव विशेषकः तिलकम्, तत्सम्बोधने। अत्याहितम्=महाभीतिः 'अत्याहितं महाभीति'रित्यमर·। अपरासाम्=अन्यासाम्।

प्रमादः = अनवधानता। परिवृत्य = सङ्घूर्ण्य। आर्यपुत्रः = पतिः।

प्रभवत्यनुशासने = अनुशासितु समर्था।

अन्वयः—परिजनपथवर्तिनि, अत्र, धवलदीर्घापाङ्गसंसर्पि, चक्षुः, विकिर, सम्भ्रमेण, किम्, स्मितमधुरम्, उदारम्, माम्, उच्चैः, आलप, हे देवि, मम, पाण्यो·, सअलि, प्रभवति, ( अत एव ) त्वम्, अस्मान्, स्पृश ॥ १६ ॥

परिजनपथवर्तिनि = परिजनस्य पन्थाः परिजनपथः सेवकमार्गः तत्र वर्तमाने, अत्र = मयि, धवलदीर्घापाङ्गसंसर्पि = धवलश्चासौ दीर्घ· धवलदीर्घः 'स्वच्छायतः'

---

परिणाम में मङ्गलकारी हों। ( अर्घ देकर ) अरी तरलिके, मुझे पुष्प ला दे जिस से मैं और भी देवताओं का पूजन सम्पादन करूँ ( यह कह कर हाथ फैलाती है )।

( राजा [ दुर्योधन ] नौकर चाकरों को सङ्केत से दूर भगा कर स्वय पुष्प प्रदान करते हैं अङ्गस्पर्श के सुखों का अनुभव कर के फूलों को नीचे गिरा देते हैं। )

भानुमती—( क्रुद्ध होकर ) वाह रे, भृत्यों की असावधानता ( पीछे मुड कर राजा को देख व्याकुल हो जाती है। )

राजा—देवि, यह भृत्य इस प्रकार की सेवा के विषय में अनभ्यस्त है। अत· श्रीमती दण्ड प्रदान कर सकती हैं। अयि स्नेहास्पदे !

सेवा कार्य्य के लिए उद्यत इस दास की ओर कर्णमूल पर्य्यन्त विश्राम करनेवाले अत एव विशाल तथा निर्मल नेत्र के द्वारा अवलोकन कीजिए [ व्रतादि नियमों के कारण

स्मितमधुरमुदारं देवि मामालपोच्चैः
प्रभवति मम पाण्योरञ्जलिस्त्वं स्पृशास्मान् ॥ १६ ॥

भानुमती—अज्जउत्त, अब्भणुण्णादाए दुए अत्थि मे कस्सिं विणिअमे अहिलासो । ( आर्यपुत्र, अभ्यनुज्ञातायास्त्वयास्ति मे कस्मिन्नपि नियमेऽभिलाषः । )

राजा—श्रुतविस्तर एवास्मि भवत्याः स्वप्नवृत्तान्तं प्रति । तदलमेवं प्रकृतिसुकुमारमात्मानं खेदयितुम् ।

स च अपाङ्गः नेत्रप्रान्तः तं ससर्पति गच्छतीति धवलदीर्घापाङ्गसंसर्पि, चक्षुः = नेत्रम्, विकिर = विक्षिप । सम्भ्रमेण = उद्वेगेन, किम् ? न किमपीत्यर्थः, उद्वेगो न कार्य इति भावः । स्मितमधुरं = स्मितेन ईषद्धासेन मधुरम् सुन्दरम्, उदारम् = दक्षिणम् यथा स्यात्तथा हे देवि, माम्, उच्चैः = तारस्वरेण, आलप = आलाप कुरु । हे देवि, मम पाण्योः = हस्तयोः, अञ्जलिः, प्रभवति = प्रकर्षेण वर्तते, अञ्जलिबद्धोऽस्मीतिभावः । अत एव त्वम्, अस्मान्, स्पृश = छुप 'प्रभवति मम पाण्योरञ्जलिः सेवितु त्वामि'ति पाठः सुगमः । अत्र पक्षे प्रभवतीत्यस्य समर्थोऽस्तीत्यर्थः । अत्र 'यद्वा कारकमेक स्यादनेकासु क्रियासु चेदि'ति लक्षणाद् एकस्यैव त्वमिति कारकस्यानेकक्रियासु सम्बन्धात्कारकदीपकालङ्कारः । मालिनीच्छन्दः । न न म य य युतेय मालिनी भोगिलोकैरिति लक्षणात् ॥ १६ ॥

त्वया, अभ्यनुज्ञातायाः = आज्ञापितायाः, मे = मम, कस्मिन्नपि, नियमे, अभिलाषः = इच्छा अस्तीत्यन्वयः ।

भवत्याः, स्वप्नवृत्तान्तम्, प्रति, श्रुतविस्तरः = श्रुतः विस्तरः येन सः, एव, अस्मीत्यन्वयः । तत् = तस्मात् प्रकृतिसुकुमारम् = स्वभावतः कोमलम् आत्मानम् = अन्तःकरणम्, एवं, खेदयितुम् = परितापयितुम्, अलम् = व्यर्थम् वासरूप-

आँखमें कज्जल नहीं लगाया गया था इसलिए नेत्र धवल थे ] व्याकुल होने से क्या लाभ ? मुझसे मन्दहास्य पूर्वक उच्च स्वर से चित्ताकर्षक तथा मधुर भाषण कीजिए । यह मेरे साञ्जलि हस्त आप की सेवा के लिए उद्यत हैं अर्थात् हाथ जोड कर यह दास आप की सेवा के लिए तय्यार है । यदि इसने अपराध किया है तो आप क्रोध भरी आँखों से देखें और डाँट फटकार कर दण्ड दें अथवा ये हाथ अञ्जलि बाँध कर अपने अपराधों के लिए क्षमा प्रार्थी हैं ॥ १६ ॥

भानुमती—महाराज, मुझे आज्ञा प्रदान करें किसी एक नियम ( व्रत ) के सम्पादन करने में मेरी बलवती इच्छा है ।

राजा—मैं श्रीमती के स्वप्नीय वृत्तान्तों को पूर्णतया सुन चुका हूँ अतः सहज सुकोमल चित्त को कष्ट देने की कोई आवश्यकता नहीं है ।

भानुमती—अज्जउत्त, मे सङ्का बाहेइ । ता अणुमण्णदु मं अज्जउत्तो । ( आर्यपुत्र, मां शङ्का बाधते । तदनुमन्यतां मामार्यपुत्र । )

राजा—( सगर्वम् । ) देवि, अलमनया शङ्कया । पश्य—

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि ।
भीरु भ्रातृशतस्य मे भुजवनच्छायासुखोपस्थिता

न्यायेन 'अलं खल्वो'रिति क्त्वाऽभावे तुमुन्प्रत्ययः ।

अन्वय.—नः व्याप्तदिशाम्, ( अत एव ) प्रकम्पितभुवाम्, अक्षौहिणीनाम्, किम्, फलम्, द्रोणेन, किम्, अङ्गराजविशिखैः किम्, ( हे ) भीरु, एवम्, यदि, क्लाम्यसि, मे, भ्रातृशतस्य, भुजवनच्छायासुखोपस्थिता, त्वम्, दुर्योधनकेशरीन्द्रगृहिणी ( वर्तसे ) ( अतः ) तव, शङ्कास्पदम्, किम् ॥ १७ ॥

शङ्काया अभावे हेतुमाह—किन्नो व्याप्तदिशामिति ।

नः=अस्माकम्, व्याप्तदिशाम्=व्याप्ता दिक् याभिः तासाम्, सर्वत्र विस्तृतानामित्यर्थः, अत एव प्रकम्पितभुवाम्=कम्पितभूमीनाम्, अक्षौहिणीनाम्=दशानीकिनीनाम्, तदुक्तममरे—

एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका । पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ।
सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः । अनीकिनी दशानीकिन्योऽक्षौहिणीति ॥

अयमर्थः—एकगजैकरथत्र्यश्वानां समूहः पञ्च पदातयश्च यत्र सा पत्तिः । तिसृभिः पत्तिभिः सेनामुखं त्रिभिः सेनामुखैः गुल्मः, त्रिभिर्गुल्मैर्गणः, त्रयो गणाः वाहिनी तिस्रो वाहिन्यः पृतना, तिस्रः पृतनाः चमूः, तिसृश्चम्वोऽनीकिनी दशानीकिन्योऽक्षौहिणी इति सेनाविशेषस्य सञ्ज्ञा । किं फलम्=कोऽर्थः न किमपीत्यर्थः । इदं, यदि क्लाम्यसीत्यनेनान्वेति, एवमग्रेऽपि । द्रोणेन=आचार्येण, किम्, अङ्गराजविशिखैः=कर्णबाणैः, किम्, हे भीरु=भययुक्ते, एवं त्वं यदि क्लाम्यसि=परितपसि, एतादृशवीरसेनासत्त्वे त्वया तापो न कार्य इति भावः । मे=मम भ्रातृशतस्य=

भानुमती—आर्यपुत्र, मैं गम्भीर सन्देह सागर में डूब रही हूँ अतः मुझे आज्ञा प्रदान कर ही दें ।

राजा—( अहङ्कार के साथ ) देवि, इस सन्देह पर ध्यान न दीजिए देखिये —

यदि आप इस प्रकार की शङ्का से विचलित हो रही हैं तो हम लोगों की अक्षौहिणी सेना की, जो समस्त दिशाओं तक प्रसिद्ध है तथा जिस के बल से भूमि कम्पित हो जाती है, क्या आवश्यकता ? अथवा द्रोणाचार्य की क्या उपयोगिता तथा कर्ण के बाणों से क्या ?

त्वं दुर्योधनकेसरीन्द्रगृहिणी शङ्कास्पदं किं तव ॥ १७ ॥

भानुमती—अज्जउत्त, ण हु मे कि वि आसङ्काकालणं तुम्हेसु सण्णिहिदेसु । किन्तु अज्जउत्तस्स एव्व मणोरहसम्पत्ति अहिणन्दामि । ( आर्यपुत्र, न खलु मे किमप्याशङ्काकारणं युष्मासु सन्निहितेषु । किन्त्वार्यपुत्रस्यैव मनोरथसम्पत्तिमभिनन्दामि । )

राजा—अयि सुन्दरि, एतावन्त एव मनोरथा यदहं दयितया सङ्गतः स्वेच्छया विहरामीति । पश्य—

प्रेमाबद्धस्तिमितनयनापीयमानाब्जशोभं
लज्जायोगादविशदकथं मन्दमन्दस्मितं वा ।

---

शतसंख्याकभ्रातृणाम् , भुजवनच्छायासुखोपस्थिता = बाहुरूपवनच्छायायां सुखेनोपविष्टा, त्वम् दुर्योधनकेशरीन्द्रगृहिणी, वर्तसे इति शेषः । यतस्त्वमेतादृशी अतः, तव = भानुमत्याः, शङ्कास्पदं = सन्देहस्थानं किम् न किमपीत्यर्थः । अत्र रूपकालङ्कारो लुप्तोपमा च । शार्दूलविक्रीडितं छन्दः ॥ १७ ॥

दयितया = स्त्रिया, सङ्गतः = युक्तः । विहरामि = विहारङ्करोमि ।

अन्वय—दुर्योधनस्य, ते, प्रेमावद्धस्तिमितनयनापीयमानाब्जशोभम् , लज्जायोगात् अविशदकथम् , मन्दमन्दस्मितम् , नियममुषितालक्तकाग्राधरम् , वा, परम् , असुलभम् , वक्त्रेन्दुम् , पातुम् , वाञ्छा, किम् न ॥ १८ ॥

प्रेमावद्धेति । दुर्योधनस्य, ते = तव, इदं वक्त्रेन्दुमित्यनेनान्वेति । प्रेमावद्धस्तिमितनयनापीयमानाब्जशोभम्-प्रेम्णा आवद्धम् युक्तम् अतएव स्तिमितं सार्द्रम् नयनम् नेत्रम् तेन आपीयमाना आक्रान्ता अब्जशोभा ( कमलसौन्दर्यम् ) येन तम् , इदं वक्त्रेन्दुविशेषणम् , एवमग्रिममपि । लज्जायोगात् = त्रपावत्त्वात् , अवि-

---

ऐ भीरु ! मेरे सौ भाइयों के भुजारूपी कानन की छाया में आनन्द से विश्राम करती हुई आप सिंह दुर्योधन की धर्मपत्नी हैं आप के लिए शङ्का का स्थान कैसा ? ॥ १७ ॥

**भानुमती**—आर्य, आप लोगों के होते हुए मुझे सन्देह का कोई कारण ही नहीं है किन्तु आर्यपुत्र के ही मङ्गल की कामना करती हूँ ।

**राजा**—अयि मनोरमे, मैं अपनी वल्लभा के साथ स्वच्छन्द विहार कर रहा हूँ यही हम लोगों के मनोरथ हैं देखिये —

आप के मुख चन्द्र ने स्नेहाधिक्य से निश्चल नेत्रों के द्वारा कमल को पराजित कर दिया है तथा लज्जा के कारण उस से स्पष्ट शब्द नहीं निकल रहे हैं और अधरपुट से व्रत पालन के कारण लाक्षारस के चिह्न दूर हो गये हैं इस तरह के तथा मन्द हासकारी

वक्त्रेन्दुं ते नियममुषितालक्तकाग्राधरं वा
पातुं वाञ्छा परमसुलभं किं न दुर्योधनस्य ॥ १८ ॥

( नेपथ्ये महान् कलकलः । सर्वे आकर्णयन्ति )

भानुमती—( सभयं राजानं परिष्वज्य । ) परित्ताअदु परित्ताअदु अज्ज-उत्तो । ( परित्रायतां परित्रायतामार्यपुत्रः । )

राजा—( समन्तादवलोक्य । ) प्रिये, अलं सम्भ्रमेण । पश्य ।

दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृणजटिलचलत्पांसुदण्डोऽन्तरिक्षे

गादकथम्=अवृहद्वाचम्, मन्दमन्दस्मितम्=ईषद्धसितम्, नियममुषितालक्तका-ग्राधरं=नियमेन व्रतेन मुषितम् त्यक्तम् अलक्तक लाक्षा येन अग्राधरेण तत् अग्रा-धरम्, ऊर्ध्वोष्ठम्, यस्मिन् तम् वा परम=अत्यन्तम्, असुलभम्=अप्राप्यम् नियमे स्थितत्वादिति भावः । वक्त्रेन्दुम्=मुखचन्द्रम्, पातुं, वाञ्छा, किन्न, अस्त्ये-वेति भावः । मन्दाक्रान्ता छन्दः । लक्षणमुक्तं ८ श्लोके ॥ १८ ॥

कलकलो बहुभिः कृतो महाध्वनिः ।

परिष्वज्य=गाढं सङ्गृह्य आलिङ्ग्येत्यर्थः ।

अन्वय—( हे ) भीरु, दिक्षु, व्यूढाङ्घ्रिपाङ्गः, अन्तरिक्षे, तृणजटिलचलत्पांसु-दण्डः, पथिषु, शर्करालः, झाङ्कारी, विटपिनाम्, स्कन्दकापैः, सधूमः, प्रासादानाम् निकुञ्जेषु, अभिनवजलोद्गारगम्भीरधीरः, चण्डारम्भः, समीरः, परिदिशम्, वहति । सम्भ्रमेण, किम् ॥ १९ ॥

आकस्मिकमहावायुप्रवहणेन भीतायाः भानुमत्याः धैर्यायाह—दिक्षु इति । हे भीरु, दिक्षु=दिशासु, व्यूढाङ्घ्रिपाङ्गः=विक्षिप्तवृक्षशाखादिः, वेगवद्वायुप्रव-हणात् प्रतिदिशम् वृक्षशाखपत्रादयो भ्राम्यन्तीत्यर्थः । अन्तरिक्षे=आकाशे, तृण-जटिलचलत्पांशुदण्डः=तृणेन जटिलः जटाकः चलन् पांशुदण्डः दण्डाकारः पांशुः

आप के मुख चन्द्र ही के पान की [ अर्थात् अधर-रस-पान की ] हो दुर्योधन की उत्कट इच्छा है उस के लिए और कौन पदार्थ है जो अलभ्य है ॥ १८ ॥

( नेपथ्य की ओर कलकल ध्वनि होती है और सब लोग सुन रहे हैं )

भानुमती—( डर जाती है और राजा का आलिङ्गन करती है ) रक्षा कीजिए आर्य, रक्षा कीजिए ।

राजा—(चारों तरफ देखकर) दयिते, व्याकुल होने की कोई आवश्यकता नहीं देखिए —

यह बड़े वेग के साथ वायु ( ववण्डर ) चल रहा है, यह वृक्षों के शाखा, टहनियों तथा पत्रपुष्पों को लेकर इधर उधर दिग्विदिशाओं में प्रक्षिप्त कर रहा है । यह आकाशपथ में

झाङ्कारी शर्करालः पथिषु विटपिनां स्कन्धकोषैः सधूमः ।
प्रसादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीर-
श्चण्डारम्भः समीरो वहति परिदिशं भीरु किं सम्भ्रमेण ॥१९॥

सखी—महाराअ, आरोहीअदु एदं दारुपव्वअप्पासादम् । उव्वेअकारी क्खु अअं उत्थिदपरुसरअकलुसीकिदणअणो उम्मूलिदतरुवरसद्दवित्तत्थमन्दुरापरिब्भट्ठवल्लहतुरङ्गमपज्जाउलीकिदजणपद्धई भीसणो समीरणो । ( महाराज, आरुह्यतामेतद्दारुपर्वतप्रासादम् । उद्वेगकारी खल्वयमुत्थितपरुषरजः कलुषीकृतनयन उन्मूलिततरुवरशब्दवित्रस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गम-

धूलिः, ( विङ्डो इति प्रसिद्धः ) । यस्मात् स , पथिषु = मार्गेषु, शर्करालः = शर्करा अश्मप्राया मृत् तद्वान् , झाङ्कारी = अव्यक्तशब्दकारी, विटपिनां स्कन्धकोषैः=वृक्षाणां प्रकाण्डकर्षणैः सधूमः = धूमयुक्तः प्रसादानां=हर्म्याणाम् , निकुञ्जेषु=अन्तःस्थानेषु, अभिनवजलदोद्गारगम्भीरधीरः = अभिनवः नूतनो यो जलदः ( मेघः ) तस्य य उद्गारः ( शब्दः ) तद्वद्गम्भीरोऽतएव धीरः, चण्डारम्भः=प्रचण्डोपक्रमः, समीरः= वायुः, पूर्वोक्तं सर्वमस्यैव विशेषणम् , परिदिशं=सर्वदिक्षु, वहति=वाति, स्वाभाविकमेव प्रवहणमतः किं सम्भ्रमेण=उद्वेगेन किम् , उद्वेगो न कार्य इति भावः । स्रग्धराछन्दः । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयमिति लक्षणात् ॥ १९ ॥

एतद् , दारुपर्वतप्रासादम् = क्रीडापर्वतस्थगृहम् । आरुह्यताम् = आलम्ब्यताम् , इत्यन्वयः । उत्थितपरुषरजःकलुषीकृतनयनः = उत्थितं यत्परुषं कठिनं रजः धूलिः तेन करणभूतेन कलुषीकृतं नयनं येन सः , उन्मूलिततरुवरशब्दवित्रस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गमपर्याकुलीकृतजनपद्धतिः =उन्मूलितः उत्पाटितो यस्तरुवरः तस्य शब्देन वित्रस्ता भीता या मन्दुरा वाजिशाला, ( यद्यपि मन्दुराया भयञ्च सम्भवति

तृणों के साथ धूल एकत्रित कर घुमाता हुआ लम्बे डण्डे के आकार बना रहता है। यह झर्झराता हुआ मार्गों में छोटी २ ककड़ियों को बिखेर रहा है। धनिकों के भवनों के पास की वाटिकाओं के वृक्षों की शाखाओं के परस्पर संघर्ष से निकली हुई अग्नि से जलने के कारण धूएँ के समान इसका वर्ण मालूम पड़ रहा है। इसके अतिरिक्त वर्षाकाल के प्रारम्भ काल के मेघों की घटाकी भांति यह गम्भीर गर्जन करता हुआ चला आ रहा है अयि भीरु! इसमें व्याकुल होने की क्या आवश्यकता है ? ॥ १९ ॥

**सखी**—महाराज ! आप इस दारु पर्वत के महल में चलें। यह भीषण झञ्झावात हृदय को विक्षुब्ध करता हुआ, उड़नेवाली ककड़ियों से भरी हुई धूलों को आंखों में झोंकता हुआ, चला आ रहा है। इसके झकोरे से उखड़ते, भरराते भहराते हुए वृक्षों की अरराहट

पर्याकुलीकृतजनपद्धतिर्भीषणः समीरण ।)

राजा—( सहर्षम् । ) उपकारि खल्विदं वात्याचक्रं सुयोधनस्य । यस्य प्रसादादयत्नपरित्यक्तनियमया देव्या सम्पादितोऽस्मन्मनोरथः। कथमिति।

न्यस्ता न भ्रुकुटिर्न वाष्पसलिलैराच्छादिते लोचने
नीतं नाननमन्यतः सशपथं नाहं स्पृशन्वारितः ।
तन्व्या लग्नपयोधरं भयवशादाबद्धमालिङ्गितं
भङ्क्तास्या नियमस्य भीषणमरुन्नायं वयस्यो नु मे ॥ २० ॥

---

न्याप्युपचारात्तत्रत्याश्वानां भयं युक्तम्) तस्याः परिभ्रष्टाः ये वल्लभतुरङ्गमाः श्रेष्ठाश्वाः तै. करणै पर्याकुलीकृता अत्यन्तं विदलिता जनपद्धतिः मनुष्यमार्ग. येन सः, भीषण' = भयावहः समीरण = वायु' ।

वात्याचक्रम् = वायुसमूह. । अयत्नपरित्यक्तनियमया = अनायासेन त्यक्तव्रतया।

अन्वय —तन्व्या, भयवशात्, भ्रुकुटि', न, न्यस्ता, वाष्पसलिलै', लोचने, न, आच्छादिते, अन्यत, आननम्, न, नीतम्, स्पृशन्, अहम्, सशपथम्, न, वारित., लग्नपयोधरम्, आलिङ्गितम्, आबद्धम्, (अतः) अस्याः, नियमस्य, भङ्क्ता, अयम्, भीषणमरुत्, न ( किन्तु ) मे, वयस्यः, नु ॥ २० ॥

कथ मनोरथः सम्पादित इत्याह—न्यस्तेति—तन्व्या = भानुमत्या, भयवशात्, भ्रुकुटि = भ्रुकुटिः, न, न्यस्ता = कृता, नियमस्थाया आलिङ्गने भ्रूभङ्गादिकरणं युक्तं तन्न कृतमिति भावः। वाष्पसलिलैः = अश्रुभि', लोचने = नेत्रे, न, आच्छादिते = व्यापिते द्विवचनान्तमेतत्। अन्यतः = अन्यत्र 'सार्वविभक्तिकस्तसिल्'। आननं = मुखम्, न, नीतम् = प्रापित, मुखपरिवर्त्तनं न कृतमिति भावः। स्पृशन् = अङ्गस्य

---

और महराहट के शब्द से डरे हुए अश्वशिशु ( बछेडे ) घुड़शाल से बन्धन तोडकर मार्गों पर इधर उधर भाग रहे हैं।

राजा—( प्रसन्नता के साथ ) यह झञ्झावात दुर्योधन के लिये महान् उपकारक बन गया है जिसकी अनुकम्पा से विना किसी परिश्रम के व्रतनियमों को छोड देवी मेरे अभिलषित मनोरथ को सफल बनाई हैं। किस प्रकार —

इन्हें भौंह तिरछी भी न करना पडा अथवा न तो अश्रुविन्दुओं से आँखों को भी भरना पड़ा; इन्हें मेरी ओर से मुख भी न मोडना पडा, स्पर्श करते समय शपथपूर्वक इन्हें मेरा निषेध भी नहीं करना पडा, स्वय भयवश होकर इस कोमलाङ्गी ने अपने स्तनों को दबाकर गाढ आलिङ्गन करना प्रारम्भ कर दिया। यह वायु इनके नियमों के उल्लघन का अपराधी भी न हुआ यह भीषण झञ्झावात नहीं हैं; किन्तु यह मेरा परम मित्र है ॥२०॥

तत्सम्पूर्णमनोरथस्य मे कामचारः सम्प्रति विहारेषु । तदितो दारु-पर्वतप्रासादमेव गच्छामः ।

( सर्वे वात्यावाधा रूपयन्त' परिक्रामन्ति । )

राजा—

कुरु घनोरु पदानि शनैः शनैरयि विमुञ्च गति परिपिवेनीम् ।
सुतनु बाहुलतोपनिबन्धनं मम निपीडय गाढमुरःस्थलम् ॥ २१ ॥

---

स्पर्शं कुर्वन्, अहम्, सशपथम्=यदि त्व मां स्पृशेस्तदा शपथस्तवेत्येवं, न, वारितः =निवारितः । लग्नपयोधरं=सम्मिलितस्तनम् यथा स्यात्तथा आलिङ्गितम्= आलिङ्गनम्, भावे क्तः । आवद्धम्=कृतम् अत इत्यध्याहारः । अस्याः=भानुमत्याः, नियमस्य=व्रतस्य, भङ्क्ता=भञ्जकः, अयम्, भीषणमरुत्=भयावहो वायुः, न किन्तु मे=मम, वयस्यः=मित्रम्, नु=उत्प्रेक्षे, एतादृशोपकारकरणान्मम मित्रमेवेत्यर्थः । अत्र वस्तुना समाधिरलङ्कारो व्यज्यते । उत्प्रेक्षाऽलङ्कारः । शार्दूलविक्रीडितं छन्दः ॥ २० ॥

सम्प्रति=अधुना, सम्पूर्णमनोरथस्य, मे, विहारेषु=क्रीडासु कामचारः=स्वेच्छाचार इत्यन्वयः ।

अन्वय.—( हे ) घनोरु, शनैः शनैः, पदानि, कुरु, अयि, परिवेपिनीम्, गतिम्, विमुञ्च, (हे) सुतनु, वाहुलतोपनिवन्धनम्, मम, गाढम्, उरःस्थलम्, निपीडय ॥

साम्प्रत नास्ति भयस्यावकाश इत्याह—कुर्विति—हे घनोरु=निबिडोरु, शनैः शनैः=मन्दं मन्दं, पदानि=चरणान्, कुरु=सम्पादय, अयि, परिवेपिनीम्=कम्पमानाम्, गतिं=गमनं, विमुञ्च=त्यज, हे सुन्दरि, वाहुलतोपनिवन्धनम्=वाहुः 'भुजः' लता इव वल्लीव तया उपनिवन्धनम् ( आवन्ध' ) तद्यथा स्यात् तथा, मम, गाढम्=अत्यन्तम् उरःस्थलम्=वक्षःस्थलम्, निपीडय=आलिङ्गय । अत्र बाहुलतेत्यत्र लुप्तोपमालङ्कारः । द्रुतविलम्बितं छन्दः । द्रुतविलम्बितमाह–नभौ भरौ, इति लक्षणात् ॥ २१ ॥

---

अब मेरी अभिलाषा पूर्ण हो गई, कामकला की क्रीडा में अब मैं स्वतन्त्र हो गया अत. मैं यहाँ से दारूपर्वतस्थ भवन की ही ओर चलता हू ।

( सब लोग आँधी के कष्ट के अनुभव का अभिनय करते हुए चल रहे हैं )

**राजा**—अयि, विशालजघने, धीरे २ आगे बढिये अर्थात् धीरे २ पैर रखिए, स्खलित गति से ( लडखडाती हुई ) न चलो । सुभगे ! अपनी भुजलताओं से पकडकर मेरे हृदय का गाढ आलिङ्गन कीजिए ॥ २१ ॥

(प्रवेशं रूपयित्वा।) प्रिये, अलब्धावकाशः समीरणासारः स्तिमितत्वाद्गर्भगृहस्य। विस्रब्धमुन्मीलय चक्षुरुन्मृष्टरेणुनिकरम्।

भानुमती—(सहर्षम्।) दिट्ठिआ उह दाव उप्पादसमीरणो ण बाधेइ। (दिष्टयेह तावदुत्पातसमीरणो न बाधते।)

सखी—आरोहणसम्भमणिस्सहं पिअसहीए ऊरुजुअलम्। ता कीस दाणीं महाराओ आसणवेदीं ण भूसेदि। (आरोहणसम्भ्रमनिःसहं प्रियसख्या ऊरुयुगलम्। तत्कस्मादिदानीं महाराज आसनवेदीं न भूषयति।

राजा—(देवीमवलोक्य।) भवति, अनल्पमेवापकृतं वात्यासम्भ्रमेण। तथाहि—

समीरणः=वायुः, अलब्धावकाशः=अप्राप्तावस्थितिः प्रवेशायोग्य इत्यर्थः, गर्भगृहस्य = मध्यवेश्मनः, स्तिमितत्वात् = आवरणात्, उन्मृष्टरेणुनिकरम्= उन्मृष्ट' पृथक्कृतः रेणुनिकरः (रजःसमूह) यस्मात् तत्, चक्षुः=नेत्रम्, विस्रब्धम् =यथेच्छम्, उन्मीलय=उन्मीलितं कुरु, प्रस्फुटित कुर्वित्यर्थः।

दिष्टयेति-दिष्टयाशब्द आनन्दे 'दिष्टया समुपजोष चेत्यानन्दे' इत्यमरः। आनन्दोऽयमित्यर्थः। उत्पातसमीरणः=अनिष्टसूचकवायुः। अथवा महावायुः।

आरोहणसम्भ्रमनिःसहम्=आरोहणः वेगस्यासहनमशीलम् ऊरुयुगलम्= सक्थिद्वयम् 'सक्थि क्लीबे पुमानूरु'रित्यमरः। प्रियसख्याः=भानुमत्याः। आसनवेदीम्=उपवेशनस्थानम्, न, भूषयति=अलङ्करोति। कथ नासन उपविशतीत्यर्थः।

भवति=भानुमति, अनल्पम्=अधिकम्, एव, अपकृतम्=अपकारः कृतः, वात्यासम्भ्रमेण=वायुसमूहवेगेन।

(प्रवेश का अभिनय करते हुए) वल्लभे! इस भवन के चारों ओर से घिरे रहने के कारण यहाँ झञ्झावात का सञ्चार सम्भव नहीं। अत निश्शङ्क धूल पोंछकर आँखें खोलिए।

**भानुमती**—बड़ी प्रसन्नता है कि यहाँ आँधी का वश नहीं चल रहा है।

**सखी**—प्रियसखी के उरुद्वय चढाई के कष्ट से आगे बढने में असमर्थ हैं। फिर क्यों नहीं महाराज इस समय किसी चबूतरे को अलङ्कृत करते हैं?

**राजा**—(देवी को देखकर) श्री मति, इस वायुवेग ने महान् अपकार किया है। देखिए:—

रेणुर्बाधां विधत्ते तनुरपि महतीं नेत्रयोरायतत्वा-
दुत्कम्पोऽल्पोऽपि पीनस्तनभरितमुरः क्षिप्तहारं दुनोति ।
ऊर्वोर्मन्देऽपि याते पृथुजघनभराद्वेपथुर्वर्धतेऽस्या
वात्या खेदं मृगाक्ष्याः सुचिरमवयवैर्दत्तहस्ता करोति ॥ २२ ॥

( सर्वे उपविशन्ति । )

राजा—तत्किमित्यनास्तीर्णं कठिनशिलातलमध्यास्ते देवी ।

अन्वय—नेत्रयोः, आयतत्वात्, तनुः, अपि, रेणुः, महतीम्, बाधाम्, विधत्ते, अल्पः, अपि, उत्कम्पः, पीनस्तनभरितम्, क्षिप्तहारम्, उरः, दुनोति, ऊर्वोः, मन्दे, अपि, याते, सति, पृथुजघनभरात्, वेपथुः, वर्धते, ( अत ) मृगाक्ष्याः, अस्याः, सुचिरम्, अवयवैः, दत्तहस्ता, वात्या, खेदम्, सुचिरम्, करोति ॥ २२ ॥

अधिकापकारमेवाह—रेणुर्बाधामिति । नेत्रयो = नयनयोः, आयतत्वात् = दैर्घ्यात्, तनुः = अल्पः, अपि, रेणु = धूलिः, महतीम् = अधिकाम्, बाधाम् = दुःखम्, विधत्ते = करोति, अल्पः = ईषत्, अपि, उत्कम्पः = कम्पनम्, पीनस्तनभरितम् = स्थूलकुचभाराक्रान्तम्, क्षिप्तहारम् = क्षिप्त हारम् यत्र तत्, उरः = वक्षः, दुनोति पीडयति, ऊर्वोः = सक्थ्नो, मन्दे = अल्पे, अपि याते = गमने सति, भावे क्तप्रत्ययः । पृथुजघनभरात् = विपुलस्त्रीश्रोणिपुरोभागस्य भारात्, 'जघनं स्यात् स्त्रियाः श्रोणिपुरोभागे कटावपि, इति मेदिनी । वेपथु = कम्पनम्, वर्धते, अत इति अध्याहारः । मृगाक्ष्याः = हरिणनेत्रायाः, अस्या = भानुमत्या, सुचिरम् = बहुकालम्, अवयवैः = अङ्गैः, दत्तहस्ता = कृतसहाय्या, वात्या = वायुसमूहः, खेदम् = दुःखम्, करोति सम्पादयति । अवयवानां सहाय्येन वायुः अधिक परितापयतीत्यर्थः । अत्र चतुर्थपादार्थे पादत्रयवाक्यार्था हेतव इति वाक्यार्थगतकाव्यलिङ्गमलङ्कारः । स्रग्धरा छन्दः ॥

अनास्तीर्णम् = वस्त्रेण अनाच्छन्नम् । अध्यास्ते = उपविशति, किमिति प्रश्ने ।

थोडी भी धूल नेत्रों की विशालता के कारण महान् दुःख दे रही है । थोडा भी कम्प पीवर पयोधरों ( स्तन ) के भार से दवे हुए हृदयप्रदेश को, जिसपर से हार पृथक् कर दिया गया है, कष्ट दे रहा है । थोडा भी गमन करने पर स्थूलजघनों के भार से इनके जाँघों में प्रकम्प वढ रहा है । झञ्झावत इन्हीं हरिणाक्षी के अङ्गों से सहायता प्राप्तकर के अधिक समय तक खिन्न कर रहा है ॥ २२ ॥

( सब बैठ जाते हैं )

**राजा**—तो क्यों, श्रीमती विना आसन के इस कठोर पत्थर की चट्टान पर बैठी हुई हैं ? क्योंकि—

लोलांशुकस्य पवनाकुलितांशुकान्तं
त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।
अध्यासितु तव चिरं जघनस्थलस्य
पर्याप्तमेव करभोरु ममोरुयुग्मम् ॥ २३ ॥

( प्रविश्य पटाक्षेपेण सम्भ्रान्तः । )

कञ्चुकी—देव, भग्नं भग्नम् ।

( सर्वे साकूतं पश्यन्ति । )

राजा—केन ।

---

अन्वय ( हे ) करभोरु, तव, लोलांशुकस्य, मम, लोचनबान्धवस्य, जघनबान्धवस्य, अध्यासितुम् , ( मम ), पवनाकुलितांशुकान्तम् , त्वद्दृष्टिहारि, ऊरुयुग्मम् , चिरम् , पर्य्याप्तम् , एव ॥ २३ ॥

ममोरुयुगलमेव तवासनमित्याह—लोलांशुकस्येति । करभोरु = करभ इव ऊरू यस्याः सा, तत्सम्बोधने, 'करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते' इति मेदिनी । तव, लोलांशुकस्य = चञ्चलवस्त्रस्य, मम = दुर्योधनस्य, लोचनबान्धवस्य = नेत्रबन्धोः, ममेत्यस्य लोचनेऽन्वयः, अत्रैकदेशान्वयोऽपि साधुरेव अभेदान्वयस्थल एवासाधुत्वस्य प्रतिपादनात् । जघनस्थलस्य, अध्यासितुम्—आश्रयितुम् , मम, पवनाकुलितांशुकान्तं = पवनेन वायुना आकुलितम् अंशुकान्तम् वस्त्रान्तम् यस्मिन् तत् , त्वद्दृष्टिहारि = तव नेत्रहरणशीलम् , ऊरुयुग्मम् चिरम् = चिराय, पर्याप्तं = समर्थम् , एवेत्यवधारणे। अत्र योग्ययो सघटनावशात् समालङ्कारः। वसन्ततिलका छन्दः॥२३॥

सम्भ्रान्तः = उद्विग्नः ।

भग्न भग्नमिति-यद्यपीदं रथकेतनान्वयित्वेन विवक्षितं तथापि पूर्वप्रकृतस्य जघनस्यान्वयसम्भवात् भाविनो भीमकृतदुर्योधनजघनभङ्गस्य छलेन सूचनम् ।

---

हे करभोरु, आप के जघनस्थलों पर से वस्त्र हवा के झकोरे से उट रहा है । यह मेरे नेत्रों के लिए परम आनन्दप्रद है इनके चिरकाल तक विश्राम पाने के लिये मेरे जघनस्थल, जो तुम्हारे नेत्रों के लिए आकर्षक तथा वायु के झोंकेसे वस्त्ररहित हो रहे हैं, पर्य्याप्त हैं ॥२३॥

( व्याकुल कञ्चुकी का परदा हटाकर प्रवेश )

कञ्चुकी—महाराज, टूट गया ! टूट गया !'

( सब आश्चर्य चकित होकर देख रहे हैं )

राजा—किसके द्वारा ?

कञ्चुकी—भीमेन ।

राजा—कस्य ।

कञ्चुकी—भवतः ।

राजा—आः, किं प्रलपसि ।

भानुमती—अज्ज, किं अणिट्ठं मन्तेसि । ( आर्य, किमनिष्टं मन्त्रयसे । )

राजा—धिक्प्रलापिन्, वृद्धापसद, कोऽयमद्य ते व्यामोहः ।

कञ्चुकी—देव, न खलु कश्चिद्व्यामोहः । सत्यमेव ब्रवीमि ।

भग्नं भीमेन भवतो मरुता रथकेतनम् ।
पतितं किङ्किणीक्वाणबद्धाक्रन्दमिव क्षितौ ॥ २४ ॥

---

आः इति खेदे, किं प्रलपसि = किमनर्थकं ब्रवीषि ।

आर्य = कञ्चुकिन् । अनिष्टम् = अशुभकारकम्, मन्त्रयसे = चिन्तयसि ।

अन्वय —भीमेन, मरुता, भवतः, रथकेतनम्, भग्नम्, क्षितौ, किङ्किणीक्वाणबद्धाक्रन्दम्, इव, पतितम् ॥ २४ ॥

किं भग्नमित्याह—भग्नं भीमेनेति । भीमेन = भयावहेन पक्षे भीमसेनेन, मरुता = वायुना पक्षे मरुद्रूपेण, मरुद्रूपत्वञ्च भीमसेनस्य आत्मा वै जायते पुत्र इति न्यायात् । भवतः = तव, रथकेतनम् = स्यन्दनध्वजम्, भग्न = छिन्नम्, क्षितौ = भूमौ, किङ्किणीक्वाणबद्धाक्रन्दमिव=किङ्किणी क्षुद्रघण्टिका तस्याः क्वाणेन करणभूतेन, आबद्धः कृतः आक्रन्दः येन तद्वत् पतितम् = अधः आगतम् । अनेन भीमसेनकर्तृकदुर्योधनोरुभङ्गो भावीति सूचितम् । पथ्यावक्त्रं छन्दः ॥ २४ ॥

---

कञ्चुकी—महाराज, भीम के द्वारा ।

राजा—किसका ?

कञ्चुकी—आप का ।

राजा—अरे ! क्या बक बक कर रहे हो ?

भानुमती—आर्य, क्या अनर्थ मुख से निकाल रहे हैं ?

राजा—व्यर्थ बकवादी, नीच बुड्ढा, यह आज तुम्हें क्या हो गया है ?

कञ्चुकी—महाराज, मुझे कुछ नहीं हुआ है । मैं सत्य ही भाषण कर रहा हूं ।

भयङ्कर वायु के द्वारा आप के रथ की ध्वजा टूटकर घुँघुरुओं की झनकार रूप में रोदन करती हुई वसुन्धरा ( भूमि ) पर शयन कर रही है ॥ २४ ॥

राजा—यद्यत्ससमीरणवेगात्कम्पिते भुवने भग्नः स्यन्दनके तत्किमित्युद्धत प्रलपसि भग्नं भग्नमिति।

कञ्चुकी—देव, न किञ्चित्। किन्तु शमनार्थमस्यानिमित्तस्य पयितव्यो देव इति स्वामिभक्तिर्मां मुखरयति।

भानुमती—अज्जउत्त, अन्तरीअदु एदं पसण्णबह्मणवेअघो (आर्यपुत्र, अन्तर्यतामेतत्प्रसन्नब्राह्मणवेदघोषेण।)

राजा—(सावज्ञम्।) ननु गच्छ। पुरोहितसुमित्राय निवेदय।

कञ्चुकी—यदाज्ञापयति देवः। (इति निष्क्रान्तः।)

(प्रविश्य।)

प्रतीहारी—(सोद्वेगमुपसृत्य।) जअदि जअदि महाराओ। मह

---

बलवत्समीरणवेगात् = ऊर्जितवायुप्रवाहात्, कम्पिते, भुवने = जगति, भग्नः = छिन्नः, स्यन्दनकेतुः = रथध्वजम्, तत्, किमिति = कस्माद्धेतोः, उद्ध उत्कटम्, इदं प्रलापक्रियाविशेषणम् भग्नं भग्नमिति प्रलपसीत्यन्वयः।

अस्य = केतनभङ्गरूपस्य, अनिमित्तस्य = अनिष्टसूचकस्य, शमनार्थं = शान्त देवः = भवान्, विज्ञापयितव्यः = बोधयितव्य इति हेतोः माम्, स्वामिभक्तिः, रयति = वाचालं करोतीत्यन्वयः।

अन्तर्यताम् = व्यवहितं क्रियताम् विनाश्यतामित्यर्थः। सुमित्रेति—इ नामा याजकः।

उपसृत्य = समीपं गत्वा। सेवकस्य महाराजजयकरणं सम्प्रदायः। सिन

---

राजा—यदि भीषण वायु के वेग से समस्त विश्व प्रकम्पित हो उठा तो रथ की किस गणना में है? फिर क्या अनाप् शनाप् 'टूट गया, टूट गया' कर रहे हो?

कञ्चुकी—नहीं महाराज, कुछ नहीं किन्तु 'इस अपशकुन की शान्ति के लिए म को सूचित करना ही चाहिए' इस प्रकार की स्वामिभक्ति मुझे बाध्य कर रही है।

भानुमती—महाराज! इस अमङ्गल की शान्ति सन्तुष्ट ब्राह्मणों की वेदध्वनि हवनादि क्रिया द्वारा कीजिए।

राजा—अजी, जा पुरोधा सुमित्र को सूचना दे आ।

कञ्चुकी—अच्छा महाराज की जो आज्ञा।

(चला जाता है)

प्रतिहारी—[अन्तःपुर की द्वारपालिका] (प्रवेशकर घबड़ाई हुई समीप में ज

महादेवी क्खु एसा सिन्धुराअमादा दुस्सला अ पडिहारभूमीए चिट्ठदि ।
( जयति जयति महाराज । महाराज, महादेवी खल्वेषा सिन्धुराजमाता दुःशला च प्रतीहारभूमौ तिष्ठति । )

राजा—( किंचिद्विचिन्त्यात्मगतम् । ) किं जयद्रथमाता दुःशला चेति । कच्चिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्न किञ्चिदत्याहितमाचेष्टितं भवेत् । ( प्रकाशम् । ) गच्छ । प्रवेशय शीघ्रम् ।

प्रतीहारी—जं देवो आणवेदि । (यद्देव आज्ञापयति ।) ( इति निष्क्रान्ता । )

( ततः प्रविशति सम्भ्रान्ता जयद्रथमाता दुःशला च । )

( उभे सास्रं दुर्योधनस्य पादयोः पततः । )

माता—परित्ताअदु परित्ताअदु कुमालो। (परित्रायतां परित्रायतां कुमार ।)

( दुःशला रोदिति । )

राजा—( ससम्भ्रममुत्थाप्य । ) अम्ब, समाश्वसिहि समाश्वसिहि ।

---

माता = सिन्धुराजस्य जयद्रथस्य माता जननी । दुःशला = दुर्योधनस्य स्वसा जयद्रथस्य पत्नी । प्रतीहारभूमौ = द्वारे ।

अभिमन्युवधामर्षितैः=अभिमन्युघातेन क्रुद्धैः, पाण्डुपुत्रैः=पाण्डवैः, किञ्चिद्, अत्याहितम्=अनर्थं । आचेष्टितं=कृतम्, भवेत्, न कच्चिदित्यन्वयः कच्चिच्छब्दः कामप्रवेदने।

सम्भ्रान्ता = उद्विग्ना ।

सास्रम् = अश्रुणा सहितम्, वाष्पपरिपूरितनेत्रमित्यर्थः ।

अर्जुनकृतप्रतिज्ञाभयाद्भीते उभे आहतुः = परित्रायतामिति ।

ससम्भ्रमम् = सोद्वेगम् । समाश्वसिहि = समाश्वसनं कुरु । किमत्याहितम् = का

---

विजय, विजय, महाराज की । यह दामाद जयद्रथ की माता और आप की भगिनी दुश्शला द्वारप्रवेश ( फाटक ) पर खडी हैं ।

राजा—( कुछ विचार कर मन ही मन ) क्या ! जयद्रथ की माता और दुश्शला ! अभिमन्यु के वध से क्रुद्ध होकर पाण्डवों ने कोई अनिष्ट करना तो नहीं सोचा है ( प्रगट ) जाओ, शीघ्र ही बुला लाओ ।

प्रतिहारी—अच्छा, महाराज की आज्ञा शिरोधार्य । ( चली जाती है )

(इसके अनन्तर जयद्रथ की माता और पत्नी दुश्शला व्याकुलाहट के साथ प्रवेश करती हैं) ।

( दोनों डब डबाये हुए नेत्रों से दुर्योधन के चरणों पर गिर पड़ती हैं ) ।

माता—रक्षा कीजिए, रक्षा कीजिए कौरवनरेश,

दुश्शला—( रोती है )

राजा—( व्याकुलाहट के साथ उठा कर ) माता, धैर्य धारण करें, धैर्य धारण करें, कोई

किमत्याहितम् । अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य ।

माता—जाद, कुदो कुसलम् । ( जात, कुत कुशलम् । )

राजा—कथमिव ।

माता—( सास्रम् । ) अज्ज क्खु पुत्तवहामरिसिदेण गण्डीविणा अणत्थमिदे दिवहणाहे तस्स वहो पडिण्णादो । ( अद्य खलु पुत्रवधामर्षितेन गाण्डीविनानस्तमिते दिवसनाथे तस्य वध प्रतिज्ञात । )

राजा—( सस्मितम । ) इदं तदश्रुकारणमम्बाया दुःशलायाश्च । पुत्रशोकादुत्तप्तस्य किरीटिन' प्रलपितैरेवमवस्था । अहो मुग्धत्वमबलानां नाम । अम्ब, कृतं विषादेन । वत्से दुःशले, अलमश्रुपातेन । कुतश्चाय तस्य धनञ्जयस्य प्रभावो दुर्योधनबाहुपरिघरक्षितस्य महारथजयद्रथस्य विपत्ति-

भीतिः । समराङ्गणेषु = सङ्ग्रामभूमिषु, अप्रतिरथस्य=अविद्यमानप्रतिपक्षस्यन्दनस्य, जयद्रथस्य = सिन्धुराजस्य, कुशलम् , अपि = किम् , अपिशब्दः प्रश्ने ।

जातेति—पुत्रस्य पुत्रसदृशस्य च सम्बोधनार्थं जात इति प्रयुज्यते ।

पुत्रवधामर्षितेन = सुतवधक्रुद्धेन, गाण्डिविना = अर्जुनेन, अनस्तमिते = अस्तमप्राप्ते, दिवसनाथे = सूर्ये, तस्य=जयद्रथस्य, वध., प्रतिज्ञातः ।

सस्मितम् = ईषद्धासेन सहितम् , अम्बायाः = जयद्रथमातु', दुःशलाया. = स्वस्वसुः, च, अस्रकारणम् = अश्रुहेतुः, 'रोदनं चास्रमश्रु च' त्यमरः । इद तत । पुत्रशोकात् , उत्तप्तस्य = दु खितस्य, किरीटिनः = अर्जुनस्य, प्रलपितैः = प्रलापै', भावे क्तप्रत्यय' । एवम् , अवस्था । अबलानाम = स्त्रीणाम् , मुग्धत्वम् = मोह', अहो इति विस्मये । अश्रुपातेन = रोदनेन, अलम् = व्यर्थम् , 'वासरूपन्यायेन' क्त्वाऽभावपक्षे अलंयोगे सत्यपि ल्युट् प्रत्यय. । दुर्योधनबाहुपरिघरक्षितस्य = दुर्योधनस्य बाहुः

विघ्न तो नहीं, रणस्थली के बीच अद्वितीय वीर जयद्रथ का कुशल तो है ?

**माता**—वत्स, कुशल कहाँ ?

**राजा**—किस प्रकार ?

**माता**—आज पुत्रवध से क्रुद्ध होकर गाण्डीवधारी अर्जुन ने सूर्यास्त से पहले उस के वध की प्रतिज्ञा की है ।

**राजा**—( मुसकान के साथ मन ही मन ) यही माता और दुश्शला के अश्रुपात का कारण है । पुत्र शोक से विह्वल अर्जुन के प्रलापों से यह अवस्था है स्त्रियाँ कैसी भोली भाली होती हैं ! ( प्रकट ) माता, शोक करने की कोई आवश्यकता नहीं चिरञ्जीविनि दुश्शले ! पर्य्याप्त अश्रुपात हो चुका । इस अर्जुन में कहाँ सामर्थ्य है कि वह दुर्योधन की

मुत्पादयितुम् ।

माता—जाद, जाद, दे हि पुत्तबन्धुवहामरिसुद्दीविदकोवाणला अणपेक्खिदसरीरा वीरा परिक्कामन्ति । ( जात, जात, ते हि पुत्रबन्धुवधामर्षोद्दीपितकोपानला अनपेक्षितशरीरा वीराः परिक्रामन्ति । )

राजा—( सोपहासम् ) एवमेतत् । सर्वजनप्रसिद्धैवामर्षिता पाण्डवानाम् । पश्य ।

हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
पाञ्चाली मम राजचक्रपुरतो गौर्गौरिति व्याहृता ।

---

परिघ इव तेन रक्षितस्य पालितस्य, महारथस्य—

एको दशसहस्राणि यो योधयति धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः ॥

इति लक्षणलक्षितस्य, एतेन जयद्रथस्य अपराभव सूचितः ।

पाण्डवानाम् , सर्वजनप्रसिद्धा = अखिललोकवेद्या, एव अमर्षिता = क्रोधः ।

अन्वय —मम, आज्ञया, दुःशासनेन, हस्ताकृष्टविलोलकेशवसना, पाञ्चाली, राजचक्रसमितौ, गौर्गौः, इति, व्याहृता, तस्मिन्, एव, सः, गाण्डिवधरः पृथानन्दनः, किम् , नु, न, आसीत् , तत् , क्षत्रियवंशजस्य, कृतिनः, यूनः, क्रोधास्पदम् , किम् , न ॥ २५ ॥

क्रोधे सत्यपि पाण्डवानां कार्यकरणाभावमाह—हस्ताकृष्टविलोलेति । मम = दुर्योधनस्य, आज्ञया, दुःशासनेन = मदीयानुजेन, हस्ताकृष्टविलोलकेशवसना = हस्तेन करणभूतेन आकृष्टे विलोलः चञ्चलः केशः वसनं वस्त्रं च यस्याः सा, पाञ्चाली = पञ्चालराजतनया, राजचक्रसमितौ = राजसमूहसभायाम् एतेन राज्ञां सविधे न तु एकान्ते इति सूचितम् । गौर्गौः इति, व्याहृता=व्याहारिता, वाचितेत्यर्थः । राजसभागतानां राजपत्नीनाम् , गौर्गौः, इति कथनम् अत्यन्तापमानसूचकं भवति, इति

---

मुद्गराकार भुजा से रक्षित महारथी जयद्रथ को विपत्ति में डाल सके ।

माता—वत्स, क्योंकि कुटुम्बियों के वध से क्रुद्ध होकर पाण्डववीर अपने प्राणों की अपेक्षा न करके पराक्रम करते हैं ।

राजा—( उपहास करते हुए ) ठीक है पाण्डवों की असहिष्णुता को सभी लोग जानते हैं । देखिए —

मेरी आज्ञा से दुश्शासन के हाथों से केश और वस्त्रों के खींचे जानेपर द्रौपदी माण्डलिक राजाओं से पूर्णसभा में अपने को गाय कहकर चिल्लाई । अर्थात् 'मैं गाय हूं , मेरी

तस्मिन्नेव स किं नु गाण्डिवधरो नासीत्पृथानन्दनो
यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ॥ २५ ॥

माता—असमत्तपडिण्णाभारस्स अप्पवहो से पडिण्णादो। (असमाप्तप्रतिज्ञाभारेणात्मवधस्तेन प्रतिज्ञातः।)

राजा—यद्येवमलमानन्दस्थानेऽपि ते विषादेन। ननु वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति। अन्यच्च मातः, का शक्तिरस्ति धनञ्जयस्याऽन्यस्य वा कुरुशतपरिवारवर्धितमहिम्नः कृपकर्णद्रोणाश्वत्थामादिमहारथपराक्रम-

---

रक्षमदाय। सह गोत्रदर्शी अतः त्वया अवध्याऽहमित्यभिप्रायः, तस्मिन्नेव = व्याहरणसमय एव, सः=प्रसिद्धः, गाण्डिवधरः = धनुर्धारी. पृथानन्दनः=अर्जुनः, किन्तु, न, आसीत् किन्तु आसीदेवेत्यर्थः। तत् = व्याहरणम्, क्षत्रियवंशजस्य=राजन्यकुलोत्पन्नस्य, कृतिनः = प्रवीणस्य, यूनः = युवावस्थापन्नस्य, एतेन तत्र अतीवक्रोधः कर्तव्य इति सूचितम्। क्रोधास्पदं=कोपस्थानम्, किं न, क्रोधास्पदमेवेत्यर्थः। तस्मिन् काले कोपाभावे साम्प्रतं कोपाभाव एव युक्त इत्यभिप्रायः। शार्दूलविक्रीडित छन्दः॥ २८॥

असमाप्तप्रतिज्ञाभारेण = असमाप्तः प्रतिज्ञाभारः येन तेन अनस्तमिते सूर्ये जयद्रथस्य वधाभावे इत्यर्थः। आत्मवधः = निजमरणम्, प्रतिज्ञातः।

यदि, एवं=जयद्रथावधे स्ववधप्रतिज्ञायां सत्याम्, आनन्दस्थानेऽपि विषादेन= दुःखेन, अलम् = व्यर्थम्, ते = तव। अत्र हर्ष एव कर्त्तव्य इत्यर्थः। सानुजो, युधिष्ठिरः, उत्सन्नः = मृतः, इति, ननु = निश्चयेन, वक्तव्यमित्यन्वयः। अर्जुनवधे युधिष्ठि-

---

रक्षा कीजिए' इस प्रकार से करुणपुकार लगाई। उस क्षण क्या वह गाण्डीवधारी पृथापुत्र (अर्जुन) वहाँ उपस्थित नहीं थे? सर्वशक्तिसम्पन्न प्रौढावस्था को प्राप्त क्षत्रियकुमार के लिए वह दशा रोषास्पद नहीं थी क्या? ॥ २५ ॥

माता—प्रतिज्ञा पूर्ण करने में असमर्थ होने पर उन्होंने (अर्जुन ने) अपने ही वध की प्रतिज्ञा की है।

राजा—यदि यह बात है तो प्रसन्नता के अवसर में भी आपका सन्ताप करना व्यर्थ है। किन्तु अब तो यह स्पष्ट कहना चाहिए—'युधिष्ठिर भाइयों के साथ विनष्ट हो गये'। अम्ब, इसके अतिरिक्त अर्जुन अथवा किसी दूसरे का क्या सामर्थ्य है कि वे सौ भाई कौरवों के साथ साथ रहने के कारण अधिक पराक्रमशाली तथा कृपाचार्य, द्रोणाचार्य और अश्वत्थामा इत्यादि महारथियों के पराक्रम से द्विगुणित बलशाली आप के पुत्र जयद्रथ का केवल नाम ले सके अर्थात् मेरे सौ भाइयों के रहते हुए तथा कृप, द्रोण, और अश्वत्थामा जैसे वीरों

द्विगुणीकृतनिरावरणविक्रमस्य नामाऽपि ग्रहीतु ते तनयस्य। अयि सुत-पराक्रमानभिज्ञे।

धर्मात्मजं प्रति यमौ च कथैव नास्ति
मध्ये वृकोदरकिरीटभृतोर्बलेन।
एकोऽपि विस्फुरितमण्डलचापचक्रं
कः सिन्धुराजमभिषेणयितुं समर्थः॥ २६॥

भानुमती—अज्जउत्त, जइवि एव्वं तहवि गुरुकिदपडिण्णाभारो ट्ठाणं क्खु सङ्काए। (आर्यपुत्र, यद्यप्येवं तथापि गुरुकृतप्रतिज्ञाभार' स्थानं खलु शङ्काया।)

---

रोऽपि जीवितु न शक्नोति तथाच भीमादयोऽपीति भावः। निरावरणः= निर्गतमावरण यस्मात्सः, अप्रतिहत इत्यर्थः।

अन्वय — धर्मात्मजम्, यमौ, च, प्रति, कथा, एव, न अस्ति, वृकोदरकिरीटभृतोः, मध्ये, एक., अपि, कः बलेन, विस्फुरितमण्डलचापचक्रम्, सिन्धुराजम्, अभिषेणयितुम्, समर्थ॥ २६॥

सुतपराक्रममेवाह—धर्मात्मजमिति। धर्मात्मज=युधिष्ठिरम्, यमौ=यमलजातौ, नकुलसहदेवावित्यर्थः, च प्रति कथा=कथनम् एव, नास्ति, एते जयद्रथस्य न किमपि कर्तुं शक्नुवन्तीति भावः। वृकोदरकिरीटभृतो.= भीमार्जुनयोः, मध्ये, एकोऽपि कः, बलेन= ऊर्जितेन, विस्फुरितमण्डलचापचक्रम्= विस्फुरितं कृतं मण्डलं मण्डलाकारं चापचक्र धनुश्चक्र येन तम्, सिन्धुराजम्= जयद्रथम्, अभिषेणयितुं= सेनयाऽभियातुम् अभिमुख योधयितुमित्यर्थः। समर्थ., न कोऽपीत्यर्थः। एतेन जयद्रथस्य पाण्डवेभ्यो बलवत्त्वं सूचितमिति भावः। वसन्ततिलका छन्दः॥ २६॥

यद्यपि, एवम्= पाण्डवेभ्यः जयद्रथो बलवान्, तथापि गुरुकृतप्रतिज्ञाभारः=

---

से और अधिक पराक्रमी जयद्रथ का नाम तक कोई नहीं उच्चारण कर सकता उससे संग्राम करना तो दूर रहा। अयि तूँ अपने पुत्र के बल पौरुष से अपरिचित!

युधिष्ठिर तथा माद्रीपुत्र [ नकुल और सहदेव ] के विषय में कोई बात ही नहीं अर्थात् वे लोग युद्ध कला जानते ही नहीं। भीम और किरीटी [ अर्जुन ] के बीच में कौन ऐसा है जो अत्यन्त शीघ्र गति से सञ्चालन करते हुए धनुष को चक्राकार बनाने वाले सिन्धुराज जयद्रथ के साथ संग्राम में ठहर सकता है अर्थात् पाण्डवों में कोई भी ऐसा वीर नहीं है जो जयद्रथ के सन्मुख युद्ध करे॥ २६॥

भानुमती—आर्यपुत्र, यह सत्य है तथापि अर्जुन ने भीषणप्रतिज्ञा किया है—यही शंका का कारण है।

माता—जाद साहु, कालोइदं भणिअं भाणुमदीए। (जात, साधु, कालोचितं भणितं भानुमत्या।)

राजा—आः ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः। पश्य—

कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः
श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः।
रेणुग्रस्तार्कभासां प्रचलदसिलतादन्तुराणां बलाना-
माक्रान्ता भ्रातृभिर्मे दिशि दिशिसमरे कोटयः सम्पतन्ति॥२७॥

महता कृत प्रतिज्ञाभरः, शङ्कायाः=सन्देहस्य, स्थानम्=आस्पदम्। खलु इति वाक्यालङ्कारे।

कालोचितम्=समयस्यानुरूपम्।

अन्वय—कोदण्डज्याकिणाङ्कैः, अगणितरिपुभिः, कङ्कटोन्मुक्तदेहैः, श्लिष्टान्योन्यातपत्रैः, सितकमलवनभ्रान्तिम्, उत्पादयद्भिः, मे, भ्रातृभिः, रेणुग्रस्तार्कभासाम्, प्रचलदसिलतादन्तुराणाम्, बलानाम्, कोटयः, आक्रान्ताः, दिशि दिशि, समरे, सम्पतन्ति॥ २७॥

कोदण्डज्याकिणाङ्कैः=कोदण्डस्य धनुषः ज्यायाः किणः व्रणजः अङ्कः चिह्नं येषां तैः, अगणितरिपुभिः—अवहेलितशत्रुभिः, कङ्कटोन्मुक्तदेहैः=कङ्कटेन कवचेन उन्मुक्तः त्यक्तः देहो येषां तैः, कवचाधारिभिरित्यर्थः एतेन अधिकवलवत्त्व सूचितम्। श्लिष्टान्योन्यातपत्रैः=मिलितपरस्परच्छत्रैः 'छत्र त्वातपत्रमि'त्यमरः। सितकमलवनभ्रान्तिम्=श्वेतपद्मवनस्य भ्रमम्, उत्पादयद्भिः=जनयद्भिः, कमलवनस्य भ्रमो जात इत्युत्प्रेक्ष्यते कविनेति भावः। मे=मम, भ्रातृभिः=अनुजैः, रेणुग्रस्तार्कभासाम्=रेणुभिः ग्रस्ता अर्कभा यैः तेषाम्, प्रचलदसिलतादन्तुराणाम्=प्रचलन्ती गच्छन्ती या असिलता लता इव खड्गः तया दन्तुराणाम् निम्नोन्नतानाम्, बलानाम्=सेनानाम्, कोटयः=सख्याविशेषाः, आक्रान्ताः=व्याप्ताः दिशि दिशि=

माता—पुत्र, भानुमती ने अच्छा और समयोचित उपदेश दिया है।

राजा—अरे, क्या मुझ दुर्योधन के लिये पाण्डवों से आशङ्का? देखिये.—

धनुष की प्रत्यञ्चा के सघर्ष के चिह्न से युक्त, शत्रुओं को तुच्छ समझकर अपने २ शरीर पर से कवच को दूर हटा कर फेंक देने वाले तथा अपने २ श्वेतच्छत्रों के परस्पर सम्पर्क के कारण श्वेत कमल के वन की आशङ्का उत्पन्न कराते हुए मेरे भाइयों से युक्त सेनाऐं, जिस की धूलि से सूर्य की किरणें आच्छन्न हो जाती हैं तथा खड्गरूपी लताओं के नीचे ऊपर जाने से औन्नत्य में विषमता प्राप्त कर लेती हैं, रणस्थल में करोडों की सख्या से सर्वत्र टूट पडरही हैं॥ २७॥

अपि च भानुमति, विज्ञातपाण्डवप्रभावे, किन्त्वमप्येवमाशङ्कसे, पश्य-

दुःशासनस्य हृदयक्षतजाम्बुपाने दुर्योधनस्य च यथा गदयोरुभङ्गे ।
तेजस्विनां समरमूर्धनि पाण्डवानां ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥२८॥

कः कोऽत्र भोः । जैत्रं मे रथमुपकल्पय तावत् । यावदहमपि तस्य प्रगल्भस्य पाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसम्पादितमशस्त्रपूतं मरणमुपदिशामि । ( प्रविश्य )

---

प्रतिदिशम् , समरे = सङ्ग्रामे, सम्पतन्ति = सम्यग् भूमौ गच्छन्ति । मम भ्रातॄणां प्रभावात् पाण्डवस्य विजयो न सम्भवतीति भावः। स्रग्धरा छन्दः ॥ २७ ॥

विज्ञातपाण्डवप्रभावे = विज्ञात. पाण्डवानां प्रभावः यया तत्सम्बोधने ।

अन्वय —दुःशासनस्य, हृदयक्षतजाम्बुपाने, दुर्योधनस्य, गदया, ऊरुभङ्गे, च, समरमूर्द्धनि, तेजस्विनाम् , पाण्डवानाम् , यथा, प्रतिज्ञा ( निष्फला ) तथा, जयद्रथवधे, अपि, ज्ञेया ॥ २८ ॥

पाण्डवाना प्रतिज्ञापूर्त्यभाव दर्शयति—दुःशासनस्येति । दुःशासनस्य = मदनुजस्य, हृदयक्षतजाम्बुपाने = हृदयस्य क्षतज रुधिरं तदेव अम्बु जलं तस्य पाने, दुर्योधनस्य, गदया = प्रहारकशस्त्रविशेषेण, ऊरुभङ्गे = जघनभङ्गे, च, समरमूर्धनि = प्रधानसङ्ग्रामे, तेजस्विनाम् = पराक्रमिणाम् , तेजस्विनामिति काक्वोच्यते अतेजस्विनामिति भाव. । पाण्डवानां, यथा, प्रतिज्ञा निष्फलेति शेष । तथा जयद्रथवधे= सिन्धुराजविनाशे, अपि, प्रतिज्ञा विफला, ज्ञेया = बोध्या, एषाम्प्रतिज्ञेत्थमेव विफला भवति, अत इयमपि प्रतिज्ञा विफलैव स्यादिति भावः। वसन्ततिलका छन्दः ॥२८॥

जैत्रम् = जयनशीलम् । उपकल्पय = उपपादय । प्रगल्भस्य = धृष्टस्य । मिथ्याप्रतिज्ञावैलक्ष्यसम्पादितम्=मृषाभूतप्रतिज्ञया यद् वैलक्ष्यम् लज्जा तेन सम्पादितम्= कृतम् , अशस्त्रपूत = शस्त्रेण न पूतम् असूर्यम्पश्या इतिवत्समासः, क्षत्रियाणां शस्त्रेण

---

अयि भानुमति, आपको तो पाण्डवों की शक्ति विदित है क्या आपको भी इस प्रकार की आशङ्का होती है ? देखिए.—

युद्ध में दुश्शासन का हृदय विदीर्ण करके रुधिरपान करने के विषय में तथा मुझ दुर्योधन के जङ्घों को गदा से तोड़ डालने के विषय में की गई परम प्रतापशाली पाण्डवों की प्रतिज्ञा जैसी थी वैसी ही जयद्रथवध विषयिणी प्रतिज्ञा भी समझना चाहिए अर्थात् पाण्डवों की दुशासन के रक्तपात की तथा गदा द्वारा मुझ दुर्योधन के उरु भग्न करने की प्रतिज्ञा अबतक पूर्ण नहीं हो पाई वही दशा जयद्रथवध प्रतिज्ञा की भी होगी ॥ २८ ॥

अरे यहाँ कोई है ? मेरे विजयशील रथ को तय्यार करो मैं भी जयद्रथ की रक्षा करके उस मिथ्याप्रतिज्ञाभिमानी अर्जुन के उस मरण में, जो प्रतिज्ञा के असफल होने के कारण शस्त्र परित्यागपूर्वक होगा, सहायक बनूँ । ( प्रवेशकर )

कञ्चुकी—देव,

उद्घातक्वणितविलोलहेमघण्टः प्रालम्बद्विगुणितचामरप्रहासः ।
सज्जोऽयं नियमितवल्गिताकुलाश्वःशत्रूणां क्षपितमनोरथो रथस्ते ॥२६॥

राजा—देवि, प्रविश त्वमभ्यन्तरमेव । ('यावदहमपि तस्य प्रगल्भस्य पाण्डवस्य'—इत्यादि पठन परिक्रामति ।) (इति निष्क्रान्ताः सर्वे ।)

इति द्वितीयोऽङ्कः ।

---

मरण पवित्रमिति ख्यात तथा चार्जुनस्य प्रतिज्ञापूर्त्यभावे आत्मघातेन शस्त्रेणा-मरणात् अशस्त्रपूता मृत्युर्भविष्यतीति भावः ।

अन्वय —उद्घातक्वणितविलोलहेमघण्टः, प्रालम्बद्विगुणितचामरप्रहासः, नियमितवल्गिताकुलाश्वः, शत्रूणाम्, क्षपितमनोरथः, ते अयम्, रथः, सज्जः, (अस्ति)॥

उद्घातक्वणितविलोलहेमघण्टः=उद्घातेन हननेन या क्वणिता शब्दं कुर्वती विलोलहेमघण्टा यस्मिन् स., इद सर्वं रथस्य विशेषणम् । प्रालम्बद्विगुणितचामरप्रहास.= प्रालम्ब. प्रकर्षेण लम्बमानः द्विगुणितः द्विधा बद्धः यः चामरः तस्य प्रहासः शौक्ल्यम् यस्मिन् सः, नियमितवल्गिताकुलाश्व.=नियमिताः प्रग्रहेण बद्धाः वल्गिताः गतिविशेषविशिष्टा अत एव आकुलिता अश्वा यत्र स, शत्रूणाम्= रिपूणाम्, क्षपितमनोरथ.=क्षपित विनाशित. आच्छादित इत्यर्थ. मनोरथः येन स, अयम्, रथः, ते=तव सज्जः=सन्नद्ध, अस्तीति शेषः । प्रहर्षिणी छन्दः । म्याशाभि र्मं न ज र गा प्रहर्षिणीयमिति लक्षणात् ॥ २९ ॥

इति प्रबोधिनीव्याख्यायां द्वितीयोऽङ्कः ।

---

कञ्चुकी—महाराज !

यह आप का विजयी रथ जिसमें बँधे हुए सुवर्ण के घुँघुरू आघात लगने से झङ्कृत हो रहे हैं, जो दोनों ओर से झले जाते हुए चामरों से विभूषित तथा जिसमें जुते हुए चञ्चल घोड़े हिनहिना रहे हैं, तय्यार कर दिया गया है । रथ के देखने से ही शत्रुओं का मनोरथ अन्धकार में विलीन हो जाता है ॥ २९ ॥

राजा—श्रीमति, आप भीतर ही जाँय । ('यावदहमपि तस्य प्रगल्भस्य पाण्टवस्य' इस वाक्य को पढ़ता हुआ जाता है) (सब लोग चल पड़ते हैं)

द्वितीय अङ्क समाप्त ।

# तृतीयोऽङ्कः

( तत प्रविशति विकृतवेषा राक्षसी । )

राक्षसी—( विकृतं विहस्य । सपरितोषम् । )

हदमाणुशमंशशोणिदेहि कुम्भशहश्शं वशाहिं शञ्चिदम् ।
अणिशं अ पिवामि शोणिअं वलिशशदं शमले हुवीअदु ॥ १ ॥

( नृत्यन्ती सपरितोषम् । ) जइ शिन्धुलाअवहदिअहे विअ दिअहे दिअहे शमलकम्म पडिवज्जई अज्जुणो तदो पज्जत्तभलिदकोट्ठागाले मंशशोणिएहिं मे गेहे हुवीअदि । ( परिक्रम्य दिशोऽवलोक्य । ) अह कहिं क्खु गदे मे लुहिलप्पिए हुविअदि । होदु । शद्दावइश्शं दाव । अले लुहिलप्पिआ लुहिलप्पिआ, इदो एहि ।

( हतमानुषमासशोणितै कुम्भसहस्रं वसाभि सञ्चितम् ।

---

स्वान्ते धूतमले रजोविरहिते यो योगिनः क्रीडति
ध्यानाद्यस्य जनः प्रयाति जलधेर्लोकस्य पारं परम् ।
त्रैलोक्यं सविकासमासितमिदं यस्मिन्नमस्यामि तं
देवेशं बुधराघवस्य तनयोऽहं मैथिल कोविदः ॥ १ ॥

विकृतवेषा = विकृतः दर्शनानर्हः वेषः यस्याः सा ।

अन्वय—हतमानुषमांसशोणितैः, वसाभिः ( च ) कुम्भसहस्रम् , सञ्चितम् , रुधिरम् , अनिशम् , पिबामि, च, समर , वर्षशतम् , भवतु ॥ १ ॥

अर्जुनेन जयद्रथस्य वधस्य दिवसे महासङ्ग्रामकरणात् बहूनां विनाशात् प्रभूतमांसशोणितैः व्याप्ता मेदिनी जाता । अत. तत्रत्या राक्षसी तैः मासशोणितैः प्रसन्नाऽह—हतमानुषेति ।

हतमानुषमासशोणितैः = युद्धे मृतमनुष्यस्य पललरुधिरैः, वसाभिः = मेदोभि., च, क्वचिच्चेन विनाऽपि समुच्चयप्रतीतिः । कुम्भसहस्रम् = सहस्रसङ्ख्याकघटाः

---

( इसके अनन्तर विकृतवेश में राक्षसी का प्रवेश )

राक्षसी—( भद्दढङ्ग से हंसकर सन्तोष के साथ )

मैं रणस्थलीबीच मरे हुए वीरों के मांस, रक्त तथा चर्बियों से हजारों घडे भर कर रख दी हूँ और प्रतिदिन रुधिरपान करती हूँ । इसी तरह सैकडों वर्षो तक युद्ध होता रहे ॥१॥

( नाचती हुई सन्तोष पूर्वक ) यदि जयद्रथवध के दिन की भाँति प्रतिदिन अर्जुन सग्राम करते रहें तो मास और रक्तों से मेरे घर के कोठे अटारियाँ सब पूर्ण हो जाँय

तदेष मम परिश्रमः क्षणमात्रमेव लघु नश्येत् ॥ २ ॥ )

( राक्षसी पुनर्व्याहरति । )

राक्षसः—( आकर्ण्य । ) अले के मं शद्दावेदि । ( विलोक्य । ) कहं पिआ मे वशागन्धा । ( उपसृत्य । ) वशागन्धे, कीश मं शद्दावेशि । (अरे का मा शब्दायते । कथं प्रिया मे वसागन्धा । वसागन्धे, कस्मान्मा शब्दायसे ।)

लुहिलाशवपाणपत्तिए लणहिण्डन्तखलन्तगत्तिए ।
शद्दाअशि कीश मं पिए पुलिशशहश्शं हदं शुणीअदि ॥ ३ ॥
( रुधिरासवपानमत्ते रणहिण्डनस्खलद्गात्रि ।
शब्दायसे कस्मान्मा प्रिये पुरुषसहस्रं हतं श्रूयते ॥ ३ ॥ )

राक्षसी—अले लुहिलप्पिआ, एदं क्खु मए तुह कालणादो पच्चग्गहदश्श कश्शवि ताणुशिणो प्पहूदवशाशिणेहचिक्कणं कोएहं णवलुहिलं अग-

उष्णम् = अशीतम् , ( उष्णो ग्रीष्मे पुमान् दक्षाशीतयोरन्यलिङ्गकः, इति मेदिनी) । रुधिरम् = शोणितम् , च, लभ्येत = प्राप्येत तत् , मम, एषः = सङ्ग्रामभ्रमणजन्य , परिश्रमः क्षणमात्रमेव = झटित्येव, लघु यथा स्यात्तथा नश्येत् = विनष्टः स्यात् । अभिनवमांसशोणितभक्षणेन श्रमरहितोऽहं भविष्यामीतिभावः ॥ २ ॥

शब्दायते = शब्द करोति आह्वयतीत्यर्थः । शब्दवैरेति सूत्रेण क्यङ्प्रत्ययः । वसागन्धा = एतन्नामिका राक्षसी रुधिरप्रियस्य स्त्री ।

अन्वयः—रुधिरासवपानमत्ते, रणहिण्डनस्खलद्गात्रि, ( हे ) प्रिये, माम् , कस्मात् , शब्दायसे, पुरुषसहस्रम् , हतम् , श्रूयते ॥ ३ ॥

रुधिरासवपानमत्ते = रुधिरमेवासवः मद्यम् तस्य पानेन मत्ता तत्सम्बोधने प्रिये, इत्यस्य विशेषणम् , एवमग्रेपि । रणहिण्डनस्खलद्गात्रि = सङ्ग्रामभ्रमणप्रच्यव द्देहे, हे प्रिये, माम् = रुधिरप्रियम् , कस्मात् , शब्दायसे = आह्वयसि, पुरुषसहस्रम् सहस्रसङ्ख्याकपुरुषा , हत, श्रूयते तथाच तव नास्ति भोजनापेक्षेति भावः ॥ ३ ॥

**राक्षसी**—( फिर गलाफाड कर चिल्लाती है )

**राक्षस**—( सुनकर ) अरे कौन मुझे बुला रही है । अरे, क्यों मेरी प्राणेश्वरी वसागन्धा ( समीप जाकर ) अयि वसागन्धे ! मुझे क्यों बुला रही हो ?

अरी रक्तरूपी मदिरा छक कर मस्त तथा समरभूमि के बीच भ्रमण करने से श्रान्त वल्लभे ! मुझे क्यों पुकार रही हो ? सुनता हूँ हजारों वीर खेत हो गए ( मर गए ) ॥ ३ ॥

**राक्षसी**—अरे रक्तप्रेमी ! रक्तप्रेमी !! मैं तुम्हारे लिए शीघ्र मरे हुए किसी एक

मश अ आणीदम् । ता पिवाहि णम् । ( अरे रुधिरप्रिय, इदं खलु मया तव कारणात्प्रत्यग्रहतस्य कस्यापि राजर्षेः प्रभूतवसास्नेहचिक्कणं कोष्णं नवरुधिरमग्रमांसं चानीतम् । तत्पिबैतत् । )

राक्षस —( सपरितोषम् । ) वशागन्धे, शुट्ठु शोहणं तुए किदम् । बलिअह्मि पिवाशिए । ता उवणेहि । ( वसागन्धे, सुष्ठु शोभनं त्वया कृतम् । बलवदस्मि पिपासित । तदुपनय । )

राक्षसी—अले लुहिलप्पिआ, एदिशे वि णाम हदणलगअतुलङ्गमशोणिअवशाशमुद्दुश्शश्चले शमले पडिब्भमन्ते तुमं पिवाशिएशित्ति अच्चलिअम् । (अरे रुधिरप्रिय, ईदृशेऽपि नाम हतनरगजतुरङ्गमशोणितवसासमुद्रदुःसञ्चरे समरे परिभ्रमंस्त्वं पिपासितोऽसीत्याश्चर्यम् । )

राक्षस —अइ शुत्थिदे, णं पुत्तशोअशन्तत्तहिअअं शामिणीं हिडि-

---

प्रत्यग्रहतस्य = अभिनवव्यापादितस्य, कस्यापि, राजर्षेः = ऋषिसदृशनृपस्य, प्रभूतवसास्नेहचिक्कणम् = प्रचुरमेदःस्नेहमसृणम् , 'चिक्कणं मसृणं स्निग्धम्', इत्यमरः । कोष्णम् = ईषदुष्णम् , नवरुधिरम् , अग्रमांसम् = उत्तममांसम् , च, आनीतं तव कारणादित्यन्वयः ।

सुष्ठु = मनोहरम् , शोभनम् = साधु, त्वया कृतमित्यन्वयः । बलवत् = अतिशयितम् , पिपासितः=पानेच्छायुक्तः, अस्मि, इत्यन्वयः । बलवदिति क्रियाविशेषणम् ।

हतनरगजतुरङ्गमवसासमुद्रदुःसञ्चरे = मृतमनुष्यहस्त्यश्वानां शोणितवसे एव समुद्र अत एव दुःसञ्चरः दुःखेन सञ्चरितुं योग्यः तस्मिन् , समरे = सङ्ग्रामे, परिभ्रमन् , त्वं पिपासितः = पानेच्छायुक्तः, असीति, आश्चर्यम् = अद्भुतम् । एतादृशे सङ्ग्रामे सति न तव पिपासा युक्तेति भावः ।

---

राजर्षि के अङ्गों से निसृत वसा, द्रव, मस्तिष्क तथा चिकना और गरम ताजा रक्त और स्वादिष्ट मांस लाई हूँ अत इसे पीलो ।

**राक्षस—**( सन्तुष्ट होकर ) साधु, साधु, वसागन्धे, तूने अच्छा किया, जो गरम गरम रक्त लाई । मैं अधिक तृषार्त हो गया हूँ अत. उसे ला इधर दे ।

**राक्षसी—**अये रुधिरप्रिय, मृतशूरवीर, हाथी, घोडों के रक्त, माँस तथा चर्वी के समुद्र में घूमना फिरना कठिन हो रहा है । ऐसे समरभूमि के बीच विचरते हुए तुम तृषार्त हो—महान् आश्चर्य की बात है ।

**राक्षस—**( क्रोधपूर्वक ) अरी वसागन्धे, मैं पुत्र घटोत्कच के वध के कारण शोकाग्नि

म्बादेवीं पेक्खिदुं गदम्हि । ( अयि सुस्थिते, ननु पुत्रशोकसन्तप्तहृदया स्वामिनीं हिडिम्बादेवीं प्रेक्षितुं गतोऽस्मि । )

राक्षसी—लुहिलप्पिआ, अज्जवि शामिणीए हिडिम्बादेवीए घडुक्कअशोए ण उपशमइ । ( रुधिरप्रिय, अद्यापि स्वामिन्या हिडिम्बादेव्या घटोत्कचशोको नोपशाम्यति । )

राक्षस—वशागन्धे, कुदो शे उवशमे केवलं अहिमण्णुशोअशमाणदुक्खाए शुभद्दादेवीए जण्णशेणीए अ कधं कधंवि शमाश्शाशीअदि । ( वसागन्धे, कुतोऽस्या उपशमः केवलमभिमन्युशोकसमानदुःखया सुभद्रादेव्या याज्ञसेन्या च कथं कथमपि समाश्वास्यते । )

राक्षसी—लुहिलप्पिआ, गेण्ह एदं हत्थिशिलक्कवालशञ्चिअं अग्गमशोवदंशम् पिवाहि शोणिआशवम् । ( रुधिरप्रिय, गृहाणैतद्धस्तिशिरःकपालसञ्चितमग्रमांसोपदंशं पिब शोणितासवम् । )

---

हिडिम्बादेवीं = राक्षसीं भीमपत्नीम् , प्रेक्षितुं = द्रष्टुम् गतोऽस्मि । हिडिम्बादेव्या घटोत्कचो नाम पुत्रः समरे हत इति पुत्रशोकसन्तप्तहृदया हिडिम्बा वर्त्तते । तस्याः सान्त्वनार्थं राक्षसो गत आसीदिति भावः ।

अद्यापि = इदानीमपि, इदानीमद्येति कलापसूत्रेण निष्पन्नमिदम् । घटोत्कचशोकः = घटोत्कचविनाशजन्यः शोकः, न, उपशाम्यति = शान्तो भवति ।

अभिमन्युशोकसमानदुःखया = अभिमन्युवधजन्यशोकेन समानं दुःखं यस्याः तया, याज्ञसेन्या = द्रौपद्या, समाश्वास्यते = मा दुःखं कुरु इत्याश्वासनं क्रियते ।

अग्रमांसोपदंशम् = अग्रमांसेनोपदंशम् अग्रमांसमुपदंश्येत्यर्थः, 'उपदंशस्तृतीयायामि'ति णमुल् प्रत्ययः । 'तृतीयाप्रभृतीन्यन्यतरस्यामि'ति समासः ।

---

से सन्तप्त भर्तृणी हिडम्बा देवी को देखने गया था ।

**राक्षसी—**रक्तप्रिय, अब तक भी स्वामिनी हिडम्बा देवी का घटोत्कचसम्बन्धी शोक दूर नहीं हो रहा है ?

**राक्षस—**कहाँ से इनका शोक दूर हो, इतना अवश्य है कि अभिमन्युवध के कारण समान शोकभागिनी सुभद्रा देवी और पाञ्चाली के द्वारा किसी किसी प्रकार से सान्त्वना दी जा रही है ।

**राक्षसी—**रक्तरसिक [ प्रियतम ], लो, इस हाथी के मस्तकरूपी खप्पर में सञ्चित स्वादिष्ट माँस खाओ और रुधिररूपी मदिरा पान करो ।

राक्षस—( तथा कृत्वा । ) वशागन्धे, अह किअप्पहूदं तुए शञ्चिअं लुहिलं अग्गमंशं अ । (वसागन्धे, अथ कियत्प्रभूतं त्वया सञ्चितं रुधिरमग्रमासं च।)

राक्षसी—अले लुहिलप्पिआ, पूव्वशञ्चिअं तुमं वि जाणाशि जेव्व । णवशञ्चिअं शिणु दाव । भअदत्तशोणिएहि कुम्भे शिन्धुलाअवशाहि कुम्भे दुवे दुवदमच्छाहिवभूलिश्शवशामदत्तबाह्लिअप्पमुहाणं णलिन्दाणं अण्णाणं वि पाकिदपुलिशाणं लुहिलमशेहि पुलिदाइं घडशदाइं अशंक्खाइं शन्ति मे गेहे । ( अरे रुधिरप्रिय, पूर्वसञ्चितं त्वमपि जानास्येव । नवसञ्चितं शृणु तावत् । भगदत्तशोणितैः कुम्भः सिन्धुराजवसाभिः कुम्भौ द्वौ द्रुपदमत्स्याधिपभूरिश्रव सोमदत्तबाह्लीकप्रमुखाणा नरेन्द्राणामन्येषामपि प्राकृतपुरुषाणा रुधिरमासैः पूरितानि घटशतान्यसंख्यानि सन्ति मे गेहे । )

राक्षस—( सपरितोषमालिङ्ग्य । ) शाहु शुग्घलिणीए, शाहु । इमिणा दे शुग्घलित्तणेण अज्ज उण शामिणीए हिडिम्बादेवीए शम्बिद्दाणेण प्पणट्ठे मे जम्मदालिद्दम् । ( साधु सुगृहिणि, साधु । अनेन ते सुगृहिणीत्वेनाद्य स्वामिन्या

---

अग्रमांसम् = उत्तममासम् 'प्रवेकानुत्तमोत्तमाः । मुख्यवर्यवरेण्याश्च प्रवर्हानवराध्र्यवत् । पराध्र्याग्रपाग्रहरे, त्यमर. । रुधिरञ्च प्रभूतम् = प्रचुरम् सञ्चितमित्यन्वयः।

भगदत्तशोणितैः= भगदत्तनामा नृपः समरे हतः तस्य रुधिरैः कुम्भ = एकघटः, सिन्धुराजवसाभिः=जयद्रथमेदोभिः । ये ये प्रमुखानरेन्द्रा हतास्तेषा नामान्युल्लिखति—द्रुपदेत्यादि । एतेषां मांसशोणितैः पूरिता असङ्ख्या घटाः सन्ति मम गृह इत्यर्थः ।

ते = तव, अनेन = त्वयि स्थितेन, सुगृहीणीत्वेन = उत्तमगृहकार्यकारिणीत्वेन, स्वामिन्याः, हिडिम्बादेव्याः = भीमसेनपत्न्याः, सविधानेन = त्वया भीमस्यानु-

---

**राक्षस**—( खा पीकर ) अरी वसागन्धे, कितने प्रचुर परिमाण में रक्त और हृदयमास तू सञ्चित कर रक्खी हो ?

**राक्षसी**—अयि रक्तप्रिय, पहिले का सञ्चय तो तुम जानते ही हो । नई नई सञ्चित सामग्रियों को सुनिये—वीर भगदत्त के रुधिर से एक घडा, जयद्रथ की चर्बियों से दो घडे, और द्रुपद, मत्स्यनरेश, भूरिश्रवा, सोमदत्त तथा वाह्लीक प्रभृति प्रधान प्रधान राजाओं के तथा और भी साधारण शूरों के रुधिर माँसादि से भरे हुए हजारों घडे मुखबन्द करके मेरे घर पर रक्खे पड़े हुए हैं ।

**राक्षस**—( तुष्टि के साथ आलिङ्गन करके ) शाबाश, मेरी योग्य पत्नी, शाबाश, इस तुम्हारे योग्य पत्नी रहने के कारण तथा भर्तृणी हिडिम्बा देवी के उपाय से आज मेरे

हिडिम्बादेव्या संविधानेन प्रनष्टं मे जन्मदारिद्रयम् । )

राक्षसी—लुहिलप्पिआ, केलिशे शामिणीए शंविहाणए किदे । (रुधिरप्रिय, कीदृशं स्वामिन्या संविधानं कृतम् । )

राक्षस—वशागन्धे, आणत्ते क्खु हग्गे शामिणीए हिडिम्बादेवीए जह लुहिलप्पिआ, अज्जप्पहुदि तुए अज्जउत्तभीमशेणश्श पिट्ठदोऽणुपिट्ठं शमले आहिण्डिदव्वं त्ति । ता तश्श अणुमग्गगामिणो हदमाणुशशोणिअणइदंशणप्पणट्ठबुभुक्खापिवाशश्श इह एव मे शग्गलोओ हुविअदि । तुमं वि वीशद्धा भविअ लुहिलवशाहिं कुम्भशहश्शं शञ्चेहि । ( वसागन्धे, आज्ञप्त खल्वहं स्वामिन्या हिडिम्बादेव्या यथा रुधिरप्रिय, अद्यप्रभृति त्वया आर्यपुत्रभीमसेनस्य पृष्ठतोऽनुपृष्ठं समरं आहिण्डितव्यमिति । तत्तस्यानुमार्गगामिनो हतमानुषशोणितनदीदर्शनप्रनष्टबुभुक्षापिपासस्येहैव मे स्वर्गलोको भविष्यति । त्वमपि विस्रब्धा भूत्वा रुधिरवसाभिः कुम्भसहस्रं सञ्चिनु । )

राक्षसी—लुहिलप्पिआ, किंणिमित्तं कुमालभीमशेणश्श पिट्ठदो आहिण्डीअदि । ( रुधिरप्रिय, किंनिमित्तं कुमारभीमसेनस्य पृष्ठत आहिण्ड्यते । )

---

पृष्ठ भ्रमितव्यमित्याकारकनियोगेन, मे = मम जन्मदारिद्रथ प्रनष्टमद्येत्यन्वय. । तेन विनाऽपि समुच्चयप्रतीतेः सविधानेनेत्यत्र चकारस्याप्रयोग' ।

किमाज्ञस इत्याह—रुधिरप्रियेति । कीदृश = किमाकारकम् स्वामिन्या = हिडम्बादेव्या, सविधान = नियोगः ।

पृष्ठत. = पृष्ठस्य, अनुपृष्ठ = पश्चात् । आहिण्डितव्यम् = भ्रमितव्यम् । हतेति—हतमानुषशोणितस्य या नदी तस्या दर्शनेन प्रनष्टे बुभुक्षापिपासे यस्य तस्य, स्वर्गलोकः = स्वर्गसदृशो लोकः । विस्रब्धा = विश्वस्ता निश्चिन्तेति यावत् ।

---

जन्म के साथ की दरिद्रता दूर हो गयी ?

राक्षसी—ऐ शोणितरसरसिक, भर्तृणी हिडिम्बा किस तरह का उपाय बतलाई ।

राक्षस—अरी वसागन्धे, आज स्वामिनी हिडिम्बा देवी बडे प्रेम के साथ मुझे बुलाकर आज्ञा दी हैं—'ऐ रुधिरप्रिय, आज से तू आर्यपुत्र भीमसेन के पीछे पीछे रणक्षेत्र में भ्रमण करना !' अत' उनका अनुसरण करते हुए समर में मृत मनुष्यों के रक्त की नदी के देखने मात्र से मेरी बुभुक्षा तथा तृषा शान्त हो जाने से मेरे लिए यहीं स्वर्ग हो गया है । तू भी निर्भीक बन कर रक्त तथा चर्बियों से हजारों घडे पूरा करले ।

राक्षसी—रुधिरप्रिय, किसलिए कुमार भीमसेन के पीछे पीछे घूमते हो ।

राक्षस—वशागन्धे, तेण हि शामिणा विओदलेण दुश्शाशणश्श लुहिलं पादुं पडिण्णादम्। तं च अम्हेहिं लक्खशेहि अणुप्पविशिअ पादव्वम्। (वसागन्धे, तेन हि स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातम्। तच्चास्माभी राक्षसैरनुप्रविश्य पातव्यम्।)

राक्षसी—(सहर्षम्।) शाहु शामिणीए, शाहु। शुशंविहाणे मे भत्ता किदे। (साधु स्वामिनि, साधु। सुसंविधानो मे भर्ता कृतः।)

(नेपथ्ये महान्कलकलः।)

राक्षसी—(आकर्ण्य। ससम्भ्रमम्।) अले लुहिलप्पिआ, किं णु क्खु एशे महन्ते कलअले शुणीअदि। (अरे रुधिरप्रिय, किं नु खल्वेष महान्कलकल श्रूयते।)

राक्षस—(दृष्ट्वा।) वशागन्धे, एशे क्खु धिट्ठज्जुम्णेण दोणे केशेशु आकड्ढिअ अशिवत्तेण वावादीअदि। (वसागन्धे, एष खलु धृष्टद्युम्नेन द्रोण केशेष्वाकृष्यासिपत्रेण व्यापाद्यते।)

---

वृकोदरेण = भीमेन, दुःशासनस्य = दुर्योधनानुजस्य रुधिरं, पातुम्, प्रतिज्ञातम्, द्रौपदीकेशाकर्षणसमये यत्प्रतिज्ञातन्तत्साम्प्रतं पूरणीयमिति भावः। राक्षसैरिति। रुधिरपानं मदीयं राक्षसकर्म, अतः भीमसेनस्य शरीरेऽनुप्रविश्य पातव्यमिति भावः।

सुसंविधानः = सु शोभनं संविधानं यस्य सः।

धृष्टद्युम्नेन त्यक्तशस्त्रस्य पराक्रमिणो द्रोणाचार्यस्य वधान्महान् कोलाहलो जात इत्याह—महान् कलकलः श्रूयत इति।

धृष्टद्युम्नेन = द्रुपदपुत्रेण, केशेषु = कचेषु, आकृष्य = गृहीत्वा, एषः = विख्यातः,

---

राक्षस—अयि वसागन्धे, उस स्वामी भीमसेन ने दुश्शासन के हृदय से रक्तपान करने की प्रतिज्ञा की है उसे हम राक्षस लोग भीतर प्रवेश कर भलीभाँति पीयेंगे।

राक्षसी—(प्रसन्नतापूर्वक) धन्य! स्वामिनि!! धन्य!!! आपने मेरे प्राणनाथ को अच्छा उपदेश दिया।

(नेपथ्य में तुमुलध्वनि होती है दोनों सुनते हैं)

राक्षसी—(सुनकर उद्विग्नता के साथ) अरे रक्तप्रेमी, यह कैसी तुमुलध्वनि श्रुति गोचर हो रही है?

राक्षस—यह आचार्य द्रोण केश खींच कर धृष्टद्युम्न के द्वारा खड्ग से मारे जा रहे हैं।

राक्षसी—( सहर्षम । ) लुहिलप्पिआ, एहि । गच्छिअ दोणश्श लुहिलं पिबम्ह । ( रुधिरप्रिय, एहि । गत्वा द्रोणस्य रुधिरं पिबाव । )

राक्षस —( सभयम् । ) वशागन्धे, ब्रह्मणशोणिअं क्खु एदं गलअं दहन्ते दहन्ते पविशदि । ता किं एदिणा । ( वसागन्धे, ब्राह्मणशोणितं खल्वेतद् गलं दहद्दहत् प्रविशति । तत्किमेतेन । )

( नेपथ्ये पुनः कलकल । )

राक्षसी—लुहिलप्पिआ, पुणोवि एशे महन्ते कलअले शुणीअदि । ( रुधिरप्रिय, पुनरप्येष महान्कलकल श्रूयते । )

राक्षस —( नेपथ्याभिमुखमवलोक्य । ) वशागन्धे, एशे क्खु अश्शत्थामे आकड्ढिदाशिवत्ते इदो एव्व आअच्छदि । कदावि दुवदशुदलोशेण अम्हेवि वावादइश्शइ । ता एहि । अतिक्कमम्ह । ( वसागन्धे, एष खल्वश्वत्थामाकृष्टा-

---

द्रोणः=आचार्यः, असिपत्रेण=खड्गेन, व्यापाद्यते=हन्यते इत्यन्वय' खलुशब्दो वाक्यालङ्कारे । युधिष्ठिरादश्वत्थामा हत इति श्रुत्वा पुत्रशोकेन शस्त्रं विहाय स्थितो द्रोण. धृष्टद्युम्नेन हतः । धृष्टद्युम्नपितुः द्रुपदस्य वरप्रदानमासीद् यत्तव पुत्रेण द्रोणस्य घातः स्यादतो धृष्टद्युम्नो त जघानेति भावः ।

गल=कण्ठम् , दहद्=भस्म कुर्वत्, ब्राह्मणस्य तेजस इति भावः । किमेतेन= किं पानेन, न पातव्यमिति भाव' ।

अश्वत्थामा=द्रोणपुत्र', आकृष्टासिपत्रः=आकृष्टम् कोशान्निःसृनम् , असिपत्रम् खड्गः यस्य सः, इत एव=अस्मादेव मार्गात् । द्रुपदसुतरोषेण=धृष्टद्युम्नविषयक- क्रोधेन, अनेनैव मत्पिता हत इति रोषहेतुः । व्यापादयिष्यति=हनिष्यति । तत्=

---

राक्षसी—ओ रुधिरप्रिय ! रुधिरप्रिय !! आइए हम लोग भी चल कर द्रोणाचार्य का रक्त पान करें।

राक्षस—( भयभीत होता हुआ ) अरी वसागन्धे, यह ब्राह्मण का रुधिर है, गला भस्म करता हुआ भीतर प्रवेश करता है तो पुन' इसके पान करने से क्या लाभ ?

( नेपथ्य की ओर फिर कोलाहल सुनाई पड़ता है )

राक्षसी—अरे रुधिर प्रिय ! उठ देख यह हल्ला फिर क्यों सुनाई दे रहा है ? ।

राक्षस—(नेपथ्य की ओर देखकर) यह द्रोणपुत्र अश्वत्थामा हाथ में करवाल (तलवार) लिए हुए इधर ही आरहे हैं। कदाचित् ऐसा न हो कि धृष्टद्युम्न का क्रोध हमी लोगों पर

सिधम इत एवागच्छति । कदाचिद्दूपदसुतरोपेणावामपि व्यापादयिष्यति । तदेहि । अतिक्रमावः । )

( इति निष्क्रान्तौ । )

प्रवेशकः ।

( ततः प्रविशत्याकृष्टखड्गः कलकलमाकर्णयन्नश्वत्थामा । )

अश्वत्थामा—

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः ।

---

तस्मात्, एहि = आगच्छ, अतिक्रमावः, आवामिति शेषः ।

प्रवेशक इति, नीचेन नीचाभ्यां वा पात्राभ्यां नीचोक्त्या प्रयोजितः भूतस्य भविष्यतश्च कथांशस्य निदर्शक अङ्कद्वयमध्यवर्ती प्रवेशक उच्यते । तदुक्तं दर्पणे—

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥ इति ।

तथा चात्र राक्षस्या राक्षसेन च नीचोक्त्या भूतः सिन्धुराजवधो भविष्यन् दुःशासनवधश्च सूचितोऽत प्रवेशकोऽयं नाटकाङ्कम् ।

आकृष्टखड्गः = आकृष्टासिः, अश्वत्थामा = द्रोणपुत्रः ।

अन्वयः — महाप्रलयमारुतक्षुभितपुष्करावर्तकप्रचण्डघनगर्जितप्रतिरवानुकारी, मुहुः, स्थगितरोदसीकन्दरः, श्रवणभैरवः, अभूतपूर्वः, अयम्, रवः, अद्य समरोदधेः, पुरः, कुतः, ( भवति ) ॥ ४ ॥

प्रचण्डशब्दश्रवणाच्चकितोऽश्वत्थामा आह—महाप्रलयमारुतेति ।

महाप्रलयमारुतक्षुभितपुष्करावर्तकप्रचण्डघनगर्जितप्रतिरवानुकारी = महाप्रलयकालिको यो मारुतः वायुः तेन क्षुभितौ सञ्चालितौ, यौ पुष्करावर्तकौ मेघविशेषौ तयोः प्रचण्डघनगर्जितम् भयावहनिरन्तरस्तनितं तस्य यः प्रतिरवः प्रतिध्वनिः तस्यानुकारी, मुहुः, स्थगितरोदसीकन्दरः = स्थगितः, रोदस्यौ द्यावापृथिव्यौ एव

---

उतारें । अत आओ चलें स्वामिनी हिडिम्बा देवी की आज्ञा मानें ।

( दोनों चले जाते हैं )

प्रवेशक समाप्त

( कोलाहल सुनते हुए हाथ में खड्ग लेकर अश्वत्थामा का प्रवेश )

अश्वत्थामा—आज सामने इस संग्रामसागर से निकलता हुआ, सृष्टि-संहार-कालीन झञ्झावात से क्षुभित पुष्करावर्तक मेघों के भीषण तथा गम्भीर कड़कड़ाहट की प्रतिध्वनि का

रवः श्रवणभैरवः स्थगितरोदसीकन्दरः

कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥ ४ ॥

( विचिन्त्य । ) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनदर्पादतिक्रान्तमर्यादेन परिकोपितस्तातः । यतः समुल्लङ्घ्य शिष्यप्रियतामात्मप्रभावसदृशमाचेष्टते । तथाहि—

यद्दुर्योधनपक्षपातसदृशं युक्तं यदस्त्रग्रहे

---

कन्दरः गिरिविवरः येन सः, 'द्यावापृथिव्यौ रोदस्यौ रोदसौ रोदसीति च' इति विश्वः । श्रवणभैरवः = भीषणश्रवणः, अद्य, समरोदधेः = समरमेव उदधिः समुद्रः तस्मात्, अभूतपूर्वः = पूर्वं न भूतः प्रागभावीत्यर्थः । अयम्, रवः = शब्दः, पुरः = अग्रे, कुतः = कस्माद्धेतोः, भवतीतिशेषः । अद्य सङ्ग्रामे कथमीदृशः शब्दो भवतीतिभावः । अत्र रूपकद्वयमलङ्कारः । पृथ्वी छन्दः । ज सौ ज स य ला वसुग्रहयतिश्च पृथ्वी गुरुरितिलक्षणात् ॥ ४ ॥

गाण्डीविना = अर्जुनेन, सात्यकिना = यदुवंशजातेन, यौवनदर्पात् = तरुणत्वगर्वात्, अतिक्रान्तमर्यादेन = अतिक्रान्ता मर्यादा स्थितिः येन तेन, इदं वृकोदरस्य विशेषणम् । वृकोदरेण = भीमेन, वा ध्रुवम् = निश्चयम्, तातः = मत्पिता द्रोणः, परिकोपितः = क्रोधितः । शिष्यप्रियताम् = शिष्ये स्नेहम्, समुल्लङ्घ्य = परित्यज्य ।

अन्वय —यत्, दुर्योधनपक्षपातसदृशम्, अस्त्रग्रहे, यत्, युक्तम्, रामात्, लब्धसमस्तहेतिगुरुणः, वीर्य्यस्य, यत्, साम्प्रतम्, लोके, सर्वधनुष्मताम्, अधिपतेः, रुषः, यत्, च, अनुरूपम्, तत्, कर्म, मे, रिपुघस्मरेण, तातेन, प्रारब्धम्, नियतम् ॥५॥

पितुः प्रभावप्रशंसामाह—यद्दुर्योधनपक्षपातेति ।

यत्; दुर्योधनपक्षपातसदृशम् = कुरुपतेः पक्षग्रहणतुल्यम्, अस्त्रग्रहे = शस्त्रग्रहणे, यत्, युक्तम् = उचितम्, रामात् = परशुरामात्, लब्धसमस्तहेतिगुरुणः = लब्धा याः समस्तहेतयः समस्तशस्त्राणि ताभिर्गुरुणः महतः, रवेरर्चिश्च शस्त्रं च वह्नि-

---

अनुकरण करता हुआ, पृथ्वी और आकाश के अन्तराल को पूर्ण करता हुआ कर्ण-शष्कुलियों [कान के छिद्रों] के लिये त्रासजनक और अपूर्व शब्द किस लिए हो रहा है ? ॥ ४ ॥

( सोचकर ) अवश्य अर्जुन, सात्यकि और भीम इनमें से किसी ने यौवनदर्प से मर्यादा का उल्लघन करके पिताजी को क्रुद्ध कर दिया है । जिससे वे शिष्यप्रेम का परित्याग करके अपने सामर्थ्यानुरूप पराक्रम प्रदर्शित कर रहे हैं । क्यों कि—

शत्रुओं के लिए अन्तक सदृश मेरे पिता ने वही कार्य करना प्रारम्भ किया है जो

रामाल्लब्धसमस्तहेतिगुरुणो वीर्यस्य यत्साम्प्रतम् ।
लोके सर्वधनुष्मतामधिपतेर्यच्चानुरूपं रुषः
प्रारब्धं रिपुघस्मरेण नियतं तत्कर्म तातेन मे ॥ ५ ॥

( पृष्ठतो विलोक्य । ) तत्कोऽत्र । रथमुपनयतु । अथवाऽलमिदानीं मम रथप्रतीक्षया । सशस्त्र एवास्मि सजलजलधरप्रभाभास्वरेण सुप्रग्रहविमलकलधौतत्सरुणाऽमुना खड्गेन यावत्समरभुवमवतरामि । ( परिक्रम्य वामाक्षिस्पन्दनं सूचयित्वा । ) अये, ममापि नामाश्वत्थाम्नः समरमहोत्सवप्रमोदनिर्भरस्य तातविक्रमदर्शनलालसस्यानिमित्तानि समरगमनविघ्नमुत्पाद-

---

ज्वाला च हेतय, इत्यमरः । वीर्यस्य = पराक्रमस्य, यत्, साम्प्रतम् = युक्तम्, लोके = जगति, सर्वधनुष्मताम् = अखिलधनुर्धारिणाम्, अधिपतेः = स्वामिनः, रुषः = क्रोधस्य यच्च अनुरूपम् = योग्यम्, तत्, कर्म = कार्यम्, मे, रिपुघस्मरेण = शत्रुभक्षकेन तातेन = पित्रा द्रोणेन, प्रारब्धम्, नियतम् = उत्प्रेक्ष्यते, नियतमित्युत्प्रेक्षायाम् उत्प्रेक्षा चोत्कटकोटिकसंशयः । अत्र समालङ्कारः । शार्दूलविक्रीडितं छन्दः ॥ ५ ॥

सजलजलधरप्रभाभास्वरेण = सजलो यो जलधरः मेघः तस्य या प्रभा विद्युत् तद्वत् भास्वर दीप्यमान तेन, सुप्रग्रहविमलकलधौतत्सरुणा = सुप्रग्रह· सुखेन ग्रहणयोग्यः, विमल कलधौतः सुवर्णनिर्मितः त्सरुः खड्गमुष्टि· यस्य तेन, खड्गेन = असिना, समरभुवम् = सङ्ग्रामस्थानम्, अवतरामि । वामाक्षिस्पन्दनम् = सव्यनेत्रपरिस्फुरणम्, पुरुषाणां वामनेत्रस्पन्दनं शास्त्रेऽहितकर कथितम् । द्रोणवधहेतुक वामनेत्रस्पन्दनमितिभावः । समरमहोत्सवप्रमोदनिर्भरस्य = समर एव महानुत्सव. तेन य. प्रमोद आनन्दः तत्र निर्भरस्य प्रमग्नस्य; तातविक्रमदर्शनलालसस्य = पितृविक्रमदर्शनेच्छुस्य, अनिमित्तानि = अनिष्टसूचकानि, समरगमनविघ्नम् =

---

दुर्योधन के पक्षाश्रय के लिये होना चाहिए तथा हाथ में शस्त्रग्रहण करने पर जो उचित हो सकता है । परशुराम से प्राप्त अनेकविध अस्त्रों से असह्यपराक्रमशाली होने की सफलता भी उन्होंने दिखलायी है तथा विश्व के सभी धनुर्धरों में श्रेष्ठ पुरुष का क्रोध जैसा होना चाहिए उसी के अनुरूप यह कार्य है ॥ ५ ॥

( पीछे की ओर देख कर ) यहाँ कोई है ? रथ लाओ । अथवा अब रथ के लिए मुझे प्रतीक्षा करने की आवश्यकता नहीं । सजल जलद (जल से परिपूर्ण मेघ) की नीलिम कान्ति सदृश कान्तियुक्त इस कृपाण से, जिसकी मुष्टि सुवर्णनिर्मित होने के कारण चमक रही है, तथा पकड़ने में सुविधाजनक है, मैं सशस्त्र हूँ । अब रणभूमि की ओर प्रस्थान करता हूँ । ( परिक्रमण करके वाम नेत्र के फड़कने का अभिनय करते हुए ) अरे ! क्यों रणमहोत्सवा-

यन्ति । भवतु । गच्छामि । ( सावष्टम्भं परिक्रम्याग्रतो विलोक्य । ) कथमवधीरितक्षात्रधर्माणामुज्झितसत्पुरुषोचितलज्जावगुण्ठनानां विस्मृतस्वामिसत्कारलघुचेतसां द्विरदतुरङ्गमचरणचारिणामगणितकुलयशःसदृशपराक्रमव्रतानां रणभूमेः समन्तादपक्रामतामय महान्नादो बलानाम् (निरूप्य) हा हा धिक्कष्टम् । कथमेते महारथाः कर्णादयोऽपि समरात्पराङ्मुखा भवन्ति । कथं नु ताताधिष्ठितानामपि बलानामियमवस्था भवेत् । भवतु संस्तम्भयामि । भो भोः कौरवसेनासमुद्रवेलापरिपालनमहामहीधरा

सङ्ग्रामावतरणान्तरायम् । अवधीरितक्षात्रधर्माणाम् = अवधीरितः तिरस्कृत. क्षात्रधर्मो यैः तेषाम्, 'धर्मादनिच् केवलात्' इत्यनिच्प्रत्ययः । उज्झितसत्पुरुषोचितलज्जावगुण्ठनानाम् = सत्पुरुषस्य मनस्विनः, उचिता या लज्जा सैव अवगुण्ठनम् आवरणम् तद् उज्झितं यैः । द्विरदतुरङ्गमचरणचारिणाम् = द्विरदतुरङ्गमा हस्त्यश्वाः तेषां चरणैः सञ्चरणशीलानाम्, हस्त्यश्वैः गच्छतामिति यावत् । त्यक्तद्विरदतुरङ्गमेतिपाठे त्यक्ता द्विरदतुरङ्गमा यैः अतएव चरणचारिणः पदातयः, तेषाम् । अगणितकुलयशःसदृशपराक्रमव्रतानाम् = कुलस्य वंशस्य यशसश्च अनुरूपम् यत् पराक्रमव्रतम् तदगणितं यैः तेषाम्, रणभूमेः, समन्तात् = सर्वतोभावेन अपक्रामताम् = पृथग्गच्छताम्, बलानाम् = सैन्यानाम्, कथम्, अय, महान्, नादः = शब्दो, भवतीति शेषः । एतादृशोऽभूतपूर्वशब्दे किं कारणमिति भावः । अयमाशयः सङ्ग्रामस्थानाद्बहिर्भूमेरागच्छन् द्रोणवधमजानन्नेवं तर्कयत्यश्वत्थामा । पराङ्मुखाः = पराचीनाः विमुखा इत्यर्थः । संस्तम्भयामि = अवरोधयामि ।

मिलाषी और पितृपराक्रमदर्शनोत्कण्ठित मुझ अश्वत्थामा को युद्धार्थप्रस्थान करते समय विघ्न उत्पन्न हो रहे हैं ? अच्छा, विघ्न होने दो । मैं जाऊँगा ही । ( सगर्व कुछ दूर चल कर सामने देखता हुआ ) क्यों ! क्या समग्र क्षात्रधर्म की अवहेलना कर के, सज्जनानुरूप लज्जा के आवरण को प्रक्षिप्त कर के, तथा स्वामी के सत्कार को भूलकर क्षुद्रवृत्ति धारण करके हाथी-घोड़ों को छोड़ कर पैदल भागते हुए, अपने वंश की मर्यादा के अनुकूल नियमों का उल्लङ्घन करते हुए, तथा समर भूमि का परित्याग कर के इधर-उधर भागते हुए सैनिक वीरों का यह भीषण तुमुलनाद ? ( दूसरी ओर देखकर ) खेद ! धिक्कार !! बड़े दुःख की बात !!! क्या कारण है,—ये कर्णप्रभृति महारथचारी योद्धा रणस्थली की ओर से भागते हुए चले आ रहे हैं ? जिस सैन्य के मेरे पिता सेनानायक हों उसकी यह दशा ? कुछ कारण ध्यान में नहीं आरहा है । अच्छा इन्हें यहीं रोक रखता हूँ । अयि, अयि, कौरवीय-सैन्यसिन्धुतटमर्यादापालनसमर्थ, विशाल पर्वतसदृश शूरवीर राजाओं बस, बस, यह रण-

नरपतयः, कृतं कृतममुना समरपरित्यागसाहसेन।

यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम्।
अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः कुरुध्वे ॥ ६ ॥

अपि च।

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे

---

अन्वय—समरम्, अपास्य, (गच्छत.) मृत्योः, भयम्, न, अस्ति, इति यदि (तर्हि) इतः, अन्यतः, प्रयातुम्, युक्तम्, अथ, जन्तोः, मरणम्, अवश्यमेव, किमिति, मुधा, यशः, मलिनम्, कुरुध्वे ॥ ६ ॥

समरपरित्यागो न कर्तव्य इत्यत्र हेतुमाह—यदि समरमपास्येति।

समरम्=सङ्ग्रामम्, अपास्य=त्यक्त्वा, गच्छतस्तवेतिशेषः मृत्यो.=मरणाद्, भयम्, नास्ति, इति यदि (तर्हि) इतः=सङ्ग्रामात्, अन्यतः=अन्यत्र, प्रयातुं=गन्तुम्, युक्तम्, अथ=तदभावपक्षे, जन्तोः=प्राणिनः, मरणम्=मृत्युः, अवश्यमेव=ध्रुवमेव, किमिति=कस्य हेतोः, मुधा=व्यर्थम्, यशः=कीर्तिम्, मलिनम्=मलीमसम्, कुरुध्वे=सम्पादयध्वे। पूर्वसञ्चितयशोरक्षणार्थमपि समरेऽवतरत यूयमिति भावः। पुष्पिताग्रा छन्दः। अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेतिलक्षणात्॥ ६ ॥

अन्वयः—अस्त्रज्वालावलीढप्रतिबलजलधेः, अन्तः, और्वायमाणे, सर्वधन्वीश्वराणाम्, गुरौ, अस्मिन्, मम, पितरि, सेनानाथे, स्थिते, (सति) हे कर्ण, सम्भ्रमेण, अलम्, हे कृप, समरम्, व्रज, हार्दिक्यशङ्काम्, मुञ्च, रणधुराम्, वहति, चापद्वितीये, ताते, (सति) भयस्य, क, अवकाशः ॥ ७ ॥

तव भयं सम्भवत्यपि नेत्याह—अस्त्रज्वालेति।

अस्त्रज्वालावलीढप्रतिबलजलधे.=अस्त्रज्वालया अवलीढः आस्वादितः प्रतिबलजलधि. युधिष्ठिरसैन्यसमुद्रः तस्य, अन्तः=मध्ये, और्वायमाणे=और्वो वडवानलः स इवाचरन् तस्मिन्, और्वायमाणे, 'कर्तुः क्यङ् सलोपश्चे'ति क्यङ् प्रत्ययः ततो लट स्थाने शानच्। सर्वधन्वीश्वराणाम्=निखिलधनुर्धराधिपानाम्, गुरौ=श्रेष्ठे, अस्मिन्,

---

विमुख होने की धृष्टता हो चुकी।

यदि रण छोड़ देने से किसी दूसरे स्थान पर मृत्यु की आशङ्का न हो तो (युद्धक्षेत्र का परित्याग कर) अन्यत्र भाग जाना उचित है। यदि जीवों की मृत्यु अवश्यम्भावी है तो फिर व्यर्थ ही कीर्ति को क्यों कलङ्कित कर रहे हो? ॥ ६ ॥

हे कर्ण, दिव्य शस्त्रों की ज्वालासे व्याप्त विपक्षिसेनारूपी समुद्र के अन्तस्तल में वडवाग्नि

सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं सम्भ्रमेण व्रज कृप समरं मुञ्च हार्दिक्यशङ्कां
ताते चापद्वितीये वहति रणधुरां को भयस्यावकाशः ॥ ७ ॥

( नेपथ्ये । )

कुतोऽद्यापि ते तातः ।

अश्वत्थामा—( श्रुत्वा । ) किं ब्रूथ—'कुतोऽद्यापि ते तातः' इति । ( सरोषम् । ) आः क्षुद्राः भीरवः, कथमेवं प्रलपतां वः सहस्रधा न दीर्ण-मनया जिह्वया ।

---

मम, पितरि = जनके द्रोणे, सेनानाथे = सैन्यपतौ, स्थिते सति, हे कर्ण = राधेय, सम्भ्रमेण = उद्वेगेन, अलम् = व्यर्थम्, हे कृप, समरं, व्रज = गच्छ, हार्दिक्यशङ्कां = हृदयजातसन्देह मुञ्च = त्यज, रणधुरां = सङ्ग्रामस्य भार वहति धारयति, शतृ-प्रत्ययान्तमिदम् । चापद्वितीये = गृहीतचापे, ताते = पितरि द्रोणे सति, भयस्य = भीतेः, कोऽवकाशः । भयस्य न सम्भावनेतिभावः । अत्र, और्वायमाणे इत्यत्रोप-मालङ्कारः । चतुर्थचरणे काव्यलिङ्गम् स्रग्धरा छन्दः ॥ ७ ॥

नेपथ्ये = जवनिकान्तर्भूमौ, ।

कुत इति—तव तातो मृत इति भावः । वः = युष्माकम्, एवम् = कुतोऽद्यापि ते तात इति, प्रलपतां = कथयताम्, अनया, जिह्वया = रसनया, कथं, न, सह-स्रधा = सहस्रकृत्वः, दीर्णम् = विदीर्णम् ।

---

की भाँति अपनी ज्वाला से सन्तप्त करते हुए, सेनानायक के पदपर स्थित, सब धनुर्धारियों में श्रेष्ठ मेरे पिता [ द्रोणाचार्य ] की उपस्थिति में अब अधिक भय की कोई आवश्यकता नहीं। ऐ कृपाचार्य, सङ्ग्राम में जाइये। ऐ कृतवर्मन्, किसी प्रकार का सन्देह न कीजिए। धनुष के साथ मेरे पिता के हाथ में जब तक रण का भार है तबतक भय के लिए अवसर ही कहाँ हो सकता है ? ॥ ७ ॥

( नेपथ्य में )

आज तुम्हारे पिता कहाँ ?

अश्वत्थामा—( सुनकर ) क्या कहते हो—'आज तुम्हारे पिता कहाँ ?' (क्रुद्ध होकर) -अरे नीच कायरपुरुषो ! इस जिह्वा से इस प्रकार की वाणी निकालते हुए तुम लोगोंकी जिह्वा असंख्य टुकड़े होकर क्यों नहीं गिर जाती ? ( क्योंकि )

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥ ८ ॥

अन्वय — विश्वम्, दग्धुम्, दहनकिरणैः, द्वादश, अर्काः न, उदिताः, सप्त, वाताः, सप्तधा, भिन्नाः, दिशि दिशि, न, वा, वाताः, पुष्करावर्तकाद्यैः, मेघैः, गगनतलं, न छन्नं, ( तदा ) हे पापाः, शौर्यराशेः, मे, पितुः, पापं, कथं, कथयत ॥ ८ ॥

मम तातस्य साम्प्रतं न मृत्युकाल इत्याह—दग्धुं विश्वमिति ।

विश्वं = लोकं, दग्धुं = भस्मसात् कर्तुम्, दहनकिरणैः = दाहकरश्मिभिः, द्वादशार्काः = द्वादशसूर्याः, न उदिताः = उदयं प्राप्ताः, प्रलयकाले धातृमित्रार्यमादयः सूर्या उदिता भवन्ति ते च साम्प्रतं न सन्ति तथा च कल्पान्तपर्यन्तस्थायिनो मम तातस्य कथं मृत्युः स्यादिति भावः । सप्त, वाताः = वायवः, सप्तधा भिन्नाः सन्तः, दिशि दिशि न, वा, वाताः = अवहन्, श्वसनादयएकोनपञ्चाशद्वाताः प्रलयकालिका न वाता इति भावः । पुष्करावर्तकाद्यैः = प्रलयकालिकैः, पुष्करादिनामकैः, मेघैः = जलदैः, गगनतलम् = आकाशमण्डलम्, न, छन्नम् = आच्छादितम्, अन्तर्भावितण्यर्थः । तदा, हे पापाः = पापिनः, मे = मम, शौर्यराशेः = शूरतासमूहस्य पराक्रमिण इत्यर्थः । पितुः = जनकस्य, पापं = मृत्युम्, कथं, कथयत = ब्रूत । प्रलयलक्षणाभावात् मम पितुः न मृत्युः सम्भवतीत्याकूतम् । मन्दाक्रान्ता छन्दः ॥ ८ ॥

बारहो सूर्य अपनी अग्निमयी किरणों से अखिलविश्व को भस्म कर देने के लिये उदित नहीं हुए हैं। प्रतिदिशाओं में उनचासो प्रकार के वायु तो प्रबलवेग से नहीं चल रहे हैं। पुष्करावर्तक मेघों से आकाश मण्डल भी नहीं आच्छादित है फिर अरे पापियों, महान् पराक्रमशाली मेरे पिता के लिए यह पापमयी वार्ता क्यों कह रहे हो ? अर्थात् प्रलयकाल का इस समय कोई भी लक्षण प्रतीत नहीं हो रहा है—न तो भगवान भास्कर अपनी सम्पूर्ण कला से उदित हुए हैं और न झञ्झावात ही, जो प्रलय काल के समय ही वहा करते हैं, चलरहे हैं अथवा घोरवर्षा करके संसार को प्रलयजलधि में निमग्न करा देने के लिए आकाश में मेघमण्डल भी नहीं विचरते हैं फिर प्रलयकाल के कोई भी लक्षण न मिलने से इसकी सम्भावना ही नहीं की जासकती तो फिर पिताके विषय में यह सम्भावना हो ही नहीं सकती क्यों कि पिता के वीर्य और पराक्रम के समक्ष इस सृष्टि के अन्तर्गत कोई ऐसी शक्ति नहीं है जो उन्हें अन्तिम दशा को पहुँचासके यदि है भी तो वह प्रलय काल, क्योंकि उसमें एक ईश्वर के अतरिक्त कोई नहीं बच सकता ॥ ८ ॥

( प्रविश्य सम्भ्रान्तः सप्रहारः । )

सूत—परित्रायतां परित्रायतां कुमारः । ( इति पादयो पतति । )

अश्वत्थामा—( विलोक्य । ) अये, कथं तातस्य सारथिरश्वसेनः । आर्य, ननु त्रैलोक्यत्राणक्षमस्य सारथिरसि । किं मत्तः परित्राणमिच्छसि ।

सूत —( सकरुणम् । ) कुतोऽद्यापि ते तातः ।

अश्वत्थामा—( सावेगम् । ) किं तातो नामास्तमुपगतः ।

सूतः—अथ किम् ।

अश्वत्थामा—हा तात, ( इति मोहमुपगत । )

सूत —कुमार, समाश्वसिहि समाश्वसिहि ।

अश्वत्थामा—( लब्धसंज्ञः सास्रम् । ) हा तात, हा सुतवत्सल, हा लोकत्रयैकधनुर्धर, हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन् , क्वासि ? प्रयच्छ मे प्रतिवचनम् ।

---

द्रोणस्य सूत आह—परित्रायतामिति ।

त्रैलोक्यत्राणक्षमस्य = लोकत्रयरक्षणसमर्थस्य ।

सूतमुखात् कुतोद्यापि ते तात इति श्रुत्वा पितुः मृत्यु निश्चित्याह—किं तात इति । अस्तं = विनाशम् , उपगतः = प्राप्तः ।

मोहं = मूर्च्छाम् , अश्वत्थाम्नः मूर्च्छा जातेति भावः ।

लब्धसज्ञः = प्राप्तचैतन्यः, विगतमूर्च्छ इत्यर्थः । जामदग्न्येति—जामदग्न्यस्य यदस्त्र तदेव सर्वस्वं तस्य यः प्रतिग्रहः आदान तत्र प्रणयी स्निग्धः तत्सम्बोधने । प्रतिवचनम् = उत्तरम् , प्रयच्छ = देहीत्यन्वयः ।

---

( व्याकुल सूत का प्रवेश । शस्त्राघातसे उसका शरीर जर्जर हो गया है )

सूत—कुमार, रक्षा कीजिए, रक्षा कीजिए ( चरणों पर गिर पड़ता है )

अश्वत्थामा—(देखकर) अरे ! यह मेरे पिताके सारथि अश्वसेन कहाँ से ? आर्य, आर्य तीनों लोकों के रक्षामें समर्थ मेरे पिताके सारथि हैं । क्या मुझ जैसे बालकसे रक्षा चाहते हैं ?

सूत—( उठकर करुणापूर्वक ) कुमार, अब आज तुम्हारे पिता कहाँ हैं ?

अश्वत्थामा—( वेगपूर्वक ) क्या पिताजी अस्त हो गए ?

सूत—और क्या ?

अश्वत्थामा—हा तात ! हा तात !! ( मूर्च्छित होकर गिर पड़ता है )

सूत—कुमार, धैर्य धरें, धैर्य धरें ।

अश्वत्थामा—( होश में आकर उठ जाता है तथा अश्रुमोचन करता है ) हा पिता, हा

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥ ८ ॥

अन्वय — विश्वम्, दग्धुम्, दहनकिरणैः, द्वादश, अर्काः न, उदिताः, सप्त, वाताः, सप्तधा, भिन्नाः, दिशि दिशि, न, वा, वाताः, पुष्करावर्तकाद्यैः, मेघैः, गगनतलं, न छन्नं. ( तदा ) हे पापाः, शौर्यराशेः, मे, पितुः, पापं, कथं, कथयत ॥ ८ ॥

मम तातस्य साम्प्रतं न मृत्युकाल इत्याह—दग्धुं विश्वमिति ।

विश्वं = लोकं, दग्धुं = भस्मसात् कर्तुम्, दहनकिरणैः = दाहकरश्मिभिः, द्वादशार्काः = द्वादशसूर्याः, न उदिताः = उदयं प्राप्ताः, प्रलयकाले धातृमित्रार्यमादयः सूर्या उदिता भवन्ति ते च साम्प्रतं न सन्ति तथा च कल्पान्तपर्यन्तस्थायिनो मम तातस्य कथं मृत्युः स्यादिति भावः । सप्त, वाता = वायवः, सप्तधा भिन्नाः सन्त, दिशि दिशि न, वा, वाताः = अवहन्, श्वसनादयएकोनपञ्चाशद्वाताः प्रलयकालिका न वाता इति भाव. । पुष्करावर्तकाद्यैः = प्रलयकालिकैः, पुष्करादिनामकैः, मेघैः = जलदैः, गगनतलम् = आकाशमण्डलम्, न, छन्नम् = आच्छादितम्, अन्तर्भावितण्यर्थं । तदा, हे पापाः = पापिनः, मे = मम, शौर्यराशेः = शूरतासमूहस्य पराक्रमिण इत्यर्थः । पितु = जनकस्य, पाप = मृत्युम्, कथं, कथयत = ब्रूत । प्रलयलक्षणाभावात् मम पितुः न मृत्युः सम्भवतीत्याकूतम् । मन्दाक्रान्ता छन्दः ॥ ८ ॥

बारहो सूर्य अपनी अग्निमयी किरणों से अखिलविश्व को भस्म कर देने के लिये उदित नहीं हुए है । प्रतिदिशाओं में उनचासो प्रकार के वायु तो प्रबलवेग से नहीं चल रहे हैं । पुष्करावर्तक मेघों से आकाश मण्डल भी नहीं आच्छादित है फिर अरे पापियों, महान् पराक्रमशाली मेरे पिता के लिए यह पापमयी वार्ता क्यों कह रहे हो ? अर्थात् प्रलयकाल का इस समय कोई भी लक्षण प्रतीत नहीं हो रहा है—न तो भगवान भास्कर अपनी सम्पूर्ण कला से उदित हुए हैं और न झञ्झावात ही, जो प्रलय काल के समय ही वहा करते हैं, चलरहे हैं अथवा घोरवर्षा करके संसार को प्रलयजलधि में निमग्न करा देने के लिए आकाश में मेघमण्डल भी नहीं विचरते हैं फिर प्रलयकाल के कोई भी लक्षण न मिलने से इसकी सम्भावना ही नहीं की जासकती तो फिर पिताके विषय में यह सम्भावना हो ही नहीं सकती क्यों कि पिता के वीर्य और पराक्रम के समक्ष इस सृष्टि के अन्तर्गत कोई ऐसी शक्ति नहीं है जो उन्हें अन्तिम दशा को पहुँचासके यदि है भी तो वह प्रलय काल, क्योंकि उसमें एक ईश्वर के अतरिक्त कोई नहीं बच सकता ॥ ८ ॥

सूत—कथमेवं भविष्यति ।

अश्वत्थामा—गोविन्देन सुदर्शनस्य निशितं धारापथं प्रापितः

सूत—एतदपि नास्ति ।

अश्वत्थामा—शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ॥ ९ ॥

सूत—कुमार,

एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति सङ्ख्ये ।

अन्तेवासिदयालुः=अन्तेवासिनि दयाकर्त्ता, एतेन अर्जुनस्योपरि दयया शस्त्रप्रहारो न कृतः अतएव तस्य द्रोणस्य मृत्युरित्याशयः । आसादितः=हतः, किमिति अत्रापि सम्बध्यते ।

एवम्=अर्जुनेन मृत्युः, कथं भविष्यति । अर्जुनो न हन्तेतिभावः ।

गोविन्देन कृष्णेन, सुदर्शनस्य=तन्नामकचक्रस्य, निशित=तीक्ष्णम्, धारापथम्=शस्त्रस्याग्रभागम् ( धार ) इति प्रसिद्धम् । प्रापितः=गमितः, मारित इत्यर्थः ।

इदमपि नेत्याह=एतदपीति ।

एभ्यः=गोविन्दभीमार्जुनेभ्यः, चतुर्थात्, अन्यतः=परस्मात्, गुरोः=द्रोणस्य, आपद=मृत्युम्, अहः न, शङ्के=सन्देह्मि, खलु, एभ्योऽतिरिक्तः तस्य हन्ता न कोऽपि सम्भवति तथा च कथं मृत्युरिति भावः शार्दूलविक्रीडित छन्दः ॥ ९ ॥

अन्वय—सङ्ख्ये, धूर्जटेः, इव, महास्त्रपाणे कुपितस्य, तस्य, एते, अपि किम्, तुलाम्, उपयान्ति । यदा, तु, शोकोपरुद्धहृदयेन, शस्त्रम्, त्यक्तम्, तदा, अस्य, रिपुणा, अतिघोरम्, विहितम् ॥ १० ॥

गृहीतशस्त्रस्य तस्य एतेऽपि हन्तारः न सम्भवन्तीत्याह—एतेऽपीति ।

सङ्ख्ये=सङ्ग्रामे, धूर्जटेः=महादेवस्य, इव, महास्त्रपाणेः=महास्त्र पाणौ यस्य तस्य, कुपितस्य=क्रुद्धस्य, तस्य=द्रोणस्य, एते = कृष्णभीमार्जुनाः, अपि, किं, तुलां =सादृश्यम्, उपयान्ति = प्राप्स्यन्ति । तु = किन्तु, यदा, शोकोपरुद्धहृदयेन=

सूत—यह कैसे सम्भव है ?

अश्वत्थामा—क्या भगवान वासुदेव ने सुदर्शन चक्र के धार के घाट पार उतारा है ?

सूत—यह भी नहीं ।

अश्वत्थामा—इन तीनों के अतिरिक्त किसी चौथे व्यक्ति से मेरे पिता के वध की आशङ्का मुझे होती ही नहीं ॥ ९ ॥

सूत—कुमार,

ये तीनों भी एक साथ मिलकर क्रुद्ध महास्त्रपाणि शङ्कर भगवान की तरह युद्ध में उनकी

सूत—कुमार, अलमत्यन्तशोकावेगेन। वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि तदनुरूपेणैव वीर्येण शोकसागरमुत्तीर्य सुखी भव।

अश्वत्थामा—(अश्रूणि विमुच्य।) आर्य, कथय कथय कथ तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपगतः।

किं शिष्याद् गुरुदक्षिणा गुरुगदां भीमप्रियः प्राप्तवान्

सूतः—शान्त पापम्।

अश्वत्थामा—अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना।

---

वीरपुरुषोचितां = शूरपुरुषयोग्यां, विपत्तिं = मृत्युम्।

तादृग्भुजवीर्यसागर = तादृक् सर्वलोकवेद्य भुजवीर्यं बाहुपराक्रमः सागर इव यस्य सः।

अन्वय.— भीमप्रियः शिष्यात्, गुरुगदाम्, गुरुदक्षिणाम्, किम्, प्राप्तवान्, उज्झितनयेन, जिष्णुना, अन्तेवासिदयालु, आसादितः, किम्, गोविन्देन, सुदर्शनस्य, निशितम्, धारापथम्, प्रापितः, (किम्) एभ्यः, चतुर्थात्, गुरोः, आपदम्, अहं, न शङ्के॥

श्लोकरूपेण अश्वत्थामा पितृघातिविषयकप्रश्नमाह—किं शिष्यादिति।

भीमप्रिय. = भीमः प्रियो यस्य सः, द्रोण इत्यर्थ.। शिष्यात् = भीमात्, गुरुगदां = भीषणगदाम्, गुरुदक्षिणां = गुरुगदारूपां गुरुदक्षिणामित्यर्थः। किं प्राप्तवान्, किमिति प्रश्ने।

शान्त पापमिति—इदम् अवक्तव्ये उच्यते। इदन्न वक्तव्यमित्यर्थः। भीमगदा न प्राप्तेति भाव।

उज्झितनयेन = उज्झित त्यक्त, नयः नीतिः येन तेन, जिष्णुना = अर्जुनेन,

---

पुत्रप्रिय, हा त्रिलोक में एकमात्र धनुर्धर, हो परशुराम से साङ्गोपाङ्गशस्त्रविद्याऽध्ययनकर्ता, कहाँ हैं? मुझे उत्तर दीजिए।

सूत—चिरजीविन्, अधिक शोक न करें। पिता के शूरवीरोपयुक्तगति प्राप्त करलेने पर आप भी उन्हीं के सदृश पराक्रम से शोकसिन्धु का उल्लङ्घन कर सुख प्राप्त कीजिए।

अश्वत्थामा—( आँसू पोंछकर ) आर्य! कहिए, कहिए किस प्रकार ऐसे बाहुपराक्रम के सिन्धु पिता अस्त हो गए?।

क्या भीमप्रिय ( तात ) ने शिष्य से गुरुदक्षिणा में भीषण गदाप्रहार प्राप्त किया है?

सूत—शान्त, शान्त, पाप की चरचा न कीजिए [ अर्थात् ऐसा नहीं हो सकता ]

अश्वत्थामा—क्या शिष्य पर दया रखनेवाले पिता पर अर्जुन ने नीति का विचार न करके आक्रमण कर दिया?

शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥ ११ ॥

अश्वत्थामा—हा तात, हा सुतवत्सल, हा वृथामदर्थपरित्यक्तजीवित, हा शौर्यराशे, हा शिष्यप्रिय, हा युधिष्ठिरपक्षपातिन्,

( इति रोदिति । )

सूत—कुमार, अलमत्यन्तपरिदेवनया कार्पण्येन ।

अश्वत्थामा—

श्रुत्वा वधं मम मृषा सुतवत्सलेन
तात त्वया सह शरैरसवो विमुक्ताः ।

---

=दयितः प्रियः, तनयः यस्य सः, असौ=द्रोणः, आजौ=सङ्ग्रामे, शस्त्राणि, नयनसलिलम्=नेत्रजलम्, चापि, तुल्यम्=समकालम्, मुमोच=तत्याज । अय भावः भीमेन समराद्वेगेन निःसारितेऽश्वत्थाम्नि समरेऽश्वत्थामा मृत इति कलकले सति चिरजीविनस्तस्य मरणासम्भवात् द्रोणेन पृष्टः सत्यवक्ता युधिष्ठिरः कृष्णमन्त्रणया अश्वत्थामनामकगजमरणव्याजेनाब्रोचत् अश्वत्थामा हत इति ततः पुत्रशोकतप्तद्रोणः शस्त्रं तत्याजेति । मन्दाक्रान्ता छन्दः ॥ ११ ॥

वृथामदर्थपरित्यक्तजीवित=व्यर्थं मदर्थं परित्यक्तं जीवितम् प्राणाः येन । युधिष्ठिरपक्षपातिन्=युधिष्ठिरे विश्वस्त ।

परिदेवनया=विलापेन, कार्पण्येन=कादर्य्येण, विलापहेतुकं कार्पण्यमिति भावः ।

अन्वय.—( हे ) तात ! मम, मृषा, वधम्, श्रुत्वा, सुतवत्सलेन, त्वया, शरैः, सह, असवः, विमुक्ताः, अहो, अहम्, पुनः, भवता, विना, अपि, जीवामि, तव, क्रूरे, अपि, मयि, तव, मुधा, पक्षपातः ॥ १२ ॥

नाहं स्नेहपात्रमित्याह—श्रुत्वेति ।

हे तात=पितः, मम, मृषा=मिथ्या, वध=हननम्, श्रुत्वा, सुतवत्सलेन=पुत्रस्निग्धेन, 'स्निग्धस्तु वत्सलः' इत्यमरः । त्वया=द्रोणेन, शरैः=बाणैः, सह,

---

पुत्रवत्सल उन्होंने उस राजा युधिष्ठिर में विश्वास के कारण रण में अश्रुपात के साथ साथ शस्त्रों का परित्याग कर दिया ॥ ११ ॥

अश्वत्थामा—हाय, पित, पुत्रवत्सल ! मेरे लिए आपने व्यर्थ प्राण परित्याग किया ! हा, पराक्रम के सागर, हा शिष्य के प्रेमी, हा युधिष्ठिर के पक्षपाती ! ……( रोता है )

सूत—अब अधिक विलाप करके रोने की आवश्यकता नहीं ।

अश्वत्थामा—ऐ पित, पुत्रवत्सल आपने मेरे मरणके विषय में असत्य संवाद सुनकर बाणों के साथ साथ अपने प्राणों का परित्याग कर दिया और मैं आप के अनुपस्थिति में भी जीवित हूं, मुझ कुटिल में आपका इतना पक्षपात [ मोह ] व्यर्थ है ।

शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदाऽस्य विहितं रिपुणाऽतिघोरम् ॥ १० ॥

अश्वत्थामा—किं पुनः कारणं शोकस्यास्त्रपरित्यागस्य वा ।

सूतः—ननु कुमार एव कारणम् ।

अश्वत्थामा—कथमहमेव नाम ।

सूतः—श्रूयताम् । ( अश्रूणि विमुच्य । )

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा ।
तच्छ्रुत्वाऽसौ दयिततनयः प्रत्ययात्तस्य राज्ञः

---

शोकेन उपरुद्धं हृदयं यस्य तेन द्रोणेन, शस्त्रं, त्यक्तं, तदा, अस्य = द्रोणस्य, रिपुणा = शत्रुणा, अतिघोरं = विनाशम्, विहितं = सम्पादितम्, अस्त्रपरित्यागे कृते रिपुणा हतो द्रोण इति भावः । अत्रोपमालङ्कारः । वसन्ततिलका छन्दः ॥ १० ॥

अश्रूणि = नेत्राम्बूनि, विमुच्य = प्रोञ्छ्य ।

अन्वय—सत्यवाचा, पृथासूनुना, अश्वत्थामा हत इति, स्पष्टम्, उक्त्वा, शेषे, गज इति, स्वैरम्, व्याहृतम्, किल, तत्, श्रुत्वा, तस्य, राज्ञः, प्रत्ययात्, दयिततनयः, असौ, आजौ, शस्त्राणि, नयनसलिलम् च, अपि, तुल्यम्, मुमोच ॥ ११ ॥

शस्त्रत्यागकारणमाह—अश्वत्थामा हत इति ।

सत्यवाचा = तथ्यवचसा पृथासूनुना = युधिष्ठिरेण अश्वत्थामा हत इति, स्पष्टं = परश्रवणयोग्यम्, इदं वचनक्रियाविशेषणम् । उक्त्वा = कथयित्वा, शेषे = वचनसमाप्तौ, गज इति, इति शब्दः शब्दस्वरूपनिर्देशार्थः । स्वैरं = मन्दम् परश्रवणाऽयोग्यमित्यर्थः, व्याहृतम् = उक्तम्, किल = निश्चयेन, तद् = अश्वत्थामा हत इति, श्रुत्वा = आकर्ण्य, तस्य = सत्यवाचः, राज्ञः, प्रत्ययात् = विश्वासात्, दयिततनयः

---

समानता नहीं कर सकते । जब उनका हृदय शोक से पूर्ण हो गया और उन्होंने शस्त्रपरित्याग कर दिया तब शत्रु ने यह अकार्य कार्य किया अर्थात् इन्हें मारा ॥ १० ॥

अश्वत्थामा—तो शोक का और शस्त्र परित्याग का कारण क्या है ?

सूत—कुमार ही इसके कारण हैं ।

अश्वत्थामा—मैं कैसे ?

सूत—( अश्रुगिरा कर ) सुनिए—

पृथापुत्र [ युधिष्ठिर ] 'अश्वत्थामा मारा गया' यह स्पष्ट रूप से कहकर फिर सत्यभाषी ने धीरे से अवशिष्ट वाक्य की पूर्ति के लिए 'गज = हाथी' यह शब्द कहा । उसे सुनकर

केशग्रहः खलु तदा द्रुपदात्मजाया-
द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥ १३ ॥

तत्कथं नु खलु वत्समद्य द्रक्ष्याम्यश्वत्थामानम् । अथवा हिमवत्सारगुरुचेतसि ज्ञातलोकस्थितौ तस्मिन्न खलु शोकावेगमहमाशङ्के । किंतु पितुः परिभवमसदृशमुपश्रुत्य न जाने किं व्यवस्यतीति । अथवा

एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते ।
केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः ॥ १४ ॥

---

शस्त्रभृत् तान्, शस्त्रे वैफल्य चानुचितकार्यानिवारणात्। भूपतीन् = राज्ञः धिक् अस्मान् = माम् धिक् एते सर्वे निन्दनीया इत्यर्थः। खलु, धिक्कारे हेतुमाह—तदेति। यैः = एतैः पूर्वोक्तैः, तदा, द्रुपदात्मजायाः=द्रौपद्याः, केशग्रहः = कचाकर्षणम्, अद्य, द्रोणस्य च केशग्रहः, लिखितैः = चित्रस्थैः, इव, वीक्षितः = दृष्टः। द्रौपदीकेशाकर्षणे प्रधानहेतोरतिनिन्दनीयत्वात् कुरुपतेः प्राथम्येन निर्देशः। द्रोणस्य केशग्रहे अजातशत्रोः हेतुत्वात् ततः परोऽजातशत्रोर्निर्देशः। दृष्ट्वापि भूपतिभिरनिवारणात् तेषामपि निन्दनीयत्वात् ततः परो निर्देशः। अत्र काव्यलिङ्गमलङ्कारः। वसन्ततिलका छन्दः ॥ १३ ॥

हिमवत्सारगुरुचेतसि=हिमवतः सारमिव गुरु महत् दृढम् चेतः यस्य तस्मिन्, ज्ञातलोकस्थितौ = विदितजगन्मर्यादे, तस्मिन् = अश्वत्थाम्नि, शोकावेगम् = अधिकशोकोद्वेगम्, अहम् न खलु, आशङ्के = सन्देह्मि। किन्तु, पितुः, असदृशम् = अनुचितम्, परिभवम् = मृत्युम्, उपश्रुत्य = ज्ञात्वा, किं, व्यवस्यतीति न जाने इत्यन्वयः।

अन्वयः—एकस्य, अयम्, दारुणः, पाकः, तावद्, भुवि, वर्तते, द्वितीये, अस्मिन् केशग्रहे (सति) प्रजाः, नूनम्, निःशेषिताः ॥ १४ ॥

द्रोणस्य पराभवे सति किं स्यादित्याह—एकस्य तावदिति। एकस्य = द्रौपद्याः केशग्रहस्य, अयं = युद्धरूपः, दारुणः = उत्कटः, पाकः = फलम्, तावत्, भुवि =

---

को धिक्कार है। जिन्होंने चित्र बनकर उस समय पाञ्चाली के केशकर्षण को देखा और आज द्रोणाचार्य के भी केशकर्षण को देखा ॥ १३ ॥

तो फिर पुत्र अश्वत्थामा को कैसे देख सकूँगा अथवा हिमालय के सदृश सारगर्भित उसका अन्तःकरण है तथा संसार की परिस्थिति से वह भली भाँति परिचित है अतः उसमें मुझे सन्ताप के वेग की शङ्का नहीं होती परन्तु अन्यायपूर्वक पिता के मरण को सुनकर न मालूम क्या कर डाले? अथवाः—

एक केशग्रह का यह भीषण फल इस वसुन्धरा पर दृष्टिगोचर हो रहा है, अब इस

जीवाम्यहं पुनरहो भवता विनाऽपि
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः ॥ १२ ॥

( इति मोहमुपगत । )

सूत—समाश्वसितु समाश्वसितु कुमारः ।

( तत प्रविशति कृप । )

कृपः—( सोद्वेगं नि श्वस्य । )

धिक्सानुजं कुरुपतिं धिगजातशत्रुं
धिग्भूपतीन्विफलशस्त्रभृतो धिगस्मान् ।

असवः = प्राणाः, विमुक्ता = त्यक्ताः, अहो इति खेदे अहम् पुनः, भवता, विनापि = अन्तरेणाऽपि, जीवामि, तत् = तस्मात्, क्रूरेऽपि = निर्दयेऽपि, तव सत्यमृत्युश्रवणाद् प्यहं न मृत इति निर्दयोऽहमिति भावः । मयि = अश्वत्थाम्नि, तव, मुधा = व्यर्थम्, पक्षपातः अहं क्रूरः त्वं सदय इति भाव । अत्र द्वितीयचरणे सहोक्तिरलङ्कार । वसन्ततिलका छन्द ॥ १२ ॥

नि श्वस्येति—अधिकदुःखसूचको निःश्वासः ।

अन्वय —सानुजम्, कुरुपतिम्, धिक्, अजातशत्रुम्, धिक्, विफलशस्त्रभृतः, भूपतीन्, धिक्, अस्मान्, धिक्, खलु, ये, तदा, द्रुपदात्मजायाः, अद्य, द्रोणस्य, च, केशग्रहः, लिखितैः, इव वीक्षितः ॥ १३ ॥

तत्रत्याः सर्वे धिक्कारयोग्या इत्याह—धिगिति ।

सानुजम् = अवरजसहितम्, कुरुपतिं = दुर्योधनम्, धिक् = धिक्कारः, 'उभसर्वतसोः कार्याधिगुपर्यादिषु त्रिष्विति' धिग्योगे द्वितीया । अजातशत्रुं = युधिष्ठिरम्, धिक्, विफलशस्त्रभृतः = विफलञ्च तत् शस्त्रमिति विफलशस्त्र तद् बिभर्ति, विफल-

अर्थात् वस्तुत मेरा वध नहीं हुआ था उसे सुनकर आपने प्राण विसर्जित कर दिया और मैं सत्य ही आप का मरण सुनरहा हूँ और फिर भी जीवित हूँ मुझ से बढकर दूसरा कौन दुष्ट हृदय का व्यक्ति होगा ॥ १२ ॥

( यह कहकर चेतनाहीन हो जाता है )

सूत—कुमार धैर्य धारण करें, धैर्य धारण करें ।

( इसके अनन्तर कृपाचार्य का प्रवेश )

कृप—( उद्विग्नतापूर्वक दीर्घ श्वास लेकर )

समस्त भ्राताओं के साथ कौरवनरेश को धिक्कार है, जिसका आज तक कोई शत्रु नहीं उस युधिष्ठिर को धिक्कार है, निष्प्रयोजन शस्त्रधारण करने वाले राजाओं को तथा हम लोगों

त्सर्वं तदेकपद एव कथं निरस्तम् ॥ १५ ॥

सूत—कुमार, एष ते मातुलः पार्श्वे शारद्वतस्तिष्ठति ।

अश्वत्थामा—( पार्श्वे विलोक्य । सबाष्पम् । ) मातुल,

गतो येनाद्य त्वं सह रणभुवं सैन्यपतिना
य एकः शूराणा गुरुसमरकण्डूनिकषणः ।
परीहासाश्चित्राः सततमभवन्येन भवतः
स्वसुः श्लाघ्यो भर्ता क नु खलु स ते मातुल गतः ॥ १६ ॥

---

पितरि, एकपदे = एकस्थाने, एव, कथं = कस्माद्धेतोः, निरस्तं = त्यक्तम् । ब्राह्मणे गुरौ एतादृशकरणं मम भाग्यदोषादेव, नान्यथा सम्भवतीति भावः अत्र तृतीयचरणस्थविशेषणानां साभिप्रायकत्वात्परिकरालङ्कार । वसन्ततिलका छन्दः ॥ १५ ॥

मातुलः = मातृभ्राता ।

सबाष्पम् = उष्माश्रुसहितम् ।

अन्वय.—येन, सैन्यपतिना, सह, अद्य, त्वम् , रणभुवम् , गतः, यः, शूराणाम्, एकः गुरुसमरकण्डूनिकषणः, सततम् , चित्राः, परीहासाः, भवतः, येन अभवन् , ( हे ) मातुल ? ते, सः, श्लाघ्यः, स्वसुः भर्ता, क, नु, खलु, गतः ॥ १६ ॥

तवातिप्रियः स्वसृपतिस्त्वाम् विहायैकाकी क्व गत इत्याह—गत इति ।

येन, सैन्यपतिना = सेनानायकेन, सह = साकम् अद्य, त्वं, रणभुवं = सङ्ग्रामस्थानम् , गतः, यः, शूराणाम् = वीराणाम् , एकः, गुरुसमरकण्डूनिकषणः = महासङ्ग्रामकण्डूतिनिवारकः. येन, सततम् = अनारतम् , चित्राः = अनेकरूपाः, परीहासाः = गालिदानादयः, भवतः = कृपस्य, अभवन् , हे मातुल, ते = तव, श्लाघ्यः = प्रशंसनीयः, स्वसुः = भगिन्याः, भर्ता = पतिः, भगिनीपतिरित्यर्थः । सः = द्रोणः क्व = कुत्र, खलु नु गतः । अत्रैकस्यैव द्रोणस्य विषयभेदेन सैन्यपतित्वादिनाऽनेकधोल्लेखादुल्लेखनामालङ्कारः । शिखरिणी छन्दः ॥ १६ ॥

---

पिताजी के विषय में जो उपाध्याय तथा ब्राह्मण-श्रेष्ठ हैं एक ही पद में क्यों अपने सम्पूर्ण गुणों पर पानी फेर दिया है ? ॥ १५ ॥

सूत—कुमार, यह तुम्हारे मामा शारद्वत समीप में उपस्थित हैं ।

अश्वत्थामा—( बगल में देखकर अश्रुत्याग करते हुए ) मामा, मामा,

जिस सेनानायक के साथ आज आप समरभूमि में पधारे थे, जो वीरों के महान समरकण्डू के कण्डूयन में समर्थ एक मात्र वीर थे और जिनके साथ आपका अनेक प्रकार का मनोविनोद हुआ करता था, मामा ! बतलाइये, वही आपके बहिन के पूज्य पतिदेव कहाँ चले गये ? ॥ १६ ॥

( विलोक्य । ) तदयं वत्सस्तिष्ठति । यावदुपसर्पामि । (उपसृत्य ससम्भ्रमम् । ) वत्स, समाश्वसिहि समाश्वसिहि ।

अश्वत्थामा—( संज्ञां लब्ध्वा । सास्रम् । ) हा तात, सकलभुवनैकगुरो, ( आकाशे । ) युधिष्ठिर, युधिष्ठिर,

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः ।
ताते गुरौ द्विजवरे मम भाग्यदोषा-

न्तसारे, न्तते, द्वितीये, अस्मिन् , केशग्रहे द्रोणस्येति शेषः । प्रजाः = जनाः, नूनं = निश्चयेन, 'नूनं तर्केऽर्थनिश्चये' इत्यमरः । निःशेपिताः = विनष्टाः, भविष्यन्तीत्यध्याहारः । महाऽनिष्टस्य महानेव परिणामः स्यादिति भाव. । पथ्यावक्त्रं छन्दः ॥१४॥

संज्ञा = चैतन्यम् , लब्ध्वा = प्राप्य, सास्रम् = अश्रुसहितम् ,

आकाश इति ।

युधिष्ठिराभावेऽपि युधिष्ठिरं प्रति कथयतीति भावः ।

अन्वयः—भवता, आजन्मनः, वितथम् , न उक्तम् , किल, यत् , जनम् , न द्वेक्षि, अत., त्वम् , अजातशत्रुः, तत् , सर्वम् , मम, भाग्यदोषात् द्विजवरे, गुरौ, ( मम ) ताते, एकपदे, एव, कथं, निरस्तम् ॥ १५ ॥

अश्वत्थामा आह—आजन्मन इति ।

भवता = युधिष्ठिरेण । आजन्मन = जन्मप्रभृति, वितथम् = असत्यम् , न, उक्तम्, किल, यत् = यस्मात् , त्वम् , जनम् = लोकम् , न, द्वेक्षि = द्वेपं करोषि, अतः, त्वम् अजातशत्रु, इत्युच्यस इति शेषः । तत् = मिथ्यावदनाभावादि, सर्वम् मम = अश्वत्थाम्नः, भाग्यदोषात् = दैवदोषात् , द्विजवरे = ब्राह्मणे, गुरौ = आचार्ये, ताते=

दूसरे केशग्रह में समस्त प्रजा का सर्वनाश अवश्यम्भावी है, अर्थात् एक द्रौपदी के बाल खींचने के कारण यह दशा उपस्थित हुई अब दूसरे द्रोणके केशग्रह के बाद क्या दशा होगी ॥

(भली प्रकार विचार कर) यह पुत्र अश्वत्थामा बैठा हुआ है । समीप में चलूँ । (समीप जाकर व्याकुलाहटके साथ ) पुत्र, धैर्य धारण करो, धैर्य धारण करो ।

अश्वत्थामा—( चैतन्य होकर अश्रुपूर्ण नेत्रों से ) हा पितः, समस्तलोक के एक मात्र आचार्य ( आकाश की ओर देखकर ) युधिष्ठिर, युधिष्ठिर,

जन्म से लेकर आप ने असत्य भाषण कभी नहीं किया । आप किसी के प्रति द्वेषबुद्धि नहीं रखते हैं इस लिए आप अजातशत्रु कहे जाते हैं । मेरे भाग्यदोष के कारण आपने

कृप —वत्स, यावदयं संसारस्तावत्प्रसिद्धैवेयं लोकयात्रा यत्पुत्रैः पितरो लोकद्वयेऽप्यनुवर्तनीया इति । पश्य—

निवापाञ्जलिदानेन केतनैः श्राद्धकर्मभिः ।
तस्योपकारे शक्तस्त्वं किं जीवन्किमुतान्यथा ॥ १८ ॥

सूतः—आयुष्मन् , यथैव मातुलस्ते शारद्वतः कथयति तत्तथा ।

अश्वत्थामा—आर्य, सत्यमेवेदम् । किंत्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहित क्षणमपि प्राणान्धारयितुम् । तद्गच्छामि तमेवो-द्देशं यत्र तथाविधमपि पितरं द्रक्ष्यामि । (उत्तिष्ठन्खड्गमालोक्य, विचिन्त्य ) कृतमद्यापि शस्त्रग्रहणविडम्बनया । भगवन् शस्त्र ?

---

लोकयात्रा = लोकाचारः, लोकद्वयेऽपि = एतल्लोकपरलोकयोरपि, अनुवर्तनीयाः = अनुसरणीयाः ।

अन्वय.= निवापाञ्जलिदानेन, केतनैः, श्राद्धकर्मभिः, तस्य, उपकारे, त्वम् किम् , जीवन् , शक्त', किम् उत, अन्यथा, (शक्त.) ॥ १८ ॥

त्वयि जीवत्येव तस्योपकारः स्यादित्याह—निवापेति ।

निवापाञ्जलिदानेन = निवापस्य पितृदानस्य य' अञ्जलि. तस्य दानेन, केतनैः= तमुद्दिश्य गृहदानादिभि', श्राद्धकर्मभिः = प्रेतत्वविनाशकवेदोक्तक्रियाभिः, तस्य, पितुः, उपकारे, त्वम् , किमिति प्रश्ने, जीवन् = प्राणन् , शक्त' = समर्थः, किम् , उतेति वितर्के, अन्यथा = जीवनं विना । जीवन्नेवोपकर्तुं शक्नोसि न तु मरणेनातः प्राण-त्यागो न कार्य इति भावः । पथ्यावक्त्रं छन्द' ॥ १८ ॥

इममेवार्थं सूतोऽनुमोदयति—आयुष्मन्निति ।

---

कृप—पुत्र, जबतक यह ससार वर्तमान है तबतक यह लौकिक व्यवहार प्रसिद्ध ही है कि 'पुत्रों का कर्तव्य है कि पितरों का हितसाधक दोनों लोक में बनें। देखिए —

तिलाञ्जलिप्रदान, स्मारक तथा पितरोंके उद्देश से श्राद्धकर्मों के द्वारा उस [ दिवङ्गत ] पिता का उपकार करने में तुम समर्थ हो जब तक कि जीवित हो। प्राणपरित्याग करके क्या कर सकते हो ? ॥ १८ ॥

सूत—चिरञ्जीविन् , तुम्हारे मामा शारद्वत जैसा कहते हैं वैसा ही है।

अश्वत्थामा—आर्य, यह सत्य ही है परन्तु इस शोकभार का वहन करना मेरे लिए असह्य है, मैं पिता से वियुक्त होकर क्षण भर भी जीवन धारण नहीं कर सकता, अतः उसी स्थान पर जा रहा हूँ जहाँ उस दशा में भी पिता का दर्शन करूंगा। ( उठकर कृपाण की ओर देखता है फिर कुछ विचार कर ) अब भी शस्त्र की आवश्यकता ? अर्थात् कोई आवश्यकता नहीं ( अश्रुकलुषित नेत्रों से हाथ जोड कर ) भगवन् , शस्त्र !

कृपः—परिगतपरिगन्तव्य एव भवान्। तदलमत्यन्तशोकावेगेन।

अश्वत्थामा—मातुल, परित्यक्तमेव मया परिदेवितम्। एषोऽहं सुतवत्सलं तातमेवानुगच्छामि।

कृपः—वत्स, अनुपपन्नमीदृशं व्यवसितं भवद्विधानाम्।

सूतः—कुमार, अलमतिसाहसेन।

अश्वत्थामा—आर्य शारद्वत,

मद्वियोगभयात्तातः परलोकमितो गतः।
करोम्यविरहं तस्य वत्सलस्य सदा पितुः॥ १७॥

---

परिगतपरिगन्तव्यः=परिगतः अवगतः परिगन्तव्यः ज्ञातव्यः येन सः।

परिदेवित=प्रलापः, सुतवत्सलं=पुत्रस्नेहिनम्, तातं=पितरम्, अनुगच्छामि=अनुव्रजामि, अहमपि प्राणत्याग करोमीति भावः।

ईदृशम्=त्वया चिन्तितम्, व्यवसितं=व्यवसायः, अनुपपन्नम्=अयुक्तम्, भवद्विधानाम्=वीराणाम्, वीराणामात्मघातो न युक्तः किन्तु प्रतिक्रियैवेतिभावः।

अन्वय—तातः, मद्वियोगभयात्, इतः, परलोकम्, गतः, तस्य वत्सलस्य, पितुः, सदा, अविरहम्, करोमि॥ १७॥

तद्वियोगे मयाऽपि न जीवितव्यमित्याह—मद्वियोगेति।

तातः=पिता, मद्वियोगभयात्=मया सह विरहभीतेः, इतः-अस्माल्लोकात्, परलोकम्=स्वर्गम्, गतः, तस्य वत्सलस्य पितुः, सदा=जीवनपर्यन्तम्, अविरहम्=वियोगाभावम्, करोमि, मम प्राणत्याग एव श्रेष्ठः। क्वचित्सहिष्ये विरहमिति पाठः। अत्र पूर्वार्धे उत्तरार्धो हेतुरिति वाक्यार्थगतकाव्यलिङ्गमलङ्कारः पथ्यावक्त्र छन्दः॥ १७॥

---

कृप—ज्ञातव्य विषयतो आप को विदित हो ही गया। अब अधिक विलाप करने से कोई लाभ नहीं।

अश्वत्थामा—मामा, मैंने विलाप करना छोड़ही दिया। मैं पुत्रप्राण पिता ही का अनुसरण करने जा रहा हूँ।

कृप—आप सदृश व्यक्ति के लिए इस प्रकार के विचार सर्वथा अनुचित हैं।

सूत—कुमार, साहस की यह चरमसीमा है।

अश्वत्थामा—आर्य, शारद्वत, आप क्या कहते हैं?

वियुक्त हो जाने के भयसे मेरे पिता इस लोक से अन्यलोक में प्रस्थान कर गये। उन आदरणीय पिता का वियोग भला मैं किस प्रकार सहन कर सकता हूँ॥ १७॥

भो भो राजानः कथमिह भवन्तः सर्वे गुरोर्भारद्वाजस्य परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते ।

अश्वत्थामा—( आकर्ण्य, शनै शनैः शस्त्रं स्पृशन् ) किं गुरोर्भारद्वाजस्य परिभवः ।

( पुनर्नेपथ्ये । )

आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोका-<br>द्द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य ।<br>मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं<br>धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम् ॥ २० ॥

सर्वे=राजान', गुरो , भारद्वाजस्य=भरद्वाजकुलोत्पन्नस्य, परिभवं=मृत्युम् , अमुना=धृष्टद्युम्नेन, नृशंसेन=घातुकेन, प्रयुक्तम्=सम्पादितम्, उपेक्षन्ते=तिरस्कुर्वन्ति।

शस्त्रम्=आयुधम् स्पृशन्, परिभवः=पराभवः मृत्युरित्यर्थः ।

अन्वय —आजौ, न्यस्तशस्त्रस्य; त्रिभुवनगुरोः, शोकात्, नयनसलिलक्षालितार्द्राननस्य, आचार्यस्य, द्रोणस्य, पलितधवले, मौलौ, पाणिम्, न्यस्य, नृशंसम्, कृत्वा, अयम्, धृष्टद्युम्न, स्वशिबिरम्, याति, ( तत् ) सर्वे, सहध्वम् ॥ २० ॥

आततायी धृष्टद्युम्नो याति परं कोऽपि किमपि न कथयतीत्याह–आचार्यस्येति ।

आजौ=संग्रामे, न्यस्तशस्त्रस्य=त्यक्तास्त्रस्य, त्रिभुवनगुरोः=त्रैलोक्यश्रेष्ठस्य, शोकात्, नयनसलिलक्षालितार्द्राननस्य=नयनसलिलेन करणभूतेन क्षालितम् आर्द्राननं येन तस्य, आचार्यस्य, द्रोणस्य, पलितधवले=जरया शुक्लकेशेन स्वच्छे, मौलौ=मस्तके, पाणिं=हस्तम्, न्यस्य=संस्थाप्य, नृशंसं=हननम्, कृत्वा, अयं धृष्टद्युम्न.=द्रुपदपुत्रः, स्वशिबिरं=स्वसैन्यनिवासस्थानम् तदित्यध्याहार. । सर्वे=

अरे राजाओ, क्षत्रियवंश के आचार्य भरद्वाजकुलोत्पन्न श्रीसम्पन्न द्रोणाचार्य जी के इस अनुचित वध को ( केशकर्षणपूर्वक वध को ) जो इस हत्यारे धृष्टद्युम्न के द्वारा किया गया है, किस प्रकार-आप लोग उपेक्षा कर रहे हैं ?

अश्वत्थामा—( सुनकर क्रोध के आवेश में होकर धीरे २ शस्त्र का स्पर्श करता हुआ ) क्यों, क्या आचार्य द्रोण का वध ?

( फिर नेपथ्य में )

पुत्रशोक के कारण निरस्त्र, त्रिलोक के उपाध्याय आचार्य द्रोण के, जिनका मुखमण्डल अश्रुजल से प्रक्षालित होकर भींग गया था, बुढ़ापे से धवलित केशयुक्त शिर पर हाथ लगा कर यह धृष्टद्युम्न क्रूरकर्म करके अपने शिविर ( पड़ाव ) को चला जा रहा है और तुम लोग देख रहे हो ॥ २० ॥

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्नतु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥ १९ ॥

( इत्युत्सृजति । )

( नेपथ्ये । )

अन्वय —येन, परिभवभयात्, नोचितम्, अपि, गृहीतम्, आसीः, यस्य, प्रभावात्, कश्चित्, तव, नविषयः न, खलु, आसीत्, तेन, सुतशोकात्, नतु, भयात्, त्वम्, परित्यक्तम्, असि, ( हे ) शस्त्र ?, अहम्, अपि, त्वाम्, विमोक्ष्ये, यतः, भवते, स्वस्ति, अस्तु ॥ १९ ॥

शस्त्रग्रहण न कार्यं मयेत्याह—गृहीतं येनासीरिति । येन = द्रोणेन, परिभवभयात् = पराजयभयात्, नोचितम् = अनुचितम्, निषेधार्थक-न-शब्देन समासः तेन नलोपो न । ब्राह्मणेन शस्त्रं न ग्राह्यमित्यनौचित्यम् । गृहीतम् = आत्तम्, आसीः, त्वमिति शेषः । यस्य = द्रोणस्य, प्रभावात् = माहात्म्यात्, कश्चित्, तव= शस्त्रस्य, नविषयः = अगोचरः न, खलु, आसीत्, सर्वो विषय एवासीदित्यर्थः । तेन, सुतशोकात् = पुत्रमरणजन्यदुःखात्, तु = किन्तु, भयात्, न, त्वम् = शस्त्रम्, परित्यक्तम् = उज्झितम्, असि, हे शस्त्र, अहमपि, त्वाम्, विमोक्ष्ये = त्यजामि, यतः, भवते = शस्त्राय, स्वस्ति = शुभम्, अस्तु इति शेषः । तव कल्याणार्थं मयाऽपि त्यक्तमिति भावः । शस्त्रत्याग नाटयतीत्यर्थः । अत्र तृतीयचरणे परिसङ्ख्याऽलङ्कारः । शिखरिणी छन्दः ॥ १९ ॥

नेपथ्ये = जवनिकान्तर्भूमौ ।

ब्राह्मणजाति के लिये 'शस्त्रग्रहण' आपद्धर्म माना गया है अतः अनुचित होते हुए भी जिन्हों ने ( द्रोणाचार्य ने ) अपने पराभव की आशङ्का से शस्त्र ग्रहण किया था और जिसके प्रभाव से कोई ऐसा देव, दानव और मनुष्यों में नहीं हुआ जो तुम्हारा लक्ष्य न बना हो । उनके [ पिताजी के ] द्वारा पुत्रशोक के कारण न कि किसी प्रकार के भय के कारण तुम परित्यक्त हुए हो । मैं भी तुम्हारा त्याग कर रहा हूँ अब आपका कुशल हो ॥ १९ ॥

( शस्त्रत्याग करता है )

( नेपथ्य में )

सूत—( सभयम्। ) कुमार, आसीदयं तस्य तेजोराशेर्देवस्य नवः परिभवावतारः।

अश्वत्थामा—हा तात, हा पुत्रप्रिय, मम मन्दभागधेयस्य कृते शस्त्र-परित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः। अथवा—

परित्यक्ते देहे रणशिरसि शोकान्धमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत्।
असंख्यातास्त्रौघद्रविणमदमत्तस्य च रिपो-
र्ममैवाय पादः शिरसि निहितस्तस्य न करः॥ २२॥

---

परिभवावतारः = अनादरोत्पत्ति.।

अन्वय—शोकान्धमनसा, रणशिरसि, देहे, परित्यक्ते, श्वा, काकः, वा, द्रुपद-तनय', वा, शिर, परिमृशेत्, असख्यातास्त्रौघद्रविणमदमत्तस्य, रिपोः, च, मम, एव शिरसि, अयम्, पादः, निहित, तस्य करः, न,॥ २२॥

न तस्यानादरः कृत. किन्तु ममैवेत्याह—परित्यक्ते देहे रणशिरसीति।

शोकान्धमनसा = शोकेन अन्धम् उद्विग्नं कृत्याकृत्यविवेकशून्यमित्यर्थः, मनः यस्य तेन, रणशिरसि = प्रधान सग्रामे, देहे, परित्यक्ते = परित्यक्तुमारब्धे 'आदि-कर्मणि' इति क्तप्रत्ययः। श्वा = कुक्कुरः, काकः = ध्वांक्ष', वा, द्रुपदतनयः = धृष्टद्युम्नः, वा, शिर. = मस्तकम्, परिमृशेत्, कोऽपि परिमृशत्वित्यर्थः। असंख्यातास्त्रौघद्रवि-णमदमत्तस्य = असख्यातः अगणित. शस्त्रौघः शस्त्रसमूह. स एव द्रविणं तज्जन्यो यो मदः तेन मत्तस्य, रिपो. = शत्रो', च, ममैव, शिरसि अयं पादः = चरणः, निहितः = दत्तः, तस्य कर. न। तस्य करो द्रोणस्य शिरसि न तेन निहितः किन्तु मम

---

सूत—( डरता हुआ ) कुमार, शौर्यराशि आप के पिता के तिरस्कार का सर्वप्रथम यह अवसर था।

अश्वत्थामा—हा पित, हा सुत वत्सल, मुझ हतभाग्य के निमित्त शस्त्रपरित्याग के कारण उस दुरात्मा के द्वारा आप अपमानित हुए हैं ( सोच कर ) अथवा—

शोक से सन्तप्तहृदय होकर समराङ्गण के बीच शरीर का परित्याग करने पर शिर को चाहे कुत्ता, कौवा अथवा द्रुपदपुत्र धृष्टद्युम्न स्पर्श करे। अगणित शस्त्रास्त्रराशि के धन से मदोन्मत्त शत्रु के मस्तक पर मेरा यह चरण विना किसी वात के विचार के रक्खा हुआ ही है अर्थात् पिता के शोकविह्वल हो जाने के कारण निरस्त्र की दशा में वध कर देने पर चाहे शिर को जो छुए और द्रुपदपुत्र ने केवल हाथ से स्पर्श किया है अव मैं असख्य शस्त्रास्त्रों से सुसज्जित शत्रु के शिर पर पादप्रहार करके ही प्रतिशोध करूंगा॥ २२॥

(सक्रोधं सकम्पं च कृपसूतौ दृष्ट्वा।) किं नामेदम्।

प्रत्यक्षमात्तधनुषां मनुजेश्वराणां प्रायोपवेशसदृशं व्रतमास्थितस्य।
तातस्य मे पलितमौलिनिरस्तकाशे व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः ॥२१॥

कृप—वत्स, एवं किल जनः कथयति।

अश्वत्थामा—किं तातस्य दुरात्मना परिमृष्टमभूच्छिरः।

---

सैनिका, सहध्वम्, एतादृशोऽन्याचारी धृष्टद्युम्नो याति पर केऽपि किमपि न कुर्वन्तीतिभावः। मन्दाक्रान्ता छन्द ॥ २० ॥

अन्वय—आत्तधनुषाम्, मनुजेश्वराणाम्, प्रत्यक्षम्, प्रायोपवेशसदृशम्, व्रतम्, आस्थितस्य, मे, तातस्य, अशस्त्रपाणेः, पलितमौलिनिरस्तकाशे, शिरसि, शस्त्रम्, व्यापारितम् ॥ २१ ॥

किं त्यक्तशस्त्रस्य पितुरुपरि प्रहारः कृत इत्याह—प्रत्यक्षमिति।

आत्तधनुषां = गृहीतचापानाम्, मनुजेश्वराणां = राज्ञाम्, प्रत्यक्षम् = साक्षात्, प्रायोपवेशसदृशम् = प्रायः अनशन तदर्थम् उपवेशः तत्सदृशम् 'प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोरिति' विश्वः। व्रत = नियमम्, आस्थितस्य = गृहीतस्य, इदं तातस्य विशेषणम्। मे = मम, तातस्य = पितुः, अशस्त्रपाणेः = शस्त्रशून्यहस्तस्य, एतेन शस्त्रप्रहारस्य योग्यता नास्तीति सूचितम्। पलितमौलिनिरस्तकाशे = पलितैः शुक्लैः, मौलिभिः बद्धकेशैः निरस्तः तिरस्कृतः काशः स्वच्छतृणविशेषः येन तस्मिन्, शिरसि=मूर्द्धनि, शस्त्रम्, व्यापारितम्=प्रहारः कृत। शस्त्रधारिणां राज्ञां समीपे त्यक्तशस्त्रस्य पितुरुपरि यत् प्रहारः कृत तदनुचितम्। राज्ञां च रक्षणं समुचितम्, तदपि तैर्न कृतमितिभावः। अत्र तृतीयचरणे आर्थोपमाऽलङ्कारः। वसन्ततिलका छन्दः॥

प्रश्नोत्तरमाह—एव किल जनः कथयतीति।

दुरात्मना = दुष्टेन, धृष्टद्युम्नेन, तातस्य शिरः, परिमृष्ट = स्पृष्टं, किमभूत्, किमिति प्रश्ने।

---

(क्रोध और कम्प के साथ कृप और सूत को देखकर) क्यों यह बात? धनुर्धर नरेशों के देखते देखते जो आमरण अनशन व्रत के अनुरूप व्रत धारी, मेरे पिता के, जिनके हाथ में कोई भी शस्त्र नहीं था, शिर पर, जिसके केश काश कुसुम के सदृश धवल थे, शस्त्र प्रहार किया है॥ २१॥

कृप—पुत्र, लोग इस प्रकार कहते हैं।

अश्वत्थामा—(सूत से) क्या पिताजी का शिर उस दुरात्मा के द्वारा पकड़ा गया था?

सूत—( सभयम् । ) कुमार, आसीदयं तस्य तेजोराशेर्देवस्य नवः परिभवावतारः ।

अश्वत्थामा—हा तात, हा पुत्रप्रिय, मम मन्दभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः । अथवा—

परित्यक्ते देहे रणशिरसि शोकान्धमनसा
शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत् ।
असंख्यातास्त्रौघद्रविणमदमत्तस्य च रिपो-
र्ममैवायं पादः शिरसि निहितस्तस्य न करः ॥ २२ ॥

---

परिभवावतारः=अनादरोत्पत्तिः ।

अन्वय.—शोकान्धमनसा, रणशिरसि, देहे, परित्यक्ते, श्वा, काकः, वा, द्रुपदतनयः, वा, शिर., परिमृशेत्, असंख्यातास्त्रौघद्रविणमदमत्तस्य, रिपोः, च, मम, एव शिरसि, अयम्, पादः, निहित, तस्य कर, न, ॥ २२ ॥

न तस्यानादरः कृतः किन्तु ममैवेत्याह—परित्यक्ते देहे रणशिरसीति ।

शोकान्धमनसा=शोकेन अन्धम् उद्विग्न कृत्याकृत्यविवेकशून्यमित्यर्थः, मनः यस्य तेन, रणशिरसि=प्रधान सग्रामे, देहे, परित्यक्ते=परित्यक्तुमारब्धे 'आदिकर्मणि' इति क्तप्रत्ययः । श्वा=कुक्कुर', काकः=ध्वाक्ष', वा, द्रुपदतनयः=धृष्टद्युम्नः, वा, शिर=मस्तकम्, परिमृशेत्, कोऽपि परिमृशत्वित्यर्थः । असंख्यातास्त्रौघद्रविणमदमत्तस्य=असंख्यातः अगणित. शस्त्रौघ शस्त्रसमूह. स एव द्रविणं तज्जन्यो यो मद. तेन मत्तस्य, रिपोः=शत्रो, च, ममैव, शिरसि अयं पादः=चरणः, निहितः =दत्तः, तस्य करः न । तस्य करो द्रोणस्य शिरसि न तेन निहितः किन्तु मम

---

सूत—( डरता हुआ ) कुमार, शौर्यराशि आप के पिता के तिरस्कार का सर्वप्रथम यह अवसर था ।

अश्वत्थामा—हा पित', हा सुत वत्सल, मुझ हतभाग्य के निमित्त शस्त्रपरित्याग के कारण उस दुरात्मा के द्वारा आप अपमानित हुए है ( सोच कर ) अथवा—

शोक से सन्तप्तहृदय होकर समराङ्गण के बीच शरीर का परित्याग करने पर शिर को चाहे कुत्ता, कौवा अथवा द्रुपदपुत्र धृष्टद्युम्न स्पर्श करे । अगणित शस्त्रास्त्रराशि के धन से मदोन्मत्त शत्रु के मस्तक पर मेरा यह चरण बिना किसी बात के विचार के रक्खा हुआ ही है अर्थात् पिता के शोकविह्वल हो जाने के कारण निरस्त्र की दशा में वध कर देने पर चाहे शिर को जो छुए और द्रुपदपुत्र ने केवल हाथ से स्पर्श किया है अब मैं असख्य शस्त्रास्त्रों से सुसज्जित शत्रु के शिर पर पादप्रहार करके ही प्रतिशोध करूगा ॥ २२ ॥

नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २४ ॥

कृप'—वत्स, किं न सम्भाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति ।

अश्वत्थामा—भो भोः पाण्डवमत्स्यसोमकमागधेयाः क्षत्रियापसदाः,

पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना

ष्येवं कृतं धृष्टद्युम्नेन तथापि अनुमत्यादिनैषामपि निर्मर्य्यादत्वमितिभावः । उदायुधैः= उत्थितशस्त्रैः, एतेन वधनिवारणसामर्थ्यं दर्शितम् । भवद्भिः धृष्टद्युम्नादिभिः, इदं= सम्प्रति विहितम्, गुरुपातकम्=ब्राह्मणगुरुवधजन्यब्रह्महत्यारूपं महापातकम् कृतम्, अनुमतम् = अभिप्रेतम्, दृष्ट्वा, नरकरिपुणा = कृष्णेन, सार्धं सभीमकिरीटिनाम् = भीमार्जुनसहितानाम्, तेषाम् असृङ्मेदोमांसैः=रुधिरवपाऽमिषैः अयमहम्, दिशां= दिग्देवतानाम्, बलिम्, उपहारम् । कटोपहारयो. पुंसि बलि. प्राण्यङ्गजे स्त्रियामित्यमरः । करोमि । युद्धे सर्वान्हनिष्यामीत्यर्थः । हरिणी छन्द' ॥ २४ ॥

दिव्यास्त्रग्रामकोविदे = दिव्यास्त्रस्य ग्राम' समूहः तत्र कोविदः प्राज्ञः तस्मिन् ।

क्षत्रियापसदा. = राजन्याधमाः ।

अन्वय —पितु', मूर्ध्नि, स्पृष्टे, ज्वलदनलभास्वत्परशुना, रामेण, यत्, कृतम्, तत्, भवताम्, श्रुतिम्, न, उपगतम्, किम्, क्रोधान्ध. अश्वत्थामा, अद्य, अरिरुधिरासारविवसम्, तत्, कर्म, रणमुखे, विधातुम्, किम्, न प्रभवति ॥ २५ ॥

·क्षत्रियेण पितृशिरसश्छेदने ब्राह्मणपरशुरामेण त्रिसप्तकृत्वः पृथ्वी क्षत्रियरहिताऽकारीति किं त्वया न श्रुतं तथैव चाहं करिष्यामीत्याह—पितुरिति ।

अथवा शस्त्र-सम्पन्न होते हुए भी प्रत्यक्ष अवलोकन किया है, वासुदेव, भीम और अर्जुन के साथ साथ उनके मास, मज्जा और रुधिरादिक से मैं दिक्पालों को बलि वितरण कर दूँगा ॥

कृप—हे वत्स, भारद्वाज (आचार्य द्रोण) के अनुरूप भुजावाले तथा दिव्यास्त्रों के समुदायों के विशेषज्ञ आप के लिए यह सम्भावना क्या नहीं की जा सकती ?

**अश्वत्थामा**—अरे, अरे, पाण्डव, मत्स्य, सोमक, मागधादि क्षत्रियपामरो !

प्रज्वलन्त अग्नि की ज्वाला सदृश प्रकाशमान परशुअस्त्रधारी राम ने अर्थात् (१)जमदग्निकुमार ने अपने पिता के शिर. स्पर्श करने पर अर्थात् शिर छेदन के अनन्तर जो

(१) परशुराम जमदग्नि ऋषि के पुत्र भगवान् नारायण के अवतार थे । इन की माता का नाम रेणुका था । गाजीपुर जिले के अभ्यन्तर जमानिया इन की जन्मभूमि है । एक वार सहस्रार्जुन नाम का राजा आखेट के उपरान्त इन के पिता के आश्रम का अतिथि

कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम् ।
किमद्याश्वत्थामा तदरिरुधिरासारविघसं
न कर्म क्रोधान्धः प्रभवति विधातुं रणमुखे ॥ २५ ॥

सूत, गच्छ त्वं सर्वोपकरणैः साङ्ग्रामिकैः सर्वायुधैरुपेतं महाहवलक्षणं नामास्मत्स्यन्दनमुपनय ।

सूतः—यदाज्ञापयति कुमारः ( इति निष्क्रान्तः । )

---

पितुः=परशुरामस्य पितुः जमदग्नेः, मूर्ध्नि=उत्तमाङ्गे स्पृष्टे, हैहयवंशजेनेति शेषः । ज्वलदनलभास्वत्परशुना=ज्वलन् योऽनलः अग्निः स इव परशुः तेन करणेन, रामेण, परशुरामेण यत्, कृतम्, तत्, भवताम्=क्षत्रियाणाम् श्रुतिम्=कर्णम्, न, उपगतम्=प्राप्तम्, किम् । क्रोधान्धः=कोपनः, अश्वत्थामा=द्रोणपुत्रः, अद्य, अरिरुधिरासारविघसम्=अरीणां रुधिरस्य य आसारः धारासपातः महावृष्टिरित्यर्थः स विघस इव भोजनशेषसदृशः तृप्तिकरः, तत् कर्म=सर्वक्षत्रियहननरूपम्, रणमुखे=प्रधानसङ्ग्रामे, विधातुम्=कर्तुम्, किं न, प्रभवति । परशुरामेण पितुर्विनाशेन यथा सर्वक्षत्रियवधः कृतः तथाऽहमपि पितुर्विनाशेन सर्वासां पाण्डवचमूनां वधं करिष्यामीत्यर्थः । शिखरिणी छन्दः ॥ २५ ॥

साङ्ग्रामिकः=सङ्ग्रामे साधुः । स्यन्दनम्=रथम् ।

---

कुछ कर डाला है वह क्या आप लोगों को श्रुतिगोचर नहीं हुआ है क्या ? अर्थात् सुन ही चुके हो आज क्या यह अश्वत्थामा क्रोध के आवेश में होकर समरस्थली में उन शत्रुओं के रक्तधार से तर्पण रूप कार्य्यसम्पादन करने में समर्थ नहीं हो सकता ? अर्थात् अवश्य समर्थ हो सकता है ॥ २५ ॥

ऐ सूत, जाओ युद्धसम्बन्धी सभी सामग्रियों से युक्त 'महाहवलक्षण' नामक मेरा रथ लाओ ।

सूत—जो कुमार की आज्ञा । ( चला जाता है )

---

हुआ । इन के पिता ने कामधेनु के प्रसाद से उन का राजोचित सत्कार किया । आश्चर्य्य चकित होकर सहस्रबाहु ने उन के इस प्रकार के ऐश्वर्य्य का कारण पूछा ; उन्हों ने कामधेनु को बतलाया । उसने कामधेनु को लेना चाहा परन्तु ऋषि ने नहीं दिया, अत एव उस राजा ने उन का वध कर डाला । उस समय परशुराम आश्रम में नहीं थे । उन की माता रेणुकाने २१ बार छाती पीट कर उन्हें बुलाया था अतः उन्होंने २१ बार क्षत्रियों के नाश की प्रतिज्ञा कर के हैहयवंश के क्षत्रियों का वध किया ॥

नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २४ ॥

कृपः—वत्स, किं न सम्भाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति ।

अश्वत्थामा—भो भोः पाण्डवमत्स्यसोमकमागधेयाः क्षत्रियापसदाः,

पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना

---

यदेवं कृतं धृष्टद्युम्नेन तथापि अनुमत्याऽदिनैषामपि निर्मर्यादत्वमितिभावः । उदायुधैः= उत्थितशस्त्रैः, एतेन वधनिवारणसामर्थ्यं दर्शितम् । भवद्भिः धृष्टद्युम्नादिभिः, इदं= सम्प्रति विहितम्, गुरुपातकम्=ब्राह्मणगुरुवधजन्यब्रह्महत्यारूपं महापातकम् कृतम्, अनुमतम् = अभिप्रेतम्, दृष्ट्वा, नरकरिपुणा = कृष्णेन, सार्धं सभीमकिरीटिनाम् = भीमार्जुनसहितानाम्, तेषाम् असृङ्मेदोमांसैः=रुधिरवपाऽमिषैः अयमहम्, दिशा= दिग्देवतानाम्, बलिम्, उपहारम् । कटोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियामित्यमरः । करोमि । युद्धे सर्वान्हनिष्यामीत्यर्थः । हरिणी छन्दः ॥ २४ ॥

दिव्यास्त्रग्रामकोविदे = दिव्यास्त्रस्य ग्रामः समूहः तत्र कोविदः प्राज्ञः तस्मिन् ।

क्षत्रियापसदाः = राजन्याधमाः ।

अन्वयः—पितुः, मूर्ध्नि, स्पृष्टे, ज्वलदनलभास्वत्परशुना, रामेण, यत्, कृतम्, तत्, भवताम्, श्रुतिम्, न, उपगतम्, किम्, क्रोधान्धः अश्वत्थामा, अद्य, अरिरुधिरासारविघसम्, तत्, कर्म, रणमुखे, विधातुम्, किम्, न प्रभवति ॥ २५ ॥

क्षत्रियेण पितृशिरसश्छेदने ब्राह्मणपरशुरामेण त्रिसप्तकृत्वः पृथ्वी क्षत्रियरहिताऽकारि किं त्वया न श्रुतं तथैव चाहं करिष्यामीत्याह—पितुरिति ।

ते किमनेनापकृतम् । अथ वा किमनेनालीकप्रकृतिजिह्मचेतसा । अर्जुन, सात्यके, बाहुशालिन्वृकोदर, माधव, युक्त नाम भवतां सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्यमानमुत्तमाङ्गमुपेतम् । अथवा सर्व एवैते पातकिनः । किमेतैः ।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।

---

मिथ्यास्वभाव. तया जिह्मं कुटिलं चेतः यस्य तेन, बाहुशालिन्—बृहद्भुजवन्, वृकोदर=भीम, सुरेति–सुराश्च असुराश्च मनुजाश्च तेषां लोका. तत्रैको यो धनुर्धरः तस्य सर्वलोकश्रेष्ठवीरस्येत्यर्थ । द्विजन्मनः=ब्राह्मणस्य, परिणतवयसः=वृद्धस्य । मनुजपशुना=मनुज. पशुरिव तेन । 'उपमितं व्याघ्रादिभि,रिति समासः । उत्तमाङ्गं=शिरः, उपेतम्=उपेक्षितम् । सर्वे=अर्जुनादय., पातकिनः=पापवन्तः । तेषां द्रष्टृत्वादितिभावः ।

अन्वय —यैः, मनुजपशुभिः, निर्मर्य्यादैः, उदायुधैः, भवद्भिः, इदम्, गुरुपातकम्, कृतम्, अनुमतम्, दृष्टम्, वा, नरकरिपुणा; सार्द्धम्, सभीमकिरीटिनाम्, असृग्मेदोमांसैः, अयमहम्, दिशाम्, बलिम्, करोमि ॥ २४ ॥

पापकारणमेवाह—कृतमनुमतमिति ।

यै. मनुजपशुभि.=पशुतुल्यमनुष्यैः, उपमितसमासः । निर्मर्य्यादैः=युद्धमर्यादामतिक्रान्तै., युद्धे हि मर्यादा यच्छस्त्रधारिणैव सह योद्धव्य तच्चात्र नास्ति । यद्य-

---

पिता ने ) तुम्हारे भाइयों का और तुम्हारा क्या अपकार किया है ? अथवा असत्यप्रकृति के कारण कुटिल चित्तवाले से क्या प्रयोजन ? अर्जुन ! अर्जुन !, सात्यकि ! सात्यकि !!, ऐ प्रचण्डभुजशाली वृकोदर ! ( भीम ) माधव ! ( श्री कृष्ण ) क्या आप लोगों को उचित था कि—'देव, दानव, और मानवों के बीच एक मात्र धनुर्धर, ब्राह्मण, वृद्ध, तथा सबके आचार्य ( गुरु ) मेरे पिता का शिर इस द्रुपदवंश के कलङ्क मनुष्य के रूप में साक्षात् पशु धृष्टद्युम्न के द्वारा स्पर्श किये जाते समय उपेक्षा करें । अथवा ये सबके सब पापमूर्ति हैं । इन सबों से कहना ही क्या ?

जिन मनुष्यपशुओं ने मर्यादा की सीमा का विच्छेद करके इस ब्रह्महत्यारूप (१) महापातक को स्वयं सम्पादित किया है, अथवा उसके लिए अनुमति प्रदान किया है;

(१) ब्राह्मण, गुरु, स्त्री, बालक, गोत्र तथा निरस्त्र पुरुषों के वध को महापातक कहते हैं ।

आः दुरात्मन्पाञ्चालापसद ?

नात शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु विदधतः पाणिमस्योत्तमाङ्गे ।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ॥ २३ ॥

युधिष्ठिर, युधिष्ठिर, अजातशत्रो, अमिथ्यावादिन् , धर्मपुत्र, सानुजस्य

---

शिरसि तस्य पादः पतितः, मम जीवितत्वात् पितुश्च मृतत्वादिति भावः । अत्र दुर्नयचरणे रूपकमलङ्कारः । शिखरिणी छन्दः ॥ २२ ॥

पाञ्चालापसद = पाञ्चालकुलाधम । आः, इति खेदे ।

अन्वय —शस्त्रग्रहणविमुखम् , तातम् , निश्चयेन, उपलभ्य, शङ्काम् त्यक्त्वा, अस्य, उत्तमाङ्गे, पाणिम् , विदधतः, ते पाण्डुपाञ्चालसेनातूलोत्क्षेपप्रलपवनः, करधृतधनुः, अश्वत्थामा, स्मृतिम् , कि न, यातः, खलु ॥ २३ ॥

वीरोऽहं त्वया कि न स्मृत इत्याह—तात शस्त्रग्रहणेति ।

शस्त्रग्रहणविमुख = शस्त्रग्रहणे पराङ्मुखम् , तात, निश्चयेन = ध्रुवेण, उपलभ्य = प्राप्य, शङ्काम् = मां हनिष्यतीति सन्देह, त्यक्त्वा = विहाय, अस्य = अशस्त्रस्य, उत्तमाङ्गे = शिरसि, उत्तमाङ्ग इत्यनेन महाननर्थः कृत इति सूचितम् । पाणिं, = हस्तम् , विदधतः=कुर्वतः स्थापयत इत्यर्थः । ते=तव, पाण्डुपाञ्चालसेनातूलोत्क्षेपप्रलयपवन.= पाण्डुपाञ्चालनृपाणां या सेना सैव तूलानि तेषाम्, उत्क्षेपे उत्क्षेपणे प्रलयपवनः प्रलयकालिको वायु', करधृतधनु. = हस्तधृतचाप. अश्वत्थामा, स्मृतिं = स्मरणम् , किं न, यात., खलु अश्वत्थाम्न. स्मृतिस्त्वया कार्येति भाव. । युष्माक सर्वेषां हननं विधास्यामीत्याकूतम् । अत्र परम्परितरूपकमलङ्कारः । मन्दाक्रान्ता छन्दः ॥ २३ ॥

अमिथ्यावादिन् = सत्यवक्त , सानुजस्य = सावरजस्य, ते,-अनेन = मत्पित्रा, किम् , अपकृतम् । अनेन = युधिष्ठिरेण, अलीकप्रकृतिजिह्मचेतसा = अलीकप्रकृतिः

---

अरे ! दुष्ट, पामर धृष्टद्युम्न !

'पिता जी निरस्त्र हैं' इस बात को पूर्णतया निश्चय करके नि शङ्क भाव से उनके शिर पर हाथ लगाते हुए तुझे क्या हाथ में धनुष धारण किए हुए अश्वत्थामा, जो पाण्डव और तुम्हारी सेना रूपी कर्पास (रुई) राशि को उडा देने में प्रलयकालीन झञ्झावात के अनुरूप है, स्मरण में नहीं आया ? अर्थात् जिस समय यह निन्दित कार्य तूने किया उस समय तुझे मेरी शक्ति याद नहीं आई क्या ? ॥ २३ ॥

युधिष्ठिर ! युधिष्ठिर !' अजातशत्रु, सत्यभाषी और धर्मराज के पुत्र ! उन्होंने ( मेरे

कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम् ।
किमद्याश्वत्थामा तदरिरुधिरासारविघसं
न कर्म क्रोधान्धः प्रभवति विधातु रणमुखे ॥ २५ ॥

सूत, गच्छ त्वं सर्वोपकरणैः साङ्ग्रामिकैः सर्वायुधैरुपेतं महाहवलक्षणं नामास्मत्स्यन्दनमुपनय ।

सूत —यदाज्ञापयति कुमारः ( इति निष्क्रान्त । )

---

पितुः=परशुरामस्य पितुः जमदग्नेः, मूर्ध्नि=उत्तमाङ्गे स्पृष्टे, हैहयवंशजेनेति शेष.। ज्वलदनलभास्वरपरशुना=ज्वलन् योऽनलः अग्नि स इव परशुः तेन करणेन, रामेण, परशुरामेण यत्, कृतम्, तत्, भवताम्=क्षत्रियाणाम् श्रुतिम्=कर्णम्, न, उपगतम्=प्राप्तम्, किम्। क्रोधान्ध.=कोपनः, अश्वत्थामा=द्रोणपुत्रः, अद्य, अरिरुधिरासारविघसम्=अरीणां रुधिरस्य य आसारः धारासपातः महावृष्टिरित्यर्थः स विघस इव भोजनशेषसदृशः तृप्तिकरः, तत् कर्म=सर्वक्षत्रियहननरूपम्, रणमुखे=प्रधानसङ्ग्रामे, विधातुम्=कर्तुम्, किं न, प्रभवति। परशुरामेण पितुर्विनाशेन यथा सर्वक्षत्रियवधः कृतः तथाऽहमपि पितुर्विनाशेन सर्वासां पाण्डवचमूनां वधं करिष्यामीत्यर्थः। शिखरिणी छन्द ॥ २५ ॥

साङ्ग्रामिकः=सङ्ग्रामे साधुः। स्यन्दनम्=रथम्।

---

कुछ कर डाला है वह क्या आप लोगों को श्रुतिगोचर नहीं हुआ है क्या ? अर्थात् सुन ही चुके हो आज क्या यह अश्वत्थामा क्रोध के आवेश में होकर समरस्थली में उन शत्रुओं के रक्तधार से तर्पण रूप कार्य्यसम्पादन करने में समर्थ नहीं हो सकता ? अर्थात् अवश्य समर्थ हो सकता है ॥ २५ ॥

ऐ सूत, जाओ युद्धसम्बन्धी सभी सामग्रियों से युक्त 'महाहवलक्षण' नामक मेरा रथ लाओ।

सूत—जो कुमार की आज्ञा। ( चला जाता है )

---

हुआ। इन के पिता ने कामधेनु के प्रसाद से उन का राजोचित सत्कार किया। आश्चर्य्य चकित होकर सहस्रबाहु ने उन के इस प्रकार के ऐश्वर्य्य का कारण पूछा ; उन्हों ने कामधेनु को बतलाया। उसने कामधेनु को लेना चाहा परन्तु ऋषि ने नहीं दिया, अत एव उस राजा ने उन का वध कर डाला। उस समय परशुराम आश्रम में नहीं थे। उन की माता रेणुकाने २१ बार छाती पीट कर उन्हें बुलाया था अत: उन्होंने २१ बार क्षत्रियों के नाश की प्रतिज्ञा कर के हैहयवश के क्षत्रियों का वध किया ॥

नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २४ ॥

कृप—वत्स, किं न सम्भाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति ।

अश्वत्थामा—भो भोः पाण्डवमत्स्यसोमकमागधेयाः क्षत्रियापसदाः,
पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना

-प्येवं कृतं धृष्टद्युम्नेन तथापि अनुमत्यादिनैषामपि निर्मर्य्यादत्वमितिभावः । उदायुधैः= उत्थितशस्त्रैः, एतेन वधनिवारणसामर्थ्यं दर्शितम् । भवद्भिः धृष्टद्युम्नादिभिः, इदं= सम्प्रति विहितम्, गुरुपातकम्=ब्राह्मणगुरुवधजन्यब्रह्महत्यारूपं महापातकम् कृतम्, अनुमतम् = अभिप्रेतम्, दृष्टं वा, नरकरिपुणा = कृष्णेन, सार्धं सभीमकिरीटिनाम् = भीमार्जुनसहितानाम्, तेषाम् असृङ्मेदोमांसैः=रुधिरवपाऽमिषैः अयमहम्, दिशा= दिग्देवतानाम्, बलिम्, उपहारम् । करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियामित्यमरः । करोमि । युद्धे सर्वान्हनिष्यामीत्यर्थः । हरिणी छन्दः ॥ २४ ॥

दिव्यास्त्रग्रामकोविदे = दिव्यास्त्रस्य ग्रामः समूहः तत्र कोविदः प्राज्ञः तस्मिन् ।

क्षत्रियापसदाः = राजन्याधमाः ।

अन्वय—पितुः, मूर्ध्नि, स्पृष्टे, ज्वलदनलभास्वत्परशुना, रामेण, यत्, कृतम्, तत्, भवताम्, श्रुतिम्, न, उपगतम्, किम्, क्रोधान्धः अश्वत्थामा, अद्य, अरिरुधिरासारदिवसम्, तत्, कर्म, रणमुखे, विधातुम्, किम्, न प्रभवति ॥ २५ ॥

क्षत्रियेण पितृशिरसश्छेदने ब्राह्मणपरशुरामेण त्रिसप्तकृत्वः पृथ्वी क्षत्रियरहिताऽकारीति किं त्वया न श्रुतं तथैव चाहं करिष्यामीत्याह—पितुरिति ।

अथवा शस्त्र-सम्पन्न होते हुए भी प्रत्यक्ष अवलोकन किया है, वासुदेव, भीम और अर्जुन के साथ साथ उनके मांस, मज्जा और रुधिरादिक से मैं दिक्पालों को बलि वितरण कर दूँगा ॥

कृप—हे वत्स, भारद्वाज ( आचार्य द्रोण ) के अनुरूप भुजावाले तथा दिव्यास्त्रों के समुदायों के विशेषज्ञ आप के लिए यह सम्भावना क्या नहीं की जा सकती ?

अश्वत्थामा—अरे, अरे, पाण्डव, मत्स्य, सोमक, मागधादि क्षत्रियपामरो !

प्रज्वलन्त अग्नि की ज्वाला सदृश प्रकाशमान परशुअस्त्रधारी राम ने अर्थात् (१)जमदग्निकुमार ने अपने पिता के शिर स्पर्श करने पर अर्थात् शिर छेदन के अनन्तर जो

(१) परशुराम जमदग्नि ऋषि के पुत्र भगवान् नारायण के अवतार थे । इन की माता का नाम रेणुका था । गाजीपुर जिले के अभ्यन्तर जमानिया इन की जन्मभूमि है । एक बार सहस्रार्जुन नाम का राजा आखेट के उपरान्त इन के पिता के आश्रम का अतिथि

कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षमं परिपन्थीभवितुं किं पुनर्यौधिष्ठिरबलम् । तदेवं मन्ये परिकल्पिताभिषेकोपकरणः कौरवराजो नचिरात्त्वामेवाभ्यपेक्षमाणस्तिष्ठतीति ।

अश्वत्थामा—यद्येवं त्वरते मे परिभवानलदह्यमानमिदं चेतस्तत्प्रतीकारजलावगाहनाय । तदहं गत्वा तातवधविषण्णमानसं कुरुपतिं सैनापत्यस्वयंग्रहणप्रणयसमाश्वासनया मन्दसन्तापं करोमि ।

कृपः—वत्स, एवमिदम् । अतस्तमेवोद्देशं गच्छावः ।

( इति परिक्रामत । )

( ततः प्रविशत कर्णदुर्योधनौ । )

दुर्योधन —अङ्गराज,

---

परिपन्थीभवितुम् = शत्रूभवितुम् 'दस्युशात्रवशत्रव' । अभिघातिपरारातिप्रत्यर्थिपरिपन्थिन' इत्यमरः । परिकल्पिताभिषेकोपकरणः = परिकल्पितं सङ्गृहीतं अभिषेकोपकरण येन सः, कौरवराज' = दुर्योधन , नचिरात् = शीघ्रम् , अभ्यपेक्षमाणः = प्रतीक्षमाण. ।

सैनापत्यस्वयङ्ग्रहणप्रणयसमाश्वासनया = सैनापत्यस्य यत्स्वयमेव ग्रहणम् तद्रूपप्रणय. तेन या समाश्वासना आश्वास तया ।

अङ्गराज. = अङ्गदेशानां राजा कर्ण., । 'राजाह सखिभ्यष्टजि' ति टच प्रत्ययः ।

---

आप सदृश पुरुष के कवचादि के धारण कर लेने पर तीनों लोक भी शत्रु बनने में समर्थ नहीं हो सकता फिर पाण्डवीय सेना की क्या कथा ? अत एव ऐसा समझ कर अभिषेकसामग्री एकत्रित कर के कौरवनरेश [ सुयोधन ] कब से आपकी प्रतीक्षा कर रहे हैं ?

**अश्वत्थामा**—यदि यह बात है तो अपमान की ज्वाला से भस्म होता हुआ मेरा चित्त उस के प्रतिकार ( बदला ) रूप जल में प्रवेश करने के लिये व्याकुल हो रहा है । अत. मैं जाकर पिता के वध से खिन्न मन हुए कुरुराज के शोक को सेनानायक के पद को स्वय ग्रहण करने की याच्ञा रूप आश्वासन से, न्यून करूगा अर्थात् स्वय जाकर सेनापति का भार वहन करूगा और उन्हें कहना न पडेगा इस से उन का शोक कम हो जायगा ।

**कृप**—वत्स, बहुत ठीक । अत' उस स्थान पर चलना चाहिये ।

( दोनों चल पड़ते हैं )

( इस के अनन्तर कर्ण और दुर्योधन का प्रवेश ) ।

**दुर्योधन**—अङ्गराज !

कृपः—वत्स, अवश्यप्रतिकर्तव्येऽस्मिन्दारुणे निकाराग्नौ सर्वेषामस्माकं कोऽन्यस्त्वामन्तरेण शक्तः प्रतिकर्तुम् । किंतु ।

अश्वत्थामा—किमतः परम् ।

कृप—सैनापत्येऽभिषिच्य भवन्तमिच्छामि समरभुवमवतारयितुम् ।

अश्वत्थामा—मातुल, परतन्त्रमिदमकिंचित्करं च ।

कृपः—वत्स, न खलु परतन्त्रं नाकिञ्चित्करं च । पश्य ।

भवेदभीष्ममद्रोणं धार्तराष्ट्रबलं कथम् ।
यदि तत्तुल्यकक्षोऽत्र भवान्धुरि न युज्यते ॥ २६ ॥

---

अवश्यप्रतिकर्तव्ये = अवश्यं प्रतिक्रियायोग्ये, निकाराग्नौ=परिभवाग्नौ, त्वामन्तरेण = त्वद्विना प्रतिकर्तुम् = प्रतिक्रियां कर्तुम् ।

अकिञ्चित्करम् = शून्यप्रयोजनम् , सैनापत्येऽभिषेचनं व्यर्थमिति भावः ।

अन्वय—यदि, तत्तुल्यकक्षः भवान् अत्र, धुरि, न युज्यते, ( तदा ) अभीष्मम्, अद्रोणम् , कथम् ( समर्थम् , भवेत् ) ॥ २६ ॥

वीरे त्वयि सति कथं वीरसेनापतिशून्यं सैन्य स्यादित्याह—भवेदिति ।

यदि, तत्तुल्यकक्षः = ताभ्यां भीष्मद्रोणाभ्यां तुल्या कक्षा यस्य सः, भवान्, अत्र, धुरि = सैनापत्यरूपधुरायाम् , न, युज्यते = युक्तो भवति, यत्तदोर्नित्यसाकाङ्क्षत्वात् तदा, अभीष्मम् , अद्रोणम् , धृतराष्ट्रबलम् = धृतराष्ट्रसैन्यम् समर्थम् , कथम् , भवेत् न कथमपि युद्धयोग्यं भवेदित्यर्थः । त्वं सैनापत्येऽवश्यमभिषेक्तव्य इति भावः । पथ्यावक्त्रं छन्दः ॥ २६ ॥

---

कृप—हे पुत्र, हम सब लोगों के इस दारुण परिभव ( अपमान ) रूप अग्नि का प्रतीकार करना तो अत्यावश्यक था परन्तु तुम्हारे सिवा और कौन व्यक्ति प्रतिशोध करने में समर्थ हो सकता है ? [ किन्तु ] ।

अश्वत्थामा—तो फिर 'किन्तु' क्या ?

कृप—सेनानायक के पद पर तुम्हारा अभिषेक करके रणभूमि में ले जाना चाहता हूँ ।

अश्वत्थामा—मामा, यह अपने अधिकार से बाहर है और कोई लाभ भी नहीं ।

कृप—पुत्र, न तो यह अपने अधिकार के बाहर है और न व्यर्थ है । देखोः—

भीष्म और द्रोणाचार्य के अभाव में यह कौरवीय सेना कैसे रह सकती है यदि उन के पराक्रमसदृशपराक्रमशाली तुम उस सैन्यसञ्चालन के भार में नियुक्त न किये जाओ ॥२६॥

दुर्योधन —कथं तर्हि ।

कर्ण —एवं किलास्याभिप्रायो यथाऽश्वत्थामा मया पृथिवीराज्येऽभिषेक्तव्य इति । तस्याभावाद्वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रहणमिति तथा कृतवान् ।

दुर्योधन —( सशिरःकम्पम् । ) एवमिदम् ।

कर्ण —एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासङ्ग्रामस्य राजकस्य परस्परक्षयमपेक्षमाणेन तेन प्रधानपुरुषवध उपेक्षा कृता ।

दुर्योधन —उपपन्नमिदम् ।

कर्ण —अन्यच्च राजन् द्रुपदेनाप्यस्य बाल्यात्प्रभृत्यभिप्रायवेदिना न

---

तथा = शस्त्रपरित्यागम् ।

सशिरःकम्प = शिरः कम्पनमभिमतसूचकम् । कर्णोक्तं स्वीकृत्येतिभावः ।

कौरवपाण्डवपक्षपातप्रवृत्तमहासङ्ग्रामस्य=कौरवपाण्डवपक्षपातेन प्रवृत्तः प्रारब्धः महासग्रामः येन तस्य, राजकस्य = राजचक्रस्य, परस्परक्षयम्, अपेक्षमाणेन = इच्छता, तेन = द्रोणेन, प्रधानपुरुषवधे = श्रेष्ठवीरजनवधे, उपेक्षा = औदासीन्यम्, कृता । अश्वत्थाम्नः पृथिवीराज्ये अभिषेकाय द्रोणः प्रधानवीरं न हतवान् । अयमभिप्रायः—प्रधानवीरेण इतरस्य वधे जाते तं वीरं निहत्याह पृथिवीराज्येऽश्वत्थामानमभिषेचयामीति ।

उपपन्न = युक्तम् ?

द्रुपदेनापीति–द्रुपदेन बाल्यादेव तस्याभिप्रायज्ञेन स्वराष्ट्रात् द्रोणो निःसारितः इति भावः ।

---

**दुर्योधन**—अच्छा तो फिर किस प्रकार है ?

**कर्ण**—आचार्य द्रोण का अभिप्राय इस प्रकार का था कि—'अश्वत्थामा को मैं भूमिपाल बनाऊंगा परन्तु इस मनोरथ की सिद्धि नहीं हुई तो मुझ बुड्ढे ब्राह्मण के लिए शस्त्र धारण करना व्यर्थ है'—यही समझ कर उन्हों ने ऐसा किया है ।

**दुर्योधन**—( शिर हिला कर ) यही बात है ।

**कर्ण**—इसी अभिप्राय से तो उन्होंने कौरव तथा पाण्डव के पक्षपात के कारण होने वाले महासमर के बीच राजन्य वर्गों के अन्योन्य नाश की सम्भावना करते हुए प्रधान वीरों के नाश की उपेक्षा किया है ।

**दुर्योधन**—यह बात युक्तियुक्त प्रतीत हो रही है ।

**कर्ण**—और दूसरी बात यह भी है महाराज ! शैशवकाल से ही इन के अभिप्राय के

तेजस्वी रिपुहतवन्धुदुःखपारं
बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।
आचार्यः सुतनिधनं निशम्य सङ्ख्ये
किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥ २७ ॥

अथवा सूक्तमिदमभियुक्तैः प्रकृतिर्दुस्त्यजेति । यतः शोकान्धमनसा तेन विमुच्य क्षत्रधर्मकार्कश्यं द्विजातिधर्मसुलभो दैन्यपरिग्रहः कृतः ।

कर्ण —राजन् , न खल्विदमेवम् ।

---

अन्वय —तेजस्वी, धृतायुधप्लवाभ्याम् , बाहुभ्याम् रिपुहतवन्धुदुःखपारम् , व्रजति, सङ्ख्ये, आचार्यः, सुतनिधनम् , निशम्य, शस्त्रग्रहसमये, किम् , विशस्त्रः, आसीत् ॥ २७ ॥

आचार्यस्य तदा शस्त्रत्यागो न कार्य इत्याह—तेजस्वी रिपुहतेति ।

तेजस्वी = प्रतापी, धृतायुधप्लवाभ्याम् = आयुधमेव प्लवम् कैवर्तदण्डविशेषः तत् धृतं याभ्यां ताभ्याम् , बाहुभ्याम् रिपुहतवन्धुदुःखपारम् = रिपुणा व्यापादितो यो बन्धुः तेन यद्दुःखं तस्य पारम्, व्रजति = गच्छति । संख्ये = सङ्ग्रामे, आचार्य = द्रोणः, सुतनिधनम् , निशम्य = श्रुत्वा, शस्त्रग्रहसमये=शस्त्रधारणकाले, शत्रुवधार्थमिति भावः । किम् = कस्मात् विशस्त्रः = शस्त्ररहित', आसीत् = अभूत् । तस्मिन् काले शत्रोर्वधः कार्यो यथाऽर्जुनेन कृत इति भावः । अत्र आयुधे प्लवत्वारोपः शाब्दः । दुःखे समुद्रत्वारोप आर्थ इत्येकदेशविवर्तिरूपकालङ्कारः । प्रहर्षिणी छन्दः ॥ २८ ॥

क्षत्रधर्मकार्कश्यं = क्षत्रियधर्मकाठिन्यम् । सर्वेषां बधेनेति भावः । द्विजातीति—ब्राह्मणेन न शस्त्रं ग्राह्यमिति भावः ।

---

प्रतापी पुरुष सशस्त्र भुजारूपी जलयान ( जहाज ) की सहायता से शत्रु के द्वारा वध किये गये कुटुम्बियों के दु खसागर को पार कर जाते हैं ' फिर क्या कारण है आचार्य ने समरस्थली के बीच अपने पुत्र ( अश्वत्थामा ) का वध सुन कर शस्त्रग्रहण के समय में उस का त्याग कर दिया ? ॥ २७ ॥

अथवा नीतिवेत्ताओं ने यथार्थ कहा है—'प्रकृति कदापि नहीं परिवर्तित होती' क्योंकि शोक के कारण विवेकशून्य होकर उन्हों ने क्षत्रिय धर्म को कठोर समझ कर ब्राह्मण धर्म के लिये सुलभ दीनता का आश्रय लिया है ।

कर्ण—भूमिपाल ! कौरवाधिप ! यह बात इस प्रकार नहीं है ।

उभौ—विजयतां कौरवेश्वरः ।

दुर्योधन—( दृष्ट्वा । ) अये, कथं कृपोऽश्वत्थामा च ( आसनादवतीर्य कृपं प्रति । ) गुरो अभिवादये । ( अश्वत्थामानमुद्दिश्य । ) आचार्यपुत्र,

एह्यस्मदर्थहततात परिष्वजस्व
क्लान्तैरिमैर्मम निरन्तरमङ्गमङ्गैः ।
स्पर्शस्तवैष भुजयोः सदृशः पितुस्ते
शोकेऽपि नो विकृतिमेति तनूरुहेषु ॥ २९ ॥

( आलिङ्गय पार्श्वे उपवेशयति । )
( अश्वत्थामा वाष्पमुत्सृजति । )

कर्ण—द्रौणायने, अलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम् ।

---

अभिवादये = प्रणमामि ।

अन्वय—( हे ) अस्मदर्थहततात !, एहि, क्लान्तैः, इमैः, अङ्गैः, मम, निरन्तरम्, अङ्गम्, परिष्वजस्व, ते, पितुः, सदृशः, तव, एषः, भुजयोः, स्पर्शः, नः, शोकेऽपि, तनूरुहेषु, विकृतिम्, एति ॥ २९ ॥

अस्मदर्थहततात = अस्मदर्थं हतः तातः यस्य, तत्सम्बोधने, एहि = आगच्छ, क्लान्तैः = खिन्नैः, इमैः, अङ्गैः = अवयवैः, मम, निरन्तरम्, अङ्गं परिष्वजस्व = आलिङ्गय, ते = तव, पितुः = द्रोणस्य, सदृशः, तव, एषः = त्वया कृतः, भुजयोः = बाह्वोः, स्पर्शः, नः = अस्माकम्, शोकेऽपि, तनूरुहेषु = लोमसु, विकृतिं = उद्गमम्, एति = प्राप्नोति । तव स्पर्शादतीवानन्दो जात इति भावः । अत्र तृतीयचरणे उपमा । वसन्ततिलका छन्दः ॥ २९ ॥

द्रौणायने = अश्वत्थामन्, शोकानले = शोकाग्नौ, आत्मानं=स्वम्, अत्यर्थम्=

---

दोनों—[ अश्वत्थामा और कृप ] विजय ! विजय ! कौरवाधिनाथ की ।

दुर्योधन—( देख कर ) अरे यह कृप और अश्वत्थामा ? ( आसन से उतर कर कृपाचार्य के प्रति ) आचार्य ! साष्टाङ्गपात । ( अश्वत्थामा के प्रति ) आचार्यात्मज !

मेरे निमित्त आप के पिता का संहार हुआ है आइए शोक से खिन्न अङ्गों से मेरे अङ्गों का [ वक्ष स्थल का ] आलिङ्गन कीजिए । आपकी इन भुजाओं का संश्लेष [ स्पर्श ] आपके पिता के अनुरूप ही है । इस शोकावस्था में भी रोमाञ्च होने में रञ्चमात्र भी विकृति नहीं आती ॥ २९ ॥

( आलिङ्गन कर समीप में बैठाता है )
( अश्वत्थामा रोता है )

कर्ण—द्रोणात्मज ! शोकाग्नि में अपने को अत्यन्त सन्तप्त करने से क्या लाभ ?

स्वराष्ट्रे वासो दत्तः।

दुर्योधन —साधु अङ्गराज, साधु। निपुणमभिहितम।

कर्ण—न चायं ममैकस्याभिप्रायः। अन्येऽभियुक्ता अपि नैवेदमन्यथा मन्यन्ते।

दुर्योधन —एवमेतत्। कः सन्देहः।

दत्त्वाऽभयं सोऽतिरथो वध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैव चेत्कथमन्यथा॥ २८॥

कृप —( विलोक्य। ) वत्स, एष दुर्योधनः सूतपुत्रेण सहास्यां न्यग्रोधच्छायायामुपविष्टस्तिष्ठति। तदुपसर्पावः।

( तथा कृत्वा। )

---

अन्वयः—एवम्, न चेत् ( तदा ) अन्यथा, अतिरथः, सः, अभयम्, दत्त्वा, किरीटिना, वध्यमानम्, सिन्धुराजम्, कथम्, उपेक्षेत॥ २८॥

कर्णोक्तं द्रढयति—दत्त्वाभयमिति। एवं=त्वदुक्तं सत्यं न, चेत्, तदा, अन्यथा=अन्यथेत्यस्योपेक्षेतेत्यनेनान्वयः अतिरथः=अगणितैः सह योद्धा, सः=द्रोणः, अभयं=तव वधो न स्यादिति, दत्वा, सिन्धुराजायेति शेषः। किरीटिना=अर्जुनेन, वध्यमानम्, सिन्धुराजम्=जयद्रथम्, कथम्, उपेक्षेत। नोपेक्षेतेत्यर्थः। अतएव जयद्रथस्य रक्षा न कृता तेनेतिभावः॥ पथ्यावक्त्रं छन्दः॥ २८॥

सूतपुत्रेण=कर्णेन, न्यग्रोधच्छायायाम्=वटच्छायायाम् 'व्यामो वटश्च न्यग्रोधा, वित्यमर। उपसर्पावः=गच्छावः।

---

भ्राता द्रुपदने अपने राज्य में आश्रय नहीं लेने दिया।

दुर्योधन—सत्य अङ्गनरेश! सत्य, बहुत उचित आपने कहा।

कर्ण—यह केवल मेरी ही धारणा नहीं है और भी नीतिमान पुरुष इस से विभिन्न धारणा नहीं रखते।

दुर्योधन—यही बात है इस में सन्देह ही क्या?

अतिरथ ने अर्जुन के द्वारा वध किये जाते हुए जयद्रथ को अभय दान देकर उपेक्षा किये। यदि यह बात न होती तो फिर ऐसा क्यों करते? ॥ २८॥

कृप—( देख कर ) पुत्र! यह दुर्योधन सूतपुत्र [ कर्ण ] के साथ इस वटवृक्ष की छाया में बैठा हुआ है अत उसके सन्निकट चलें।

( सन्निकट जाकर )

उभौ—विजयतां कौरवेश्वरः ।

दुर्योधन—( दृष्ट्वा । ) अये, कथं कृपोऽश्वत्थामा च ( आसनादवतीर्य कृपं प्रति । ) गुरो अभिवादये । ( अश्वत्थामानमुद्दिश्य । ) आचार्यपुत्र,

एह्यस्मदर्थहततात परिष्वजस्व
क्लान्तैरिमैर्मम निरन्तरमङ्गमङ्गैः ।
स्पर्शस्तवैष भुजयोः सदृशः पितुस्ते
शोकेऽपि नो विकृतिमेति तनूरुहेषु ॥ २९ ॥

( आलिङ्गय पार्श्वे उपवेशयति । )
( अश्वत्थामा बाष्पमुत्सृजति । )

कर्ण —द्रौणायने, अलमत्यर्थमात्मानं शोकानले प्रक्षेप्तुम् ।

---

अभिवादये = प्रणमामि ।

अन्वय —( हे ) अस्मदर्थहततात !, एहि, क्लान्तैः, इमैः, अङ्गैः, मम, निरन्तरम् , अङ्गम्, परिष्वजस्व, ते, पितुः, सदृशः, तव, एषः, भुजयोः, स्पर्शः, नः, शोकेऽपि, तनूरुहेषु, विकृतिम् , एति ॥ २९ ॥

अस्मदर्थहततात = अस्मदर्थं हतः तातः यस्य, तत्सम्बोधने, एहि = आगच्छ, क्लान्तैः = खिन्नैः, इमैः, अङ्गैः = अवयवैः, मम, निरन्तरम् , अङ्गं परिष्वजस्व = आलिङ्ग्य, ते = तव, पितुः = द्रोणस्य, सदृशः, तव, एषः = त्वया कृतः, भुजयोः = बाह्वोः, स्पर्शः, नः = अस्माकम् , शोकेऽपि, तनूरुहेषु = लोमसु, विकृतिं = उद्गमम् , एति = प्राप्नोति । तव स्पर्शादतीवानन्दो जात इति भावः । अत्र तृतीयचरणे उपमा । वसन्ततिलका छन्दः ॥ २९ ॥

द्रौणायने = अश्वत्थामन् , शोकानले = शोकाग्नौ, आत्मानं=स्वम् , अत्यर्थम्=

---

दोनों—[ अश्वत्थामा और कृप ] विजय ! विजय ! कौरवाधिनाथ की ।

दुर्योधन—( देख कर ) अरे यह कृप और अश्वत्थामा ? ( आसन से उतर कर कृपाचार्य के प्रति ) आचार्य ! साष्टाङ्गपात । ( अश्वत्थामा के प्रति ) आचार्यात्मज !

मेरे निमित्त आप के पिता का संहार हुआ है आइए शोक से खिन्न अङ्गों से मेरे अङ्गों का [ वक्ष स्थल का ] आलिङ्गन कीजिए । आपकी इन भुजाओं का सश्लेष [ स्पर्श ] आपके पिता के अनुरूप ही है । इस शोकावस्था में भी रोमाञ्च होने में रञ्चमात्र भी विकृति नहीं आती ॥ २९ ॥

( आलिङ्गन कर समीप में बैठाता है )
( अश्वत्थामा रोता है )

कर्ण—द्रोणात्मज ! शोकाग्नि में अपने को अत्यन्त सन्तप्त करने से क्या लाभ ?

दुर्योधन—आचार्यपुत्र, को विशेष आवयोरस्मिन्व्यसनमहार्णवे। पश्य।

तातस्तव प्रणयवान्स पितुः सखा मे
शस्त्रे यथा तव गुरुः स तथा ममापि।
किं तस्य देहनिधने कथयामि दुःखं
जानीहि तद् गुरुशुचा मनसा त्वमेव ॥ ३० ॥

कृप—वत्स, यथाह कुरुपतिस्तथैवैतत्।

अश्वत्थामा—राजन्, एवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघूकर्तुम्। किन्तु

भृशम्, प्रक्षेप्तुम्, अलमित्यन्वयः।

व्यसनमहार्णवे = व्यसनं महार्णवः महासमुद्र इव, उपमितसमासः।

अन्वय—सः, तव, तातः, मे, पितुः, प्रणयवान्, सखा, सः, शस्त्रे, यथा, तव, गुरुः, तथा, मम, अपि, (गुरुः) तस्य, देहनिधने, दुःखम्, किम्, कथयामि, त्वम्, एव, गुरुशुचा, मनसा, तद्, जानीहि ॥ ३० ॥

विशेषाभावे हेतुमाह—तातस्तवेति।

सः=द्रोणः, तव, तातः = पिता, मे=मम, पितुः, प्रणयवान् = स्नेहवान्, सखा = मित्रम्, एतेन पितृसदृशः सूचितः। स = द्रोणः, शस्त्रे, यथा, तव, गुरुः = शिक्षकः, तथा, ममापि, गुरुः, तस्य, देहनिधने = मरणे, दुःखम्, किं, कथयामि = वच्मि, कथनानर्हं दुःखमिति भावः। त्वम्, एव, गुरुशुचा = महाशोकेन, मनसा = अन्तःकरणेन, तद् = दुःखम्, जानीहि=बुध्यस्व, समानदुःखभाजावावामिति भावः। वसन्ततिलकाछन्दः ॥ ३० ॥

दुर्योधन—आचार्यतनूजन्मन्! हम दोनों (दुर्योधन और अश्वत्थामा) के इस दुख के अगाध समुद्र में क्या वैषम्य है? अर्थात् कुछ भी नहीं। देखिए—

आपके पिता आप से स्नेह करते थे तो मेरे पिता के भी मित्र थे। अर्थात् इस सम्बन्ध से मैं भी स्नेहभाजन हुआ। शस्त्रविद्या के जिस प्रकार आपके गुरु हैं उसी प्रकार मेरे भी। उनके शरीरनाश के विषय में जो दुःख हो रहा है उसे क्या कहूं आप अपने असीम शोकग्रस्त मन से ही समझ लीजिए अर्थात् आपके पिता के साथ मेरी भी आप ही का सा सम्बन्ध है अतः दुःख भी एक ही तरह का है आप अपनी वेदना से मेरी वेदना का अनुमान कर सकते हैं ॥ ३० ॥

कृप—पुत्र! कौरवाधिनाथ ने जो कहा वह उसी प्रकार है।

अश्वत्थामा—आपकी इस प्रकार की दयादृष्टि से शोकभार की न्यूनता होना स्वाभाविक ही है। परन्तु—

मयि जीवति यत्तातः केशग्रहमवाप्तवान् ।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम् ॥ ३१ ॥

कर्ण—द्रौणायने किमत्र क्रियते यदनेनैव सर्वपरिभवपरित्राणहेतुना शस्त्रमुत्सृजता तादृशीमवस्थामात्मा नीतः ।

अश्वत्थामा—अङ्गराज, किमाह भवान्किमत्र क्रियत इति । श्रूयतां यत्क्रियते ।

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां

अन्वय—मयि, जीवति, ( सति ) तात, यत्, केशग्रहम्, अवाप्तवान्, (तदा) अन्ये, पुत्रिणः, पुत्रेभ्य', स्पृहाम्, कथम्, करिष्यन्ति ॥ ३१ ॥

अत्यन्तं दुःखास्पदमिदमित्याह—मयि जीवतीति । मयि = अश्वत्थाम्नि, जीवति सति, तातः = द्रोणः, यत् = यदि, केशग्रहम् = कचग्रहम्, अवाप्तवान् = प्राप्तः, तदा, अन्ये, पुत्रिणः = पुत्रवन्तः, स्पृहाम् = पुत्रेच्छाम्, 'स्पृहेरीप्सित' इति चतुर्थी । कथं, करिष्यन्ति, उत्तमपुत्रेच्छा लोके कथं स्यादितिभावः ॥ पथ्यावक्त्रं छन्दः ॥३१॥

द्रौणायन इति–यद्यपि 'द्रोणपर्वतजीवन्तादन्यतरस्याम्' इति सूत्रेण गोत्रे, एव फगन्तस्य पक्षे इञन्तस्य च साधुत्वं सम्भवति ननु फिञन्तस्य तथापि अपत्यरूपेऽर्थे 'तिकादिभ्य' फिञ्' इत्यनेन यथा कथञ्चित्साधुत्वं बोद्धव्यम्, अत्र = प्रत्यपकारे, किं क्रियते ।

अन्वयः—पाण्डवीनाम्, चमूनाम्, मध्ये, यः, य', शस्त्रम्, बिभर्ति, पाञ्चालगोत्रे, यः, यः, शिशु, अधिकवया, गर्भशय्याम्, गत., वा । यः, यः, तत्कर्मसाक्षी, रणे, मयि, चरति ( सति ) यश्च, यश्च, प्रतीपः, जगताम्, अन्तकस्य, तस्य, तस्य, इह, क्रोधान्ध., स्वयम्, अहम्, अन्तक ( अस्मि ) ॥ ३२ ॥

किं करिष्यामीत्याह—यो य इति । पाण्डवीना = पाण्डवसम्बन्धिनीनाम्,

मेरे जीवित रहते हुए पिता ने केशकर्षणरूप दुर्दशा का अनुभव किया है। यदि यही दशा है तो और पुत्रसम्पन्न व्यक्ति अपने पुत्रों से क्या स्नेह रक्खेंगे ? ॥ ३१ ॥

कर्ण—द्रोणकुमार ! इस विषय में क्या किया जाय जब कि सब प्रकार के उपद्रवों के रक्षा के कारणभूत उन्होंने ही शस्त्र का परित्याग करते हुए अपने को उस प्रकार की दशा तक पहुँचा दिया है।

अश्वत्थामा—अङ्गनरेश ! आपने क्या कहा–'क्या किया जाय ?' सुनिये.—क्या करना चाहिए।

पाण्डवों की सेना में जिसे अपनी विशाल भुजाओं का अहङ्कार है अथवा जो शस्त्र

यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥ ३२ ॥
अपि च। भो जामदग्न्यशिष्य कर्ण,
देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः

चमूनाम्=सेनानाम्, मध्ये, निर्धारणे षष्ठी। स्वभुजगुरुबलः=स्वभुजावेव गुरु महद् बलं यस्य सः, यो यः, शस्त्रं=आयुधं, बिभर्ति=धारयति, पाञ्चालगोत्रे=पञ्चालानां राजेति पाञ्चालः 'जनपदशब्दात्क्षत्रियादञ्' इत्यत्र राजन्यपि अपत्यवद् प्रत्ययविधानादञ् प्रत्ययः। तस्य गोत्रे वंशे, यो यः शिशुः=बालकः, अधिकवयाः=युवा वृद्धश्च, बालकापेक्षया तयोरधिकवयस्त्वादत्र तरुणवृद्धयोर्ग्रहणम्। गर्भशय्यां =गर्भ शय्या शयनीयं तां गतः, वा यो यः, तत् कर्मसाक्षी=द्रोणवधस्य साक्षाद्द्रष्टा, रणे=सङ्ग्रामे, मयि=अश्वत्थाम्नि, चरति=भ्रमति सति, यश्च यश्च, प्रतीपः =प्रतिकूलकर्त्ता, जगतां=लोकानाम्, अन्तकस्य, एतेन तेऽपि वीराः तेषां निहन्तात्वाहमतीव वीर इति सूचितम्। तस्य तस्य=पूर्वोक्तस्य, इह क्रोधान्धः, स्वयम्=एकाकी, अहम्, अन्तकः=यमः, विनाशक इत्यर्थः। अस्मीति शेषः। युद्धे सर्वान् पूर्वोक्तान् विनाशयिष्यामीति भावः। अत्र चतुर्थचरणे रूपकमलङ्कारः। स्रग्धरा छन्दः॥

जामदग्न्यशिष्य=परशुरामात् प्राप्तविद्य।

अन्वयः—यस्मिन्, अरातिशोणितजलैः, ह्रदाः, पूरिताः, सः, अयम्, देशः, क्षत्रात्, एव, तथाविधः, तातस्य, केशग्रहः, परिभवः, मे, अहितशस्त्रघस्मरगुरूणि, तान्येव, अस्त्राणि, भास्वन्ति, (सन्ति) रामेण, यत्, कृतम्, तदेव, क्रोधनः, द्रौणायनिः, कुरुते ॥ ३३ ॥

पितुः पराभवेन परशुरामेण कृतं क्षत्रियविनाशं स्मारयन् स्वयमपि तथाकरिष्यामीति बोधयन्नाह—देशः सोयमिति। यस्मिन्=कुरुक्षेत्रे, अरातिशोणितजलैः=

ग्रहण किए हुए हैं, और पाञ्चालनरेश के कुटुम्ब में जो कोई बालक, युवा अथवा जो गर्भ की शय्या पर शयन करता है, तथा और जो कोई उस घृणित कार्य का अपने नेत्रों से अवलोकन किया है, तथा जो कोई व्यक्ति समराङ्गण में विहरते समय मेरे विरुद्ध व्यवहार करता है मैं क्रोधोन्मत्त होकर उन उन व्यक्तियों का तथा स्वयं संसार के प्रलयकारी कालका भी काल हूँ ॥ ३२ ॥

और भी। ऐ परशुरामशिष्य कर्ण! [ सुनिये ]

यह वही देश है 'जिस देश के सर और सरितायें शत्रुओं के रुधिर से आप्लावित हो

क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः ॥ ३३ ॥

दुर्योधन—आचार्यपुत्र, तस्य तथाविधस्यानन्यसाधारणस्य ते वीरभावस्य किमन्यत्सदृशम् ।

कृप—राजन्, सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसितः समरभरः । तदहमेवं मन्ये भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः । किं पुनर्यौधिष्ठिरबलम् । अतोऽभिषिच्यतां सैनापत्ये ।

---

शत्रुशोणितमेव जलानि तैः, ह्रदाः=अगाधजलाशयाः, पूरिताः=भरिताः, सः, अयं, देशः क्षत्रात्=क्षत्रियात्, एव, तथाविधः=हैहयवंशजकृतेन परशुरामपितृपराभवेन सदृशः, तातस्य=पितुः ममेति शेषः । केशग्रहः परिभवः, उभयोः समान एव परिभव इत्यर्थः । मे=मम, अहितशस्त्रघस्मरगुरूणि=शत्रोरायुधस्य श्रेष्ठानि भक्षकाणि, अस्त्राणि, तान्येव, भास्वन्ति=दीप्यमानानि, सन्ति जामदग्न्यशिष्यात्स्वपितुरेव मयाऽपि शस्त्रविद्या प्राप्तेति तादृशान्येव ममाप्यस्त्राणीति भावः । रामेण=परशुरामेण, यत्=क्षत्रियविनाशरूपकार्यं, कृतं, तदेव, क्रोधनः=कुपितः, द्रौणायनिः=अश्वत्थामा कुरुते । अत्र द्वितीयचरणे उपमा तृतीयचतुर्थचरणयोस्तच्छस्त्रतत्कर्मणोरसम्भवात्तत्तुल्ययोराक्षेपेण निदर्शनाद्द्वयमलङ्कारः । शार्दूलविक्रीडितं छन्दः ॥ ३३ ॥

सुमहान्, समरभरः=सङ्ग्रामभारः, वोढुम्, द्रोणपुत्रेण अध्यवसितः इत्यन्वयः । भवता, कृतपरिकरः=कृतसन्नाहः, अयम्=अश्वत्थामा, लोकत्रयमपि, समुच्छेत्तु=विनाशयितुम्, समर्थः, यौधिष्ठिरबलम्=युधिष्ठिरसेना, किं पुनः,

---

गई । मेरे पिता का यह अपमान भी उसी प्रकार क्षत्रियजाति के द्वारा हुआ है । मेरे पास वे ही चमचमाते हुए शस्त्र हैं, जो विरुद्ध शस्त्रों के भक्षण कर जाने से महतीमहत्ताशाली हैं, और क्रुद्ध होकर परशुराम ने जो कर डाला है वही वह द्रोणतनय करने जारहा है ॥३३॥

**दुर्योधन**—आचार्य पुत्र ! उस प्रकार की अनन्यसाधारण वीरता की तुलना आपकी वीरता से और किस बात में हो सकती है ? अर्थात् शत्रुवध के अतिरिक्त और किस बात में समानता हो सकती है ।

**कृप**—नरराज ! द्रोणपुत्र ( अश्वत्थामा ) बडे सङ्ग्रामभार को उठाने के लिए कटिबद्ध हैं अतः मेरे विचार में यह आता है कि यदि आपके द्वारा ये अभिषिक्त हो जायँ तो तीनों लोकों का संहार करने में समर्थ हो सकते हैं और पाण्डवी सेना के विषय में क्या कहना है ? अतः सेनानायक के पदपर इनका अभिषेक कर दीजिए ।

दुर्योधनः—सुष्ठु युज्यमानमभिहितं युष्माभिः, किंतु प्राक्प्रतिपन्नोऽयमर्थोऽङ्गराजस्य।

कृप'—राजन्, असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे नैवोपेक्षितुं युक्तम्। अस्यापि तदेवारिकुलमनुशासनीयम्। अतः किमस्य पीडा न भविष्यति।

अश्वत्थामा—राजन्, किमद्यापि युक्तायुक्तविचारणया।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-

---

अस्योच्छेदोऽतीव सुलभ इति भावः।

सुष्ठु = शोभनम्, युज्यमानम् = उचितम्, अभिहितम् = उक्तम्, अङ्गराजस्य = कर्णस्य, अयमर्थः = सैनापत्येऽधिकारः, प्राक् प्रतिपन्नः = प्राप्तः, पूर्वमेव निश्चितं यद्द्रोणानन्तर कर्णः सेनानायको भविष्यतीति भावः।

असदृशपरिभवशोकसागरे = असदृश' अनुपम. अयोग्यो यः परिभवः मृत्युरूपः तज्जन्यो यः शोकः स सागर इव तत्र, निमज्जन्तम् = पतितम्, एनं = द्रोणपुत्रम्, अङ्गराजस्य अर्थे = कृते, उपेक्षितुम् = नैव, युक्तम्, अस्य = अश्वत्थाम्नः, तदेव = यत्कर्णेनानुशासनीयम्, अरिकुलम् = शत्रुसमूह., अनुशासनीयम् = हिंसनीयम्, अस्य = अश्वत्थाम्नः।

युक्तायुक्तेति—कर्णस्य सैनापत्यस्थानमुताश्वत्थाम्न इत्याकारकविचार.।

अन्वय —अद्य, ( त्वम् ) निशाम्, शेषे, स्तुतिभिः, प्रयत्नपरिबोधितः, ( भविष्यसि ) अद्य, भुवनम्, अकेशवम्, अपाण्डवम्, नि.सोमकम् ( भविष्यति ) अद्य, दोःशालिनाम्, इयम्, रणकथा, परिसमाप्यते, अद्य, भुव', नृपकाननातिगुरु' भारः, अपैतु॥ ३४॥

अद्य त्व निश्चिन्तो भवेत्याह—प्रयत्नेति। हे दुर्योधन त्वम्, अद्य निशाम् =

---

दुर्योधन—आपने ठीक और युक्तियुक्त कहा है परन्तु इस कार्य के लिये तो पहले ही से कर्ण को निर्धारित कर लिया गया है।

कृप—राजन्! अपमान के असीम सन्ताप सागर में गोता खाते हुए इनकी केवल कर्ण के लिए उपेक्षा करना उचित नहीं इन्हें भी तो उन्हीं शत्रुवों को दण्ड देना है। अत क्या इन्हें कष्ट न होगा? अर्थात् इस दशा में यदि आप इनकी उपेक्षा करेंगे तो इनकी आत्मा को कष्ट नहीं होगा? किन्तु अवश्य होगा।

अश्वत्थामा—कुरुराज! आज भी युक्त और अयुक्त के विचार से क्या प्रयोजन? अर्थात् मुझे ही सेनानायक निर्वाचित कीजिए।

वन्दिचारणों के मङ्गल पाठ द्वारा बहुत परिश्रम से निद्राभङ्ग किए जाने पर भी आज

मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इय परिसमाप्यते रणकथाद्य दोःशालिना-
मपैतु नृपकाननातिगुरुरद्य भारो भुवः ॥ ३४ ॥

कर्णः—( विहस्य । ) द्रौणायने, वक्तुं सुकरमिदं दुष्करमध्यवसितुम् । बहवः कौरवबलेऽस्य कर्मणः शक्ताः ।

अश्वत्थामा—अङ्गराज, एवमिदम् । बहवः कौरवबलेऽत्र शक्ताः किंतु दुःखोपहतः शोकावेगवशादृब्रवीमि न पुनर्वीरजनाधिक्षेपेण ।

---

रात्रिम्, 'कालाध्वनो०' इति द्वितीया, समग्रनिशाम् व्याप्येतिभावः शेपे=स्वप्स्यसि, वर्तमानसामीप्ये लट् । स्तुतिभि =मागधादिकृतस्तवैः, प्रयत्नपरिबोधितः=प्रयत्नेन जागरितः, भविष्यसीति शेषः । मयाऽद्य निखिलरिपूणां विनाशे कृते चिन्ताऽभावात्त्वं गाढ स्वप्स्यसि तथाच गाढनिद्राभङ्गः प्रयत्नेन स्यादिति गूढाभिप्रायः । तदेवाह—अकेशवमिति । अद्य, भुवनं=जगत्, अकेशवम्=कृष्णरहितम्, मया हननादितिभावः । अपाण्डवम्=पाण्डुपुत्रशून्यम्, निःसोमकम्=सोमवशरहितम्, भविष्यतीति शेषः । अद्य, दोःशालिनाम्=बलवद्भुजवताम् इयम्, रणकथा= सङ्ग्रामचर्चा, परिसमाप्यते=अवसीयते, मया सर्वेषां वीराणा हननादितिभावः । अद्य, भुवः=ससारस्य, नृपकाननातिगुरुः=नृपा एव कानन वन तदेवातिगुरुः श्रेष्ठः, भारः अपैतु=दूरं भवतु । अत्र चतुर्थचरणे रूपकमलङ्कारः । पृथ्वी छन्दः लक्षणमुक्त चतुर्थश्लोके ॥ ३४ ॥

अध्यवसितुम्=कर्तुम् ।

वीरजनाधिक्षेपेण=वीरजननिन्दया ।

---

आप निशाकाल में शयन करेंगे । आज मैं वसुन्धरा को वासुदेव भगवान् और पाण्डवों से शून्य बना दूंगा तथा पाञ्चालादि क्षत्रियों को निर्वंश कर डालूँगा । प्रचण्ड दोर्दण्ड सम्पन्न [ विशाल भुजावाले ] राजाओं की साङ्ग्रामिकी वार्ता भी आज ही अवशिष्ट हो जायगी और भूमिपालरूपी जङ्गलों के बोझ से दबी हुई पृथ्वी का भार आज ही चला जायगा अर्थात् पृथ्वी का भार आज ही न्यून कर डालूँगा ॥ ३४ ॥

**कर्ण**—( हँस कर ) द्रोणायने ! कहना तो आसान है परन्तु करना कठिन है । कौरवीय सेना में भी बहुत इस कार्य के सम्पादन करने में समर्थ वीर हैं ।

**अश्वत्थामा**—अङ्गाधिप ! बहुत ठीक । कौरव सेना में इस कार्य के करने में बहुत से लोग समर्थ हैं तथापि दुःख से विदग्ध होकर शोकावेश के कारण कह रहा हूं । वीरों की निन्दा नहीं कर रहा हूं ।

कर्ण —मूढ, दुःखितस्याश्रुपातः, कुपितस्य चायुधद्वितीयस्य सङ्ग्रामावतरणमुचितं नैवंविधाः प्रलापाः।

अश्वत्थामा—( सक्रोधम् ) अरे रे राधागर्भभारभूत, सूतापसद, ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण। पश्य।

(१)निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं
सम्प्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा।

---

आयुधद्वितीयस्य = आयुधं द्वितीयं यस्य तस्य, सङ्ग्रामावतरणम् = समरागमनम्। प्रलापाः = अनर्थकवचांसि 'प्रलापोऽनर्थकं वचः' इत्यमरः।

राधेति = राधायाः गर्भस्य उदरस्य भारभूत, सूतापसद = सूतपामर।

अन्वय —तव, इव, मे, आयुधम्, गुरुशापभाषितवशात्, किम्, निर्वीर्यम्, त्वम्, यथा, ( तथा ) सम्प्रत्येव, भयात्, समरम्, विहाय, प्राप्तः, अस्मि, किम्, स्तुतिवंशकीर्तनविदाम्, सारथीनाम्, कुले, अहम्, किम् जातः, यत्, क्षुद्रारातिकृताप्रियम्, अस्त्रेण, प्रतिकरोमि, अस्त्रेण, न, ( प्रतिकरोमि ) ॥ ३५ ॥

तव इव, मे = मम, आयुधम् गुरुशापभाषितवशात् = परशुरामशापोक्ति हेतोः किं निर्वीर्यम् = वीर्यशून्यम् अयं भावः कर्णः स्वजातिं सूतत्वं संगोप्य ब्राह्मणत्वं निवेद्य परशुरामाच्छस्त्रविद्यां प्राप्तः पश्चाच्च ज्ञातः सूतोऽयमिति ततश्च परशुरामः कर्णाय शापं ददौ तवायुधं वीर्यवन्न स्यादिति। त्वं यथा, तवेति शेषः। सम्प्रत्येव = अर्जुनात्, भयात् = भीतेः समरं = सङ्ग्रामं विहाय = त्यक्त्वा, प्राप्तः आगतः, अस्मि

जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण नास्त्रेण यत् ॥ ३५ ॥

कर्ण—( सक्रोधम् । ) अरे रे वाचाट, वृथाशस्त्रग्रहणदुर्विदग्ध बटो,

निर्वीर्यं वा सवीर्यं वा मया नोत्सृष्टमायुधम् ।
यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना ॥ ३६ ॥

अपि च ।

सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम् ।

---

किम्, नाहमागत इत्यर्थः । स्तुतिवंशकीर्तनविदाम् = स्तुतिः वंशकीर्तनरूपा तत् विदन्ति तेषाम्, सारथीनां = सूतानां, कुले, किम् अहं, जातः = उत्पन्नः नेति भावः । यत् क्षुद्रारातिकृताप्रियम् = क्षुद्रशत्रुकृतापकारम् अस्त्रेण = अश्रुणा, प्रतिकरोमि = प्रतिक्रियां सम्पादयामि, अस्त्रेण = आयुधेन, न । आयुधेनैव प्रतिक्रियां करोमीति भावः । शार्दूलविक्रीडित छन्दः ॥ ३५ ॥

वाचाट = वाचाल, बहुभाषिन्नित्यर्थः ।

अन्वय —निर्वीर्यम् वा, सवीर्यं वा आयुधम्, मया, न उत्सृष्टम्, यथा, बाहुशालिना, पाञ्चालभीतेन, ते, पित्रा उत्सृष्टम् ॥ ३६ ॥

नाहं स्वपितृवद्भीरुरित्याह—निर्वीर्यमिति । निर्वीर्यं = पराक्रमरहितम्, वा, सवीर्यं = सपराक्रमम्, वा, आयुधम् = शस्त्रं मया = कर्णेन न, उत्सृष्टम् = त्यक्तम्, यथा, ते = तव, बाहुशालिना = पराक्रमिणा, बाहुशालिनेति काक्वोच्यते अपराक्रमिणेत्यर्थः । अथवा सत्यपि भुजद्वये कथं पाञ्चालाद्भीत इति व्यज्यते । पाञ्चालभीतेन = धृष्टद्युम्नत्रस्तेन, आयुधम् त्यक्तमिति शेषः । अत्रोपमाऽलङ्कारः । पथ्यावक्त्रं छन्दः ॥

अन्वय —सूतः, वा, सूतपुत्रः, वा, यः वा, कः ( अपि ) वा अहम्, भवामि, कुले, जन्म दैवायत्तम्, तु पौरुषम्, मदायत्तम् ॥ ३७ ॥

यदुक्तं त्वं सारथिकुले जातस्तत्राह—सूतो वेति ।

---

तुम्हारी भाँति लोगों के कुल की प्रशंसा करने में लीन रथकारों के वंश में मेरा भी जन्म हुआ है ? अर्थात् रात दिन बाबूजी बाबूजी कहकर जीविका प्राप्त करने वाले रथवानों के कुल में जन्म हुआ है जिससे कि मैं क्षुद्र शत्रुओं के द्वारा किये गये अपकार का बदला आँसू से लूँ और शस्त्र से नहीं ? ॥ ३५ ॥

कर्ण—( क्रुद्ध होकर ) अरे अरे वातुल व्यर्थ शस्त्रभारवाहक ! कुमार !!

पराक्रमी हों चाहे कायर मैंने तो शस्त्र का त्याग नहीं किया जिस प्रकार धृष्टद्युम्न से त्रस्त होकर भुजपराक्रमशाली तुम्हारे पिता ने किया ॥ ३६ ॥

और भी —

सूत हों चाहे सूत के पुत्र हों अथवा कोई हों । सत्कुल में जन्म देना विधाता के हाथमें

दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम् ॥ ३७ ॥

अश्वत्थामा—( सक्रोधम् । ) अरे रे रथकारकुलकलङ्क, अरे राधागर्भभारभूत, आयुधानभिज्ञ, तातमप्यधिक्षिपसि । अथवा ।

स भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने
कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा ।
परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः
पृथासूनुः साक्षी त्वमसि रणभीरो क्व नु तदा ॥ ३८ ॥

---

सूतः = सारथिः वा, सूतपुत्रः—सारथिपुत्रः, वा, यः, वा, अथवा, कः, अहम्, भवामि, कोऽप्यहमस्मि नात्र कापि विचारणा । कुले = उत्तमकुले नीचकुले वा, जन्म, दैवायत्तम् = कर्माधीनम्, तु = किन्तु, पौरुषम् = पराक्रमः, मदायत्तम् = स्वाधीनम् । जात्याद्युपभोगाः, कर्मफलानि, पराक्रमः, स्वायत्तोभवतीति भावः । पथ्यावक्त्रं छन्दः ॥

अन्वय—त्रिभुवने, प्रथितभुजसारः, सः, शूरः, भीरुः, वा प्रतिदिनम्, तेन, आजौ, यत्, कृतम् ( तत् ) इयम्, वसुधा, वेत्ति, शस्त्रम्, कथम्, परित्यक्तम्, इति, सत्यव्रतधरः, सः, पृथासूनुः, साक्षी, ( हे ) रणभीरो, त्वम्, तदा क्व, नु असि ॥

पाञ्चालभीतो द्रोणोऽस्त्रं त्यक्तवानिति यदुक्तं कर्णेन तत्राह—स भीरुरिति । त्रिभुवने = लोकत्रये, प्रथितभुजसारः = प्रथितः विख्यातः भुजसारः बाहुबलं यस्य सः 'सारो बले दृढांशे च' इत्यमरः । स शूरः = वीरः, वा, भीरुः = भययुक्तः, अस्तु प्रतिदिनम्, तेन = द्रोणेन, आजौ = सङ्ग्रामे, यत्, कृतं, तदित्यध्याहारः । इयं, वसुधा = पृथ्वी, वेत्ति = जानाति, क्षत्रियाणां विनाशेन पृथिव्या अल्पभारत्वसम्पादनात्तेनेति भावः, शस्त्रं, कथं = कस्माद्धेतोः, परित्यक्तमिति, सत्यव्रतधरः = धरतीति धरः पचाद्यच् सत्यव्रतस्य धरः सत्यव्रतधरः, सत्यवक्तेरर्थः । सः, पृथासूनुः = युधिष्ठिरः, साक्षी = प्रत्यक्षद्रष्टा, तदा = यस्मिन् समये शस्त्रं त्यक्तवान् तस्मिन्

---

है और पुरुषार्थ करना मेरे हाथ में है ॥ ३७ ॥

अश्वत्थामा—( क्रोध से ) अरे ! अरे !! रथकारकुलाङ्गार !!! अरे राधागर्भसम्भूत, शस्त्रानभिज्ञ, ! पिता की निन्दा कर रहा है ? अथवा—

चाहे वह [ मेरे पिता द्रोण ] कायर हों अथवा वीर परन्तु उनके भुजा का बल समस्त संसार को विदित है । समरभूमि में उन्होंने प्रतिदिन जो कुछ किया है उसे यह वसुन्धरा जानती है उन्होंने शस्त्र का परित्याग क्यों किया ? इस बात में सत्यव्रत परायण युधिष्ठिर साक्षी हैं ऐ समरभूमि के कायर ! उस समय तुम थे कहाँ ? ॥ ३८ ॥

कर्ण—( विहस्य । ) एवं भीरुरहम् । त्वं पुनर्विक्रमैकरसं तव पितरमनुस्मृत्य न जाने किं करिष्यसीति महान्मे संशयो जातः । अपि च रे मूढ !

यदि शस्त्रमुज्झितमशस्त्रपाणयो
न निवारयन्ति किमरीनुदायुधान् ।
यदनेन मौलिदलनेऽप्युदासितं
सुचिरं स्त्रियेव नृपचक्रसन्निधौ ॥ ३९ ॥

अश्वत्थामा—( सक्रोधं सकम्पं च । ) दुरात्मन्, राजवल्लभप्रगल्भ, सूतापसद, असम्बद्धप्रलापिन्,

---

समये, हे रणभीरो, त्वम् क्व असि = आसीः नु, नु शब्दः प्रश्ने, यदा त्वं तत्रैवासीस्तदा कथमेवं ब्रवीषीति भावः । शिखरिणी छन्दः ॥ ३८ ॥

विक्रमैकरसः = पराक्रमप्रधानः । किमिति-किं क्षत्रियविनाशं करिष्यसि, अथवा पितेवोदासीनो भविष्यसीति ।

अन्वयः—यदि, शस्त्रम् , उज्झितम् , ( ततः किम् ) अशस्त्रपाणयः, उदायुधान् , अरीन् , किम् , न, निवारयन्ति, नृपचक्रसन्निधौ, स्त्रिया, इव, अनेन, यत् , मौलिदलने, अपि, सुचिरम् , उदासितम् ॥ ३९ ॥

वीरो निःशस्त्रोऽपि स्वरक्षां कर्तुं समर्थ इत्याह—यदीति । यदि, शस्त्रम् , उज्झितं = त्यक्तम् , ततः किमिति शेषः । अशस्त्रपाणयः = अशस्त्रहस्ताः, उदायुधान् = उद्यतशस्त्रान् , अरीन् = शत्रून् , किं न, निवारयन्ति, निवारयन्त्येवेत्याशयः । नृपचक्रसन्निधौ = राजसमूहसमीपे, अनेन = त्वत्पित्रा, मौलिदलने = मस्तकखण्डने अपि उदासितम् = उपेक्षितम् । अत्र शाब्दोपमाऽलङ्कारः । मञ्जुभाषिणी छन्दः स ज सा ज गौ च यदि मञ्जुभाषिणीति लक्षणात् ॥ ३९ ॥

राजवल्लभ = नृपप्रिय, निन्दावाचकशब्दोऽयम् । सूतापसद = सूतपामर ।

---

कर्ण—(हसकर) ठीक, मैं कायर हूँ । तू पराक्रमी है । किन्तु तेरे पिता की बात स्मरण करके मुझे बड़ा सन्देह हो रहा है । और भी सुन ऐ मूर्ख—

यदि उन्होंने शस्त्र का त्याग किया तो क्या बिना शस्त्र के लिये हुए सशस्त्र शत्रुका प्रतिकार नहीं किया जा सकता ? वे तो केश खींचने पर इस राजन्यमण्डल के बीच अबलाओं की भाँति अधिक काल तक मौन हो गये ॥ ३९ ॥

**अश्वत्थामा**—( क्रोध से काँपता हुआ ) अरे दुष्ट, राजा का प्रियपात्र, चापलूस, सूताधम, बकवादी !

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाऽद्य।
तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम्॥ ४०॥

( इति तथा कर्तुमुत्तिष्ठति। )

कृप-दुर्योधनौ—वत्स, मर्षय मर्षय। ( इति निवारयतः। )

( अश्वत्थामा चरणप्रहारं नाटयति। )

कर्ण—( सक्रोधमुत्थाय, खड्गमाकृष्य। ) अरे दुरात्मन्, ब्रह्मबन्धो, आत्मश्लाघ,

अन्वय—दुःखिना, भीरुणा, वा, तेन, मम, पित्रा, द्रुपदतनयपाणिः, कथमपि, न, निषिद्धः, अद्य, भुजबलदर्पाध्मायमानस्य, तव, शिरशि, एषः, वामः, चरणः, न्यस्यते, एनम् वारय, ( त्वम् )॥ ४०॥

क्रुद्धोऽश्वत्थामा कर्णशिरसि चरणं न्यसितुमुत्थापयतीत्याह—कथमपि नेति। दुःखिना = शोकवता, भीरुणा = भययुक्तेन, तेन, मम, पित्रा, द्रुपदतनयपाणिः = धृष्टद्युम्नहस्तः, कथमपि, न, निषिद्धः = निवारितः, भुजबलदर्पाध्मायमानस्य = भुजबलदर्पेण आध्मायमानस्य विकत्थमानस्य, तव = कर्णस्य, शिरसि = उत्तमाङ्गे, चरणः = पादः, न्यस्यते = स्थाप्यते, एनम् = चरणम्, वारय त्वमिति शेषः। मालिनी छन्दः। न न म य य युतेय मालिनी भोगिलोकैरिति लक्षणात्॥ ४०॥

मर्षय = क्षमस्व, मा विक्षेप कुर्वित्यर्थः।

क्रुद्धः कर्णोऽप्याह—अरे दुरात्मन्निति। ब्रह्मबन्धो इति अग्राह्यनामा ब्रह्मबन्धु-

मेरे पिता ने पुत्रशोक अथवा भय के कारण किसी भी प्रकार से धृष्टद्युम्न के हाथ को न रोका, परन्तु भुजाओं के अभिमान से फूले न समाये हुए तुम्हारे शिर पर आज मेरा यह बायाँ पैर रक्खा जा रहा है उसका प्रतिकार कर॥ ४०॥

( पादप्रहार करने के लिए तय्यार हो जाता है )

**कृप और दुर्योधन**—पुत्र! क्षमा करो! क्षमा करो! ( रोकते हैं )।

( अश्वत्थामा पादप्रहार का अभिनय करता है )

**कर्ण**—( क्रोध से उठकर और तलवार खींच कर ) अरे दुरात्मन्! बकवादी, ब्राह्मणाधम, अपने मुंह मियाँ मिट्ठू बनने वाला!

जात्या काममवध्योऽसि चरणं त्विदमुद्धृतम् ।
अनेन लूनं खड्गेन पतितं द्रक्ष्यसि क्षितौ ॥ ४१ ॥

अश्वत्थामा—अरे मूढ, जात्या काममवध्योऽहम् । इयं सा जातिः परित्यक्ता । ( इति यज्ञोपवीतं छिनत्ति । पुनश्च सक्रोधम् । )

अद्य मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया ।
शस्त्रं गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम् ॥ ४२ ॥

---

रित्युच्यते । 'ब्रह्मबन्धुरधिक्षेपे निर्देशे च द्विजन्मना' मिति विश्वः । आत्मश्लाघ= आत्मप्रशंसा ।

अन्वय —जात्या, कामम् (त्वम्), अवध्यः, असि, तु, उद्धृतम् इदम् चरणम्, अनेन, खड्गेन, लूनम्, ( अत एव ) क्षितौ, पतितम्, द्रक्ष्यसि, ( त्वम् ) ॥ ४१ ॥

जात्या = ब्राह्मणत्वेन, अवध्यः = अहन्तव्यः, ब्राह्मणो न हन्तव्य इति स्मृतेः । असि अतः, उद्धृतम् = अयथावत्कृतम्, उत्थापितमित्यर्थः । तु = किन्तु, अनेन = मदीयेन खड्गेन = असिना लूनं = छिन्नम्, क्षितौ = भूमौ, द्रक्ष्यसि, साम्प्रतमिति शेषः । यश्चरणस्त्वया मम मस्तकस्योपरि प्रदानायोत्थापितः त खण्डयामीत्यर्थः । अत्र पदार्थगतकाव्यलिङ्गमलङ्कारः । पथ्यावक्त्र छन्दः ॥ ४१ ॥

जातिः = ब्राह्मणत्वं, परित्यक्ता-यज्ञोपवीतच्छेदनेनेति भावः ।

अन्वय.—अद्य, मया, असौ, किरीटी, मिथ्याप्रतिज्ञः, क्रियते, शस्त्रम्, गृहाण, वा, त्यक्त्वा, मौलौ, अञ्जलिम्, रचय, वा ॥ ४२ ॥

अद्य मया = अश्वत्थाम्ना, किरीटी = अर्जुनः, मिथ्याप्रतिज्ञः = मिथ्या प्रतिज्ञा यस्य सः, क्रियते, अयमाशयः अर्जुनस्य प्रतिज्ञाऽस्ति यदहं कर्णं हनिष्यामि परन्तु मयैव कर्णो हन्यते तथाचार्जुनेन कर्णस्याहननात्किरीटी मिथ्याप्रतिज्ञः स्यादिति । शस्त्रम् = आयुधम्, गृहाण = धारय, वा त्यक्त्वा = विहाय, शस्त्रमित्यस्यात्राप्यन्वयः मौलौ = मस्तके, अञ्जलिम्, रचय, वा, किमपि कुरु त्वां हनिष्याम्येवेति भावः । पथ्यावक्त्रं छन्दः ॥ ४२ ॥

---

ब्राह्मण होने के कारण निस्सन्देह अवध्य हो परन्तु इस उठे हुए चरण को इस तलवार के द्वारा कटकर भूमि पर पडा हुआ देखोगे ॥ ४१ ॥

अश्वत्थामा—रे मूर्ख ! यदि मैं ब्राह्मण होने के कारण अवध्य हूँ तो इस जाति को मैंने छोड दिया ( यज्ञोपवीत तोडता है फिर क्रोधपूर्वक )

आज मैं अर्जुन को प्रतिज्ञाभ्रष्ट करता हूँ । हाथ में शस्त्र लो अथवा शस्त्र छोडकर अञ्जलि बाँध शिरसे लगाओ ॥ ४२ ॥

( उभावपि खड्गमाकृष्यान्योन्यं प्रहर्तुमुद्यतौ । कृप-दुर्योधनौ निवारयतः )

दुर्योधनः—आचार्यपुत्र, शस्त्रग्रहणेनालम् ।

कृपः—वत्स, सूतपुत्र, शस्त्रग्रहणेनालम् ।

अश्वत्थामा—मातुल, मातुल, किं निवारयसि । अयमपि तातनिन्दाप्रगल्भः सूतापसदो धृष्टद्युम्नपक्षपात्येव ।

कर्णः— राजन्, न खल्वहं निवारयितव्यः ।

उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया ।
अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना ॥ ४३ ॥

अश्वत्थामा—राजन्, मुञ्च मुञ्चैनम् । आसादयतु मद्भुजान्तरनिष्पे-

---

तातनिन्दाप्रगल्भः = पितृनिन्दायां धृष्टः, धृष्टद्युम्नपक्षपातीति— धृष्टद्युम्नतुल्यः अतोऽयं हन्तव्य इति भावः । न मां निवारयेत्यर्थः ।

अन्वय.—धीरसत्त्वैः अवज्ञया, उपेक्षितानाम्, क्रोधान्धैः अत्रासितानाम्, मन्दानाम्, एषा, विकत्थना, भवति ॥ ४३ ॥

धीरसत्त्वैः = गम्भीरभावैः वीरैः, अवज्ञया = अनादरेण उपेक्षितानाम् = औदासीन्यं प्रापितानाम्, क्रोधान्धैः = कुपितैः, अत्रासितानाम् = भयमप्रापितानाम्, मन्दाना = हीनशक्तीनाम्, एषा = वीरोऽहमित्याकारिका, विकत्थना = आत्मप्रशंसा, भवति, अतो दण्डनीनोऽयमिति भावः । अनुष्टुप्छन्दः ॥ ४३ ॥

मद्भुजान्तरनिष्पेषसुलभं = मदीयौ यौ भुजौ तयोर्मध्ये यन्निष्पेषणं मर्दनं तेन सुलभम्, असूनां = प्राणानाम्, अवसादन = विनाशम्, आसादयतु = प्राप्नोतु,

---

( दोनों तलवार खींच कर एक दूसरे पर आघात करने की चेष्टा करते हैं। कृप और दुर्योधन निषेध करते हैं )

दुर्योधन—मित्र, आचार्यपुत्र ! शस्त्र न उठाइये ।

कृप—वत्स, सूतपुत्र ! शस्त्र उठाने की कोई आवश्यकता नहीं ।

अश्वत्थामा—मामा ! मामा ! क्यों मना करते हैं ? यह पिताजी की निन्दा में रत सूतनीच धृष्टद्युम्न का पक्षपाती है ।

कर्ण—महाराज ! मुझे वारण न कीजिए ।

धीरवीरपुरुष क्रोधोन्मत्त होकर भी दण्डित किए विना तिरस्कार की बुद्धि से जब दुष्टों की उपेक्षा कर देते हैं तो वे इस प्रकार आत्मप्रशंसा करते ही हैं ॥ ४३ ॥

अश्वत्थामा—राजन् ! इसे छोड़िए, छोड़िए । मेरी भुजाओं के बीच पिसकर चूर्ण

षसुलभमसूनामवसादनम् । अन्यच्च राजन् , स्नेहेन वा कार्येण वा यत्त्वमेनं ताताधिक्षेपकारिणं दुरात्मानं मत्तः परिरक्षितुमिच्छसि तदुभयमपि वृथैव ते । पश्य—

पापप्रियस्तव कथं गुणिनः सखायं
सूतान्वयः शशधरान्वयसम्भवस्य ।
हन्ता किरीटिनमहं नृप मुञ्च कुर्यां
क्रोधादकर्णमपृथात्मजमद्य लोकम् ॥ ४४ ॥

( इति प्रहर्तुमिच्छति । )

अयमिति शेषः । स्नेहेन = सौहार्देन, कार्येण = अर्जुनवधरूपेण, ताताधिक्षेपकारिणं = पितुर्निन्दकम् , एनं = कर्णम् , मत्तः = मत् , तसिल्प्रत्ययान्तोऽयम् । परिरक्षितुमिच्छसीत्यन्वयः । उभयं = स्नेहः कार्यञ्च ।

अन्वय —( हे ) नृप, गुणिनः, शशधरान्वयसम्भवस्य, तव, पापप्रियः, सूतान्वयः, अयम् , कथं, सखा, अहम् , किरीटिनम् , हन्ता, (माम्) मुञ्च, अद्य, क्रोधात् , लोकम् , अकर्णम् , अपृथात्मजम् , कुर्याम् ॥ ४४ ॥

कथं वृथेत्याह–पापप्रियस्तवेति । गुणिनः—ऐश्वर्यादिमतः, शशधरान्वयसम्भवस्य = चन्द्रवंशसमुत्पन्नस्य, तव = दुर्योधनस्य, पापप्रियः = पापी अयं = कर्णः, कथम् , सखा = मित्रम् , गुणिनो गुणिना सह मैत्री कार्या, नतु पापवतेति । एवमुत्तमकुलजातस्योत्तमकुलजातेन नतु नीचकुलजातेनेति भावः । यदुक्तं स्नेह, वृथेति तत्समर्थितम् अधुना कार्यवैयर्थ्यं समर्थयति—हे नृप इति । अहम् = अश्वत्थामा, किरीटिनम् = अर्जुनम् , हन्ता = विनाशयिता, अस्मीति शेषः । माम् , मुञ्च = त्यज, क्रोधात् = कोपात् अकर्णं = कर्णशून्यम् , हननेनेति भावः । अपृथात्मजं = पृथापुत्ररहितम् , अर्जुनरहितमित्यर्थः । कुर्यां = सम्पादयेयम् उभयमपि अद्य हनिष्यामि तथाचार्जुनवधरूपकार्यमस्माद् विनापि स्यादिति भावः । वसन्ततिलका छन्दः ॥ ४४ ॥

होने से प्राणों के अप्रयासलभ्य कष्ट का अनुभव करने दीजिए । और भी महाराज ! प्रेम के वश होकर अथवा कार्य्य के कारण जो आप मुझ से इस दुष्ट की, जो मेरे पिता की निन्दा कर रहा है, रक्षा करना चाहते हैं ये दोनों बातें आप की व्यर्थ ही हैं । देखिए —

यह दुष्ट, अधिरथ कुमार चन्द्रवंश में उत्पन्न तथा, गुणशाली आपका अभीष्टमित्र किस प्रकार होने योग्य है ? और हे राजन् ! मैं अर्जुन को मारूँगा इसे छोड़ दीजिए क्रोधावेश से आज मैं इस संसार को कर्ण और अर्जुन से विहीन बना दूँगा ॥ ४४ ॥

( प्रहार करना चाहता है । )

कर्णः—( खड्गमुद्यम्य । ) अरे वाचाट, ब्राह्मणाधम, अयं न भवसि। राजन्, मुञ्च मुञ्च ! न खल्वहं वारयितव्यः । ( हन्तुमिच्छति । )

( दुर्योधन-कृपौ निवारयतः । )

दुर्योधनः—कर्ण, गुरुपुत्र, कोऽयमद्य युवयोर्व्यामोहः ।

कृपः—वत्स, अन्यदेव प्रस्तुतमन्यत्रावेग इति कोऽय व्यामोहः। स्वबलव्यसनं चेदस्मिन्काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः ।

अश्वत्थामा—मातुल, न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः शातयितुम् ।

कृपः—वत्स, अकालः खलु स्वबलप्रधानविरोधस्य ।

अश्वत्थामा—मातुल, यद्येवम्

---

युवयोः = कर्णाश्वत्थाम्नोः, व्यामोहः = विवेकशून्यता विचित्ततेत्यर्थः ।

प्रस्तुतं = प्रस्तावविषयः, करणीयमित्यर्थः । साम्प्रत द्रुपदसुतो वध्य इति भावः । चेत् = यदि, स्ववलव्यसन = स्वसेनयोः व्यसनं क्रोधजन्यपरस्परविद्वेषः । अस्य = धार्तराष्ट्रस्य, युष्मत्तः = भवद्भ्यः वामः = अनिष्टः पन्थाः = मार्गः, भवति, इति, अस्य राजकुलस्य विनाशकारण भवानेव स्यादिति भावः ।

न लभ्यते—अस्य दर्प इत्यनेनान्वयः ।

स्ववलप्रधानविरोधस्य = स्वसेनाप्रमुखयोर्विद्वेषस्य, अकालः = असमयः ।

एवं—साम्प्रतं विरोधस्यायुक्तत्वे ।

---

कर्ण—( तलवार उठाकर ) अरे बकवादी, ब्राह्मणनीच ! अब यह नहीं रहेगा । राजन् छोड दीजिए, छोड दीजिए । मुझे न रोकिए ।

( मारना चाहता है )

दुर्य्योधन—कर्ण और उपाध्यायपुत्र ! आज आपलोगों को यह क्या हो गया है !

कृप—वत्स ! क्या करना है, और क्या करने लग गए, यह कैसी मूर्खता है ? 'ऐसे समय में इस राजवंश पर इनके शक्ति पर यह वज्रप्रहार आप लोगों से हो रहा है यह तो विपरीत मार्ग है ।

अश्वत्थामा—मामा ! क्रूरभाषी इस रथकारकुलाङ्गार का अभिमान चूर करने को अवसर न प्राप्त होगा ?

कृप—वत्स ! यह सेनानायकों के विरोध का समय नहीं ।

अश्वत्थामा—मामा ! यदि यह बात है तो फिर —

अयं पापो यावन्न निधनमुपेयादरिशरैः
परित्यक्त तावत्प्रियमपि मयास्त्रं रणमुखे ।
बलानां नाथेऽस्मिन्परिकुपितभीमार्जुनभये
समुत्पन्ने राजा प्रियसखबलं वेत्तु समरे ॥ ४५ ॥

( इति खड्गमुत्सृजति । )

कर्ण —( विहस्य । )कुलक्रमागतमेवैतद्भवादृशां यदस्त्रपरित्यागो नाम ।

अश्वत्थामा—ननु रे अपरित्यक्तमपि भावादृशैरायुधं चिरपरित्यक्तमेव निष्फलत्वात् ।

कर्ण —अरे मूढ,

---

अन्वय —यावत्, अरिशरैः, पापः, अयम्, निधनम्, न, उपेयात्, तावत्, मया, रणमुखे, प्रियम्, अपि, अस्त्रम्, परित्यक्तं, बलानाम्, नाथे अस्मिन्, (सति) समरे परिकुपितभीमार्जुनभये, समुत्पन्ने, (सति) प्रियसखबलम्, राजा, वेत्तु ॥४५॥

कर्णवधपर्यन्तमस्माभिः शस्त्र परित्यक्तमित्याह—अयमिति । अरिशरैः = शत्रुबाणैः पाप. = पापवान् अयं = कर्ण., निधन = मरणम्, न उपेयात् = प्राप्नुयात् तावत्, मया = अश्वत्थाम्ना, रणमुखे = सङ्ग्राममध्ये अस्त्रम् = आयुधम्, बलानां = सेनानाम्, नाथे = अधिपतौ, अस्मिन् = कर्णे सति, परिकुपितभीमार्जुनभये = परिकुपितौ यौ भीमार्जुनौ ताभ्यां भये, समुत्पन्ने = जाते सति, प्रियसखबलं = प्रियमित्रोर्जितम्, वेत्तु = जानातु । कीदृशो मम सखा बलवानिति जानात्विति भावः । शिखरिणीच्छन्दः ॥ ४५ ॥

कुलेति—यथा ते पित्रायुधं परित्यक्तं तथैव त्वमप्यकार्षीरिति भावः ।

निष्फलत्वादिति—गुरुशापादिति भावः ।

---

यह नीच जब तक विपक्षियों के बाणों का लक्ष्य नहीं बन जाता तब तक मैं अपने प्रिय शस्त्रों को युद्ध में परित्यक्त करदे रहा हूँ, इसकी सेनाध्यक्षता में भीम और अर्जुन के क्रुद्ध होने के कारण भयावह परिस्थिति होनेपर संग्राम क्षेत्र में राजा ( दुर्योधन ) अपने प्रियमित्र के पराक्रम को जान लें ॥ ४५ ॥

( यह कहकर शस्त्र फेंक देता है )

कर्ण—( हसकर ) आप जैसे लोगों का शस्त्रत्याग तो वंशपरम्परा से चला आया है ।

अश्वत्थामा—ऐसे लोग शस्त्र का परित्याग नहीं किए हैं तो भी इन्हें बहुत दिनों से ही न्यस्तशस्त्र ही समझना चाहिए क्योंकि उसकी उपयोगिता ही नहीं है ।

कर्ण—रे शठ !

धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥ ४६ ॥

( नेपथ्ये । )

आ: दुरात्मन्, द्रौपदीकेशाम्बराकर्षणमहापातकिन्, धार्तराष्ट्रापसद, चिरस्य खलु कालस्य मत्सम्मुखीनमागतोऽसि क्षुद्रपशो, क्वेदानीं गम्यते । अपि च । भो भो राधेयदुर्योधनसौबलप्रभृतयः पाण्डवविद्वेषिणश्चापपाणयो मानधनाः, शृण्वन्तु भवन्तः ।

कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा

अन्वय—यावत्, अहम्, धृतायुधः, तावत्, अन्यैः, आयुधैः, किम्, मम, अस्त्रेण, यत्, न वा, सिद्धम्, तत्, केन, सेत्स्यति ॥ ४६ ॥

त्वयाऽस्त्रपरित्यागे कृतेऽपि न कापि दुर्योधनस्य क्षतिरित्याह—धृतायुधो यावदिति । धृतायुधः = गृहीतशस्त्रः, अन्यैः = अन्यधृतैः 'विनापि प्रत्ययं पूर्वपदयोर्वा लोपो वाच्य इति कात्यायनवचनेन धृतशब्दस्य लोपः । आयुधैः किम्, न किमपि प्रयोजनमित्यर्थः । तत् = कार्यम्, केन = अस्त्रेण, सेत्स्यति = सिद्धिर्भविष्यति । सर्वकार्यसिद्धिविधायकोऽहमिति भावः । अनुष्टुप्छन्दः ॥ ४६ ॥

नेपथ्ये भीमोक्तिः—आः दुरात्मन्निति । कालस्येति—अत्र सम्बन्धविवक्षया षष्ठी, चिरकालम् व्याप्येत्यर्थः । मानधनाः = मानः अहङ्कार एव धनानि येषाम् ।

अन्वय—येन, नृपशुना, शिरोरुहे, पाञ्चालराजात्मजा, कृष्टा, राज्ञाम्, गुरूणाम् (च) पुरः, अस्याः, परिधानम्, अपि, येन, आहृतम्, यस्य, उरःस्थलशोणितासवम्, पातुम्, अहम्, प्रतिज्ञातवान्, सः, अयम्, मद्भुजपञ्जरे, निपतितः, (हे) कौरवाः संरक्ष्यताम् (युष्माभिः) ॥ ४७ ॥

दुराचारिणं दुःशासनं न कौरवाः साम्प्रतं रक्षितुं समर्था इत्याह—कृष्टेति । येन = दुःशासनेन नृपशुना = पशुरूपमनुष्येण, शिरोरुहे=केशावच्छेदेन, अवच्छेदे सप्तमी ।

जब तक मेरे हाथो में शस्त्र है तब तक मुझे और शस्त्रों की क्या आवश्यकता ? अथवा जो कार्य मेरे शस्त्रों से सम्पन्न न हो सकेगा वह और किसके द्वारा सम्पादन हो सकेगा ? ॥

( नेपथ्य में )

अरे नीच, पाञ्चाली के वस्त्र और केशके आकृष्ट करनेवाला, अतएव महापापी कौरवाधम ! बहुत समय के बाद मेरे समक्ष उपस्थित हुआ है ! अरे क्षुद्रपशु अब कहाँ जा रहा है ? और भी—

अये अये कर्ण, दुर्योधन तथा शकुनि प्रभृति पाण्डवद्रोही, धनुर्धर और मानी वीरों सुनो —

येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः ।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥४७॥

( सर्वे आकर्णयन्ति । )

अश्वत्थामा—( सोत्प्रासम् । ) अङ्गराज, सेनापते जामदग्न्यशिष्य, द्रोणोपहासिन् भुजबलपरिरक्षितसकललोक, ( धृतायुध (३।४६) इति पठित्वा । ) इदं तदासन्नतरमेव संवृत्तम् । रक्षैनं साम्प्रत भीमाद्दुःशासनम् ।

पाञ्चालराजात्मजा = द्रौपदी, कृष्टा = आकृष्टा, क्वचित्स्पृष्टेति पाठः । राज्ञां=नृपाणाम्, गुरूणां = द्रोणादीनाम्, पुरः = अग्रे, अस्याः = द्रौपद्याः, परिधानं = वस्त्रम्, अपहृतम् = आकृष्टम्, श्रेष्ठानां सविधे परिधानाकर्षणकथनेनातीवोद्धौत्यं प्रदर्शितम्, अतएवोच्यते—यस्योरःस्थलेति । उरःस्थलशोणितासवं = उरःस्थलं वक्षःस्थलं तस्य शोणितम् आसवो मद्यम् इव तम्, पातुं = पीतुम्, अहं = भीमः, सः = य एतादृशो धृष्टः, अयं = दुःशासनः, मद्भुजपञ्जरे = मद्भुजावेव पञ्जरं तस्मिन्, निपतितः संरक्ष्यतां = परित्रायताम्, कौरवबलेन नायं दुःशासनः शक्यते रक्षितुमिति भावः । शार्दूलविक्रीडितं छन्दः ॥ ४७ ॥

अङ्गराजेति—अङ्गराजेत्यनेन राज्ञो धर्मोऽयं यद्भीतस्य परित्राणं तच्च त्वं न कर्तुं शक्नोषीत्यभिव्यज्यते । सेनापत इत्यनेन त्वं न सेनापतिपदार्हः, तत्र तवाभिषेचनं दुर्योधनेनायुक्तं कृतमित्युपहासेन ध्वन्यते । जामदग्न्यशिष्येत्यनेनैतादृशस्य शिष्यो भूत्वापि न त्वं रक्षणसमर्थ इति महदाश्चर्यमिति सूचितम् । द्रोणोपहासिन्नित्यनेन त्वं द्रोणं वृथोपाहसः, द्रोणे सेनापतौ न भीमः पूर्णप्रतिज्ञोऽभवत् त्वयि तु भवतीति सूच्यते । भुजबलपरिरक्षितेत्यनेन किमुक्तं त्वया धृतायुध इति तदेवाह—धृतायुधेति ।

जिस मानवपशु ने द्रुपदात्मजा ( द्रौपदी ) के केशपाशों को पकड़ कर खींचा तथा जिसने राजाओं और गुरुजनों के समक्ष उन्हें विवस्त्र करने की चेष्टा की थी, और जिसके वक्षःस्थल के रुधिर मदिरा के छकने की मैंने प्रतिज्ञा की थी वही आज मेरे भुजा के पिंजड़े में आ फँसा है कौरव आकर उसे बचायें अर्थात् कौरवों में सामर्थ्य हो तो उसकी रक्षा करें॥

( सब लोग सुनते हैं )

**अश्वत्थामा**—( व्यङ्ग के साथ ) अङ्गदेश के स्वामिन्, सेनाध्यक्ष, अस्त्रविद्या में परशुराम के शिष्य, आचार्य द्रोण के विनिन्दक और भुजा के पराक्रम से समस्त विश्व के परित्राता ! अब वह समय समुपस्थित है । अब इस समय भीमसेन से इस दुश्शासन की रक्षा करो ।

कर्ण—आः, का शक्तिर्वृकोदरस्य मयि जीवति दुःशासनस्य छायामप्याक्रमितुम्। युवराज, न भेतव्यं न भेतव्यम्। अयमहमागतोऽस्मि। (इति निष्क्रान्तः।)

अश्वत्थामा—राजन् कौरवनाथ, अभीष्मद्रोणं सम्प्रति कौरवबलमालोडयन्तौ भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्यते निवारयितुम्। अत. स्वयमेव भ्रातुः प्रतीकारपरो भव।

दुर्योधन—आः, शक्तिरस्ति दुरात्मनः पवनतनयस्यान्यस्य वा मयि जीवति शस्त्रपाणौ वत्सस्य छायामप्याक्रमितुम्। वत्स, न भेतव्यं न भेतव्यम्। कः कोऽत्र भोः। रथमुपनय। (इति निष्क्रान्त'।)

(नेपथ्ये कलकल'।)

अश्वत्थामा—(सम्भ्रमम्।) मातुल, कष्टं कष्टम्। एष भ्रातुः प्रतिज्ञाभङ्गभीरु' किरीटी समं दुर्योधनराधेयौ शरवर्षैरभिद्रवति। सर्वथा पीतं

कौरवबल=कुरुराजसैन्यम्, आलोडयन्तौ=मर्दयन्तौ, राधेयेन=राधाऽपत्यकर्णेन, प्रतीकारपर'=उपायतत्पर.।

मातुल=कृपाचार्य,

प्रतिज्ञाभङ्गभीरुरिति-यद्यहं दुर्योधनकर्णौ शरैर्नाच्छादयामि तदा आभ्यां निवा-

कर्ण—अरे! भीम में क्या सामर्थ्य है कि मेरे जीवित रहते हुए दु शासन की छाया तक का स्पर्श करे। युवराज! डरिए न, मैं आ ही पहुँचा (यह कहकर चल पडता है)

अश्वत्थामा—राजन्, कौरवेश्वर! इस समय भीम और द्रोण से शून्य कौरवीय सेना का मन्थन करते हुए भीम और अर्जुन का प्रतिकार करने में कर्ण अथवा उसी प्रकार के किसी अन्य वीर में सामर्थ्य कहाँ? अत आप स्वय भाई की रक्षा के लिए तत्पर हो जाइए।

दुर्योधन—अरे! दुष्ट वायुपुत्र भीम में अथवा अन्य किसीमें क्या शक्ति है कि मेरे जीवित रहते हुए और हाथ में शस्त्र होते हुए अनुज दु शासन की छाया का स्पर्श करे। भ्रात! न डरो, न डरो अरे कौन है कोई यहाँ है! मेरा रथ उपस्थित कर (यह कहकर चल देता है)

(नेपथ्य में कोलाहल)

अश्वत्थामा—(सामने देखकर व्याकुलाहट के साथ) मामा! हाय बडे दुःख की बात है यह अर्जुन अपने भाई भीम की प्रतिज्ञाभङ्ग होजाने के भय से अमोघ शरों की वर्षा करते हुए दुर्योधन और कर्ण की ओर दौड रहा है। हाय! दु ख!! दुःख!!! अरे यह तो

दुःशासनशोणितं भीमसेन। न खलु विषहे दुर्योधनानुजस्यैनां विपत्तिमवलोकयितुम्। अनृतमनुमतं नाम। मातुल, शस्त्र शस्त्रम्।

सत्यादप्यनृतं श्रेयो धिक्स्वर्गं नरकोऽस्तु मे।
भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम्॥ ४८॥

( इति खड्गं ग्रहीतुमिच्छति। )

( नेपथ्ये। )

महात्मन्, भारद्वाजसूनो, न खलु सत्यवचनमुल्लङ्घयितुमर्हसि।

कृप—वत्स, अशरीरिणी भारती भवन्तमनृतादभिरक्षति।

---

रितो भीमः कदाचिद् दुःशासनरुधिरपानेनापूर्णप्रतिज्ञः स्यादिति भावः। अनृतमनुमतमिति—यन्मयोक्तं कर्णे जीवति अहं शस्त्रं न ग्रहीष्यामीति तन्मिथ्या भवत्विति भावः।

अन्वय.—सत्यात्, अपि, अनृतम्, श्रेयः, ( भवतु ) स्वर्गम्, धिक्, नरकः, अस्तु, भीमात्, दुःशासनम्, त्रातुम्, त्यक्तम्, आयुधम्, अत्यक्तम्॥ ४८॥

साम्प्रतं शस्त्र ग्राह्यमित्याह—सत्यादप्यनृतमिति। अनृतं=मिथ्या, श्रेयः=श्रेष्ठम्, शस्त्रग्रहणजन्यमिथ्यादोषान्नरकः श्रेयानेवेति भावः। दुःशासन=दुर्योधनानुजम्, त्रातुं=रक्षितुम्, अत्यक्त=अत्यक्ततुल्यम्, शस्त्रं गृह्यते मयेति भावः। पथ्यावक्त्रं छन्दः॥ ४८॥

अशरीरिणी=देहिनाऽनुक्ता, देववाणीत्यर्थः।

---

भीमने दुःशासन का रक्त पान कर ही लिया। दुर्योधन के कनिष्ट भ्राता की यह दुरवस्था मुझसे देखी नहीं जा सकती। मेरी प्रतिज्ञा असत्य ही सही मामा! शस्त्र!! शस्त्र!!!

सत्य की अपेक्षा मिथ्यावादिता कल्याण की जननी समझता हूँ स्वर्ग को धिक्कार है मुझे नरक भले ही क्यों न हो मैंने शस्त्र का परित्याग कर दिया है, तथापि भीमसेन से दुःशासन की रक्षा के लिए शस्त्र का परित्याग मैं नहीं करता अर्थात् उसे फिर ग्रहण करता हूँ॥ ४८॥

( यह कहकर खड्ग उठाना चाहता है )

( नेपथ्य में )

महानुभाव! भारद्वाजद्रोणकुमार!!! अब तक कभी सत्य से विचलित नहीं हुए हो अब भी विचलित नहीं होना चाहिए।

कृप—वत्स! आकाश वाणी तुम्हें प्रतिज्ञाभ्रष्ट होने से बचा रही है।

अश्वत्थामा—कथमियममानुषी वाङ्नानुमनुते सङ्ग्रामावतरणं मम। सर्वथा पाण्डवपक्षपातिनो देवाः। भोः कष्टं कष्टम्।

दुःशासनस्य रुधिरे पीयमानेऽप्युदासितम्।
दुर्योधनस्य कर्ताऽस्मि किमन्यत्प्रियमाहवे ॥ ४९ ॥

मातुल, राधेयक्रोधवशादनार्यमस्माभिराचरितम्। अतस्त्वमपि तावदस्य राज्ञः पार्श्ववर्ती भव।

कृप—गच्छाम्यहमत्र प्रतिविधातुम्। भवानपि शिविरसन्निवेशमेव प्रतिष्ठताम् ( परिक्रम्य निष्क्रान्तौ। )

इति तृतीयोऽङ्कः।



अन्वय—दुःशासनस्य, रुधिरे, पीयमाने, अपि, उदासितम्, ( मया ) ( तदा ) आहवे, दुर्योधनस्य, प्रियम्, अन्यत्, किम्, कर्ता, अस्मि ॥ ४९ ॥

साम्प्रतमुदस्तोऽग्रे किं करिष्यामीत्याह—दुःशासनस्येति। पीयमाने, भीमेनेति शेषः। उदासितम् मयेति शेषः। आहवे = सङ्ग्रामे, प्रियम् = इष्टम्, कर्ता-तृन्प्रत्ययान्तमिदम्, अतो 'न लोकाव्यये'ति निषेधान्न कृद्योगे षष्ठी। अस्मि, न किमपीत्यर्थः। यदि साम्प्रतं भीमाद्दुःशासनस्य रक्षा न कृता तदाऽग्रे दुर्योधनस्य क उपकारो विधास्यते मयेति भावः। अनुष्टुब् छन्दः ॥ ४९ ॥

अनार्यं = शस्त्रपरित्यागरूपम्।

इति प्रबोधिनी-व्याख्यायां तृतीयोऽङ्कः।



अश्वत्थामा—क्यों दैवी वाणी को यह मेरा युद्धक्षेत्र में उतरना अभीष्ट नहीं है? कष्ट की बात है। हाय देवता लोग भी पाण्डवों के ही समर्थक हैं। अब भीम के द्वारा दुःशासन का रक्तपान किया गया ही समझना चाहिए। हाय! दुःख!! दुःख!!!

दुःशासन का रक्तपान होते हुए भी मैं तटस्थ हूँ, अब संग्राम की आपत्तिकालमें इससे बढ़कर प्रिय और दूसरा कार्य दुर्योधन का कौनसा है जिसे मैं सम्पादन करूँ ॥ ४९ ॥

मामा! कर्ण के प्रति किए गये क्रोध के आवेश में पड़कर मैंने अच्छा कार्य नहीं किया, अच्छा, अब आप भी इस राजा की रक्षा के लिये तय्यार रहिये।

कृप—अच्छा मैं सहायतार्थ जा रहा हूं तुम शिविर के लिए प्रस्थान कर दो।

( दोनों घूमकर चले जाते हैं )

तीसरा अङ्क समाप्त॥



# अथ चतुर्थोऽङ्कः ।

( ततः प्रविशति प्रहारमूर्च्छितं रथस्थं दुर्योधनमपहरन्सूतः । )

( सूतः ससम्भ्रमं परिक्रामति । )

( नेपथ्ये )

भो भोः, बाहुबलावलेपप्रवर्तितमहासमरदोहदाः कौरवपक्षपातपणीकृतप्राणद्रविणसंचया नरपतयः, संस्तभ्यन्तां संस्तभ्यन्तां निहतदुःशासनपीतावशेषशोणितस्नपितबीभत्सवेषवृकोदरदर्शनभयपरिस्खलत्प्रहरणानि

---

उमाहृदानन्दकरं शिवस्य नेत्रोत्सवं भूतललोकभूतिम् ।
बर्हिर्मुखानामपि पूजनीयं सिद्धिप्रदं विघ्नपतिं नमामः ॥ १ ॥

अपहरन् = नयन्,

सम्भ्रमं = सोद्वेगम्,

बाहुबलावलेपप्रवर्तितमहासमरदोहदाः = बाहुबलस्य भुजपराक्रमस्य योऽवलेपः गर्वः तेन प्रवर्त्तितो यो महासमरः तस्य दोहदम् इच्छा येषामिति व्यधिकरणपदबहुव्रीहिः, 'तत्सम्बोधने' 'अथ दोहदम् इच्छा काङ्क्षा' इत्यमरः । कौरवपक्षपातपणीकृतप्राणद्रविणसञ्चयाः = कौरवपक्षपातेन दुर्योधनसाहाय्येन पणीकृताः प्राणा एव धनसञ्चयः यैः, यथा द्यूते द्रविणं पणीक्रियते तथा रणे नरपतिभिः प्राणा एव पणीकृता इति भावः । संस्तभ्यन्ताम् = अवरुध्यन्ताम्, इदं बलानीत्यनेनान्वेति । निहतदुःशासनपीतावशेषशोणितस्नपितबीभत्सवेषवृकोदरदर्शनभयपरिस्खलत्प्रहरणानि = निहतो यो दुःशासनः तस्य पीतावशेषो यत् शोणितं तेन स्नपितः आच्छादितः अतएव बीभत्सः भयानकः यो वृकोदरः भीमः तस्य दर्शनाद् यद् भयं तेन परिस्खलन्ति पतन्ति प्रहरणानि अस्त्राणि येषां तानि, प्रद्रवन्ति = धावन्ति इदं

---

( आहत अतएव चेतना रहित दुर्योधन को रथ पर बिठाकर अपहरण करता हुआ सारथि प्रवेश करता है )

( सारथि व्याकुल होकर इधर उधर घूमता है )

( नेपथ्य में )

अरे अरे बाहुबल के दर्प से महासंग्रामरूप महोत्सव के प्रवर्तकों, तथा कुरुवंश के लिए अपने प्राण तथा धनराशि को न्यौछावर कर देने वाले राजाओं ! भीमसेन ने दुःशासन का वध करके रक्तपान किया है और बचे हुये रक्त का विलेप अपने अङ्गों में किया है अतएव उनके भयावह आकृति को देखकर त्रस्त हो शस्त्रों का परित्याग करके समरविमुख

रणात्प्रद्रवन्ति बलानि ।

सूतः—( विलोक्य । ) कथमेष धवलचपलचामरचुम्बितकनककमण्डलुना शिखरावबद्धवैजयन्तीसूचितेन हतगजवाजिनरकलेवरसहस्रसम्मर्दविषमोद्घातकृतकलकलकिङ्किणीजालमालिना रथेन शरवर्षस्तम्भितपरचक्रपराक्रमप्रसरः प्रद्रुतमात्मबलमाश्वासयन्कृप. किरीटिनाभियुक्तमङ्गराजमनुसरति । हन्त, जातमस्मद्बलानामवलम्बनम् ।

( नेपथ्ये कलकलानन्तरम् । )

---

शत्रुप्रत्ययान्तम् , बलानि-अवरुध्यन्तामित्यर्थ. ।

धवलचपलचामरचुम्बितकनककमण्डलुना = स्वच्छ यच्चञ्चलञ्चामर तेन चुम्बितः कनककमण्डलुः यत्र तेन, शिखरावबद्धवैजयन्तीसूचितेन = शिखरे अग्रभागे अवबद्धा या वैजयन्ती पताका तया सूचितेन ज्ञातेन, हतगजवाजिनरकलेवरसहस्रसम्मर्दविषमोद्घातकृतकलकलकिङ्किणीजालमालिना=व्यापादितहस्तिघोटकमनुष्याणां यानि कलेवराणि शरीराणि तेषां सम्मर्दनेन यो विषमोद्घातः तेन करणभूतेन कृतः कलकलः महाध्वनि. येन किङ्किणीजालेन तन्माला अस्य तेन, इदं विशेषणत्रयं रथस्य, रथेनेत्यस्य करणत्वेन अनुसरणक्रियायामन्वयः । शरवर्षस्तम्भितपरचक्रपराक्रमप्रसरः = बाणवर्षणेन स्तम्भितः शत्रुसमूहपराक्रमप्रसरः येन सः, प्रद्रुतं = धावितम्, आत्मबलं = स्वसैन्यम् , आश्वासयन् = सन्तोषयन् , कृपः = कृपाचार्यः, किरीटिना= अर्जुनेन, अभियुक्तं = हननार्थं लक्ष्यीकृतम् , अङ्गराजं = कर्णम् , अनुसरति = पश्चाद् गच्छति । हन्त इति हर्षे 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयो'रित्यमरः ।

---

होकर सेनायें तितरबितर हो रही हैं उन्हें रोक रखिए, रोक रखिए ।

सूत—( देखकर ) जिस रथ के ऊपर सुवर्णकलश के साथ श्वेतवर्ण के सुन्दर चमर फरफरा रहे हैं, जिसके शिखराग्र भाग पर पताकायें फहरा रही हैं तथा युद्ध में मारे गए हाथी, घोडे और मनुष्यों के असख्य लोथों के ढेर से ऊँची नीची भूमि पर टक्कर खाने से जिस रथ में बँधी हुई छोटी छोटी घटियायें झङ्कृत होती रहती हैं इस प्रकार के रथ पर आरूढ होकर ये कृपाचार्य जी बाणों की वर्षा से शत्रुसैन्य की पराक्रमपूर्ण गति को जड़तुल्य बना देते हुए तथा भागती हुई अपनी सेना को धैर्य बँधाते हुए अर्जुन के साथ युद्ध करते हुए कर्ण की सहायता के लिए जा रहे हैं प्रसन्नता की बात है कि हम लोगों की सेना के लिए कुछ आधार हो गया ।

( नेपथ्य में कलकल ध्वनि के पश्चात् ) ।

भो भोः, अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः कौरवचमूभटाः पाण्डवपक्षपातिनश्च योधाः, न भेतव्यं न भेतव्यम् । अयमहं निहतदुःशासनपीवरोरःस्थलक्षतजासवपानमदोद्धतो रभसगामी स्तोकावशिष्टप्रतिज्ञामहोत्सवः कौरवराजस्य द्यूतनिर्जितो दासः पार्थमध्यमो भीमसेनः सर्वान्भवतः साक्षीकरोमि । श्रूयताम्—

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः

---

अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः = अस्माकं विलोकनाद् यद् भयं तेन स्खलिताः कार्मुककृपाणतोमरशक्तयः चापखड्गशर्वलाशक्तिनामकास्त्राणि, येषां तत्सम्बोधने, कौरवचमूभटाः = दुर्योधनसैन्ययोद्धारः, 'भटा योधाश्च योद्धारः' इत्यमरः । निहतदुःशासनपीवरोरःस्थलक्षतजासवपानमदोद्धतः = निहतो यो दुःशासनः तस्य पीवरं मांसलम् उरःस्थलं तस्य यत् क्षतजं रुधिरं तदेवासवः मद्यं तस्य पानेन मदोद्धतः, रभसगामी = त्वरितगन्ता, स्तोकावशिष्टप्रतिज्ञामहोत्सवः = स्तोकम्, अल्पम् अवशिष्टः प्रतिज्ञामहोत्सवः यस्य । भीमस्य प्रतिज्ञासीद् यत् दुःशासनस्य रुधिरं पास्यामि, दुर्योधनस्य च जघनं त्रोटयिष्यामि शतं भ्रातॄंश्च हनिष्यामि तत्र केवलं दुर्योधनस्य जघनत्रोटनं शिष्यते अत उच्यते-स्तोकावशिष्टप्रतिज्ञेति । द्यूतनिर्जितो दास इत्यनेन दासत्वेन दुर्योधनेन यो भीम उपहसितः स एव सम्प्रति तद्वधार्थं तं गवेषत इति सूच्यते ।

अन्वय — मानधनस्य, कार्मुकभृतः, दुर्योधनस्य, अग्रतः, कुरुबान्धवस्य, मृषतः, कर्णस्य, शल्यस्य, च, प्रत्यक्षम्, पाण्डववधूकेशाम्बराकर्षिणः, जीवतः, एव, तस्य, तीक्ष्णकरजक्षुण्णात्, वक्षसः, कोष्णम्, असृक्, अद्य, मया, पीतम् ॥ १ ॥

स दुराचारी दुःशासनो मया दण्डित इत्याह—राज्ञो मानधनस्येति । मानधनस्य = मानिनः, कार्मुकभृतः = चापधारिणः, राज्ञः, अनेन विशेषणेन क्षत्रियस्य

---

( भीम )—अरे अरे कौरवसेना के शूरवीरों तथा पण्डवों के सहायकों ! मुझे देखकर ही भय के कारण आप लोगों के हाथ से धनुष, तलवार, गडासे तथा वर्छिया छूटकर गिरी जा रही हैं । आप लोग भयभीत न हों, भयभीत न हों । संहार किए गए दुश्शासन के विशाल वक्ष-स्थल के रुधिररूपी मदिरा के छकने से मदोन्मत्त ( पागल ) होकर वेग से गमन करता हुआ यह जो मैं भीमसेन पाण्डवों में मँझला तथा कौरवनरेश की द्यूतक्रीडा से जीतकर दास बनाया हुआ तथा जिसके प्रतिज्ञामहोत्सव की पूर्ति बहुत थोड़े अंशों में अवशिष्ट है, आप सबलोगों को साक्षी बनाकर कहता हूँ । ध्यान दीजिए —

अभिमानैकधन तथा सशस्त्र राजा दुर्योधन के, उसी प्रकार कौरव सहायक शल्य और

प्रत्यक्षं कुरुबान्धवस्य मृषतः कर्णस्य शल्यस्य च ।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥ १ ॥

सूत—( श्रुत्वा । सभयम् । ) कथमासन्न एव दुरात्मा कौरवराजपुत्रमहावनोत्पातमारुतो मारुतिः । अनुपलब्धसञ्ज्ञश्च महाराजः । भवतु । दूरमपहरामि स्यन्दनम् । कदाचिद्दुःशासन इवास्मिन्नप्ययमनार्योऽ-

---

धर्मोऽय यत् परश्चातव्यः तत्रापि च स्वबन्धुरवश्यं तच्च त्वया न कृतमित्यतीवापमानं तवेति, चापधारित्वेन च रक्षणयोग्यतास्तीति, मानधनस्य च मानहानिस्तीव लज्जाजनिकेति च सूच्यते । अग्रतः=अग्रे, नतु परोक्षम्, कुरुवान्धवस्य=कर्णपक्षे कुरुमित्रस्य शल्यपक्षे कुरुबन्धोः मातुलस्येत्यर्थः । 'बान्धवो बन्धुमित्रयो' रिति हैमः । मृषतः=सहिष्णोः, शल्यस्य=मातुलस्य च प्रत्यक्षम्, अद्य=इदानीम्, 'इदानीमद्ये'ति कलापसूत्रम् । पाण्डववधूकेशाम्बराकर्षिण'=द्रौपदीकेशवस्त्राकर्षकस्य, जीवतः=प्राणान् धारयतः, एतेन स्वस्मिन्नतिपराक्रमः सूचितः । तस्य=दुःशासनस्य, तीक्ष्णकरजक्षुण्णात्=निशितनखविदारितात्, वक्षसः=हृदयात, कोष्णं=ईषदुष्णम्, असृक्=रुधिरम्, मया=भीमेन पीतम् । अत्र प्रथमचरणे परिकरालङ्कारः । शार्दूलविक्रीडित छन्दः ॥ १ ॥

आसन्न=समीपवर्ती, कौरवराजपुत्रमहावनोत्पातमारुतो मारुतिः=धृतराष्ट्रपुत्रा एव महावन तस्य य उत्पात वायुः तद्वत् मरुत. अपत्य भीमः । अनुपलब्धसञ्ज्ञ'=अप्राप्तचैतन्य. मूर्च्छित इत्यर्थः । महाराज.=दुर्योधनः । स्यन्दनं=रथम् ।

---

कर्ण के देखते देखते आज मैंने पाण्डवों की धर्मपत्नी [ द्रौपदी ] के केश और वस्त्र के आकर्षण करने वाले दुरात्मा के जीवित रहते हुए ही उसके वक्ष स्थल से तीक्ष्ण नखप्रहार के द्वारा ताजा ताजा रक्त निकाल कर पी लिया अर्थात् मैंने दुश्शासन के रक्तपान की जो प्रतिज्ञा की थी वह आज पूर्ण हो गई यद्यपि वह स्वयं एक वीर, धनुधर तथा मानी है उसका बडा भाई भी वीर है ; यह भी नहीं कि उनकी अनुपस्थिति में किन्तु उसके देखते देखते । इसके अतिरिक्त उसके सहायक शल्य और कर्ण जैसे वीर भी उपस्थित थे इतना ही नही कि उसे मारकर उसका रक्त पान किया हूँ उसके जीते रहते हुए ही उसका रक्त निकाल कर पान किया हूँ ॥ १ ॥

सूत—( सुनकर भय से ) अरे ! कौरवनरेश के पुत्ररूपी विशाल वन को निर्मूल करने के लिए भयङ्कर आँधी की भाँति यह दुष्ट भीमसेन समीप में ही वर्तमान है । महाराज को अभी चेतना नहीं आई, अच्छा, मैं अब रथ को दूर भगाये लिये जारहा हूँ क्योंकि कदाचित्

नार्यमाचरिष्यति । ( त्वरितं परिक्रम्यावलोक्य च । ) अये, अयमसौ सरसीसरोजविलोलनसुरभिशीतलमातरिश्वसंवाहितसान्द्रकिसलयो न्यग्रोधपादपः । उचिता विश्रामभूरियं समरव्यापारखिन्नस्य वीरजनस्य । अत्र स्थितश्चायाचिततालवृन्तेन हरिचन्दनच्छटाशीतलेनाप्रयत्नसुरभिणा दशापरिणामयोग्येन सरसीसमीरणेनामुना गतक्लमो भविष्यति महाराजः । लूनकेतुश्चाय रथोऽनिवारित एव प्रवेक्ष्यति छायामिति । (प्रवेशं रूपयित्वा ।) क. कोऽत्र भोः । ( समन्तादवलोक्य । ) कथं न कश्चिदत्र परिजनः । नूनं तथाविधस्य वृकोदरस्य दर्शनादेवंविधस्य च स्वामिनस्त्रासेन शिबिरसन्नि-

अनार्यम् = अनुचितम् । सरसीसरोजविलोलनसुरभिशीतलमातरिश्वसंवाहितसान्द्रकिसलय. = सरसीनां सरोजानाञ्च विलोलनेन सञ्चालनेन शीतलः सुरभि' सुगन्धिश्च यो मातरिश्वा वायुः तेन सवाहितम् संचालित किसलयं पल्लवः यस्मिन् स., न्यग्रोधपादप. = वटवृक्षः, अस्तीति शेष' । समरव्यापारखिन्नस्य = सङ्ग्रामकरणेन श्रान्तस्य, विश्रामभू. = श्रमनिवारणस्थानम् , इयम् , उचिता = योग्या । अयाचिततालवृन्तेन = स्वय प्राप्तव्यजनेन, हरिचन्दनच्छटाशीतलेन = श्रीखण्डशीतलेन, अप्रयत्नसुरभिणा = अनायासोत्तमगन्धवता, दशापरिणामयोग्येन = मूर्च्छानिवारणसमर्थेन, सरसीसमीरणेन = सरोवरस्थवायुना, अमुना = उपस्थितेन, गतक्लमः = विगतग्लानि. श्रमरहित. । लूनकेतु' = छिन्नध्वजः, अनिवारितः = अनवरुद्धः स्वयमेवेत्यर्थ. । प्रवेक्ष्यति = प्रवेश करिष्यति । परिजन = सेवकः ।

दुश्शासन की तरह इन पर भी यह नीच नीचता कर जाय (शीघ्र ही घूमकर और देखकर) अहा ! यह एक वटवृक्ष ( वडका पेड ) है । सरोवर के कमलों का प्रकम्पन करने के कारण शीतल और सुगन्ध पूर्ण वायु के झकोरों से इसकी घनी और सुकोमल पत्तियाँ मन्द मन्द हिल रही हैं । समराङ्गण में युद्ध करते करते श्रान्त वीरपुरुष के विश्राम करने योग्य यह सुन्दर भूमि है । यहाँ रहकर विना किसी आयास के तालपत्रों के उपजीवन ( पङ्खा ) द्वारा तथा हरिचन्दन के वृक्षों की शीतलता से और अप्रयत्नलभ्य सुगन्ध से तथा भाग्यवश सरोवरों के इस सुखकर वायु के सेवन से महाराज की खिन्नता दूर हो जायगी । ( ऊपर की ओर देखकर ) रथ की पताका भी कटकर गिर गई है अत यह [ रथ ] विना किसी अवरोध के छाया में चला जायगा । (छाया में रथ ले जाने का अभिनय करता है ) कोई है ? [ महाराज के छत्र चामर और पङ्खों को शीघ्र उपस्थित करो ] । ( चारों ओर देखकर ) क्यों क्या कारण है यहाँ कोई अनुचर नहीं है ? निश्चय भीम को उस भीषणवेश में देख और महाराज की भी यह दशा देखकर सभी नौकर चाकर डर गये हैं और पढाव पर तम्बुओं

वेशमेव प्रविष्टः । कष्टं भोः, कष्टम् ।

दत्त्वा द्रोणेन पार्थादभयमपि न संरक्षितः सिन्धुराजः
क्रूरं दुःशासनेऽस्मिन्हरिण इव कृतं भीमसेनेन कर्म ।
दुःसाध्यामप्यरीणां लघुमिव समरे पूरयित्वा प्रतिज्ञां
नाहं मन्ये सकामं कुरुकुलविमुखं दैवमेतावतापि ॥ २ ॥

( राजानमवलोक्य । ) कथमद्यापि चेतनता न लभते महाराजः । भोः,

---

अन्वय.—द्रोणेन, पार्थात्, अभयम्, दत्त्वा, अपि, सिन्धुराजः, न, संरक्षितः, भीमसेनेन, अरीणाम्, दुःसाध्याम्, अपि, लघुमिव, प्रतिज्ञाम्, समरे, पूरयित्वा, अस्मिन्, दुःशासने, हरिणे, इव, क्रूरम्, कर्म, कृतम्, एतावता, अपि, अहम्, कुरुकुलविमुखम्, दैवम्, सकामम्, न मन्ये ॥ २ ॥

सिन्धुराजादीनां वधेऽपि कुरुकुलविपरीतभाग्यस्य सन्तोषो न जातोऽत एव दुर्योधनश्चैतन्यं न लभत इत्याह—दत्त्वेति । पार्थात् अभयं=भयाभावम्, दत्त्वा, अपि, सिन्धुराजः=जयद्रथः, न संरक्षितः, भीमसेनेन, अरीणां=शत्रूणाम्, दुःसाध्यां=दुःखेन सम्पादनीयाम्, 'कृत्यानामी'ति कर्तरि षष्ठी । प्रतिज्ञां=शोणितपानरूपाम्, पूरयित्वा=निष्पाद्य, हरिणे=मृगे, इव क्रूरं=निर्दयम्, कर्म, कृतम् एतावता=एकोनशतधृतराष्ट्रपुत्रादिवधेन, अपि अहं=सूतः, दैवं=भाग्यम्, सकामं=पूर्णमनोरथम्, न मन्ये=स्वीकरोमि । अतः परमपि किमपि भावीत्यर्थः । अत्रोपमाऽलङ्कारः । स्रग्धरा छन्दः ॥ २ ॥

चेतनतां=चैतन्यम्, विगतमूर्च्छत्वमित्यर्थः ।

---

के भीतर प्रवेश कर गए हैं । बड़े कष्ट की बात है ।

द्रोणाचार्य ने अर्जुन से जयद्रथ की रक्षा के लिए अभयदान दिया था तथापि रक्षा नहीं किया । भीमसेनने हरिणके सदृश दुश्शासन का वधरूप नींच कर्म किया । जिस प्रतिज्ञा की पूर्ति शत्रुओं के लिये असम्भव बात थी उसकी बड़ी सरलता से पूर्ति कराके-मेरा जहाँ तक विचार है-कुरुवंश के विपरीत विधाता इतने पर भी सन्तुष्ट नहीं है अर्थात् द्रोणाचार्य जैसे वीर जयद्रथ की रक्षा का भार लिए हुए थे और अर्जुन ने उसका वध कर ही डाला । दुश्शासन वीर था तो भी भीमसेन उसका इस प्रकार से वध किया जैसे कोई भोले भाले हरिण का वध करे और वह चूँ तक न बोले । पाण्डवों की भीषण से भीषण प्रतिज्ञायें बड़ी सुगमता से पूरी होती दीख पड़ती हैं इससे तो यही विचार में आता है कि विधाता सर्वथा कौरववंश के प्रतिकूल है और इतना सब कुछ कराके भी तृप्त नहीं है भविष्य में न मालूम क्या क्या करावेगा ॥ २ ॥

( राजा को देखकर ) क्यों अब भी महाराज की मूर्च्छा दूर नहीं हो रही है ! बड़े

कष्टम् ( निःश्वस्य । )

मदकलितकरेणुभज्यमाने विपिन इव प्रकटैकशालशेषे ।
हतसकलकुमारके कुलेऽस्मिंस्त्वमपि विधेरवलोकितः कटाक्षैः ॥ ३ ॥

( आकाशे लक्ष्यं वद्ध्वा । ) ननु भो हतविधे, भरतकुलविमुख,
अक्षतस्य गदापाणेरनारूढस्य संशयम् ।

---

अन्वय—मदकलितकरेणुभज्यमाने, प्रकटैकशालशेषे, विपिने, इव ;हतसकलकुमारके, अस्मिन् , कुले, त्वम् , अपि, विधेः, कटाक्षैः, अवलोकितः ॥ ३ ॥

मदकलितकरेणुभज्यमाने = मदेन कलितः व्याप्तो यः करेणु' हस्ती तेन भज्यमाने समृद्यमाने, प्रकटैकशालशेषे = प्रकटः एकशालः एकमात्रवृक्षः शेषः अवशिष्टः यत्र तस्मिन् , विपिने = वने, इव । कुरुकुले एक एव दुर्योधनोऽवशिष्टः सर्वे च भीमेन विनाशिता इति भावः । हतसकलकुमारके = व्यापादितसकलराजपुत्रे, अस्मिन् कुले त्व = महाराजदुर्योधन., विधेः = दैवस्य कटाक्षैः = भ्रूभङ्गैः, अवलोकितः, किं त्वमपि चेतनतां न लप्स्यस इति भावः । अत्र पूर्णोपमालङ्कारः । पुष्पिताग्रा छन्दः ॥ ३ ॥

हतविधे = हतभाग्य दुर्भाग्येत्यर्थः ।

अन्वयः—गदापाणेः, अक्षतस्य, संशयम् , अनारूढस्य, भीमसेनस्य, एषा, अपि, प्रतिज्ञा, त्वया, पूर्यते ॥ ४ ॥

दुर्योधनस्य मूर्च्छां विलोक्य तस्य मरणं सन्दिहान आह—अक्षतस्येति । गदापाणेः = गदाधारिणः, अक्षतस्य = प्रहारानभिहतस्य संशय = प्रतिज्ञापूर्त्यर्थं प्रवृत्ते युद्धे गदायुद्धकुशलो दुर्योधनो मां हनिष्यति अथवा मम प्रतिज्ञा पूर्णा भविष्यती-

---

दु,ख की बात है ! ( आह भरकर ) मदोन्मत्त गजराज के द्वारा जङ्गल के ध्वस्त कर देने पर जिस प्रकार एकाध ही वृक्ष कहीं पर अवशिष्ट दिखलाई पडे उसी प्रकार इस कुरुवश के सम्पूर्ण राजकुमारों के नाश हो जाने पर एकमात्र अवशिष्ट आप [ दुर्योधन ] दुर्दैव के नेत्रों से देखे जारहे हैं अर्थात जिस प्रकार एक पागल हाथी विशाल और गम्भीर वन में घुस कर उसके सभी वृक्षों को तोड़ताड कर नष्ट कर डाले और वडी कठिनाई से एकाध वृक्ष वच जाँय उसी प्रकार इस मतवाले भीम के द्वारा कुरुवश के सभी राजकुमारों का सहार हो चुका और केवल आप [ दुर्योधन ] जीते हुए वच गये हैं दुर्दैव की दृष्टि आप पर भी पड रही है कदाचित आपको भी न समाप्त करदे ॥ ३ ॥

( आकाश की ओर देखकर ) ऐ भरतवश से रुष्ट और क्रूर विधाता !

भीमसेन के हाथ में गदा है । इनकी कोई क्षति भी नहीं हुई । इन्हें किसी प्रकार के

तथापि भीमसेनस्य प्रतिज्ञा पूर्यते त्वया ॥ ४ ॥

दुर्योधनः—( शनैरुपलब्धसंज्ञः । ) आः, शक्तिरस्ति दुरात्मनो वृकोदरहतकस्य मयि जीवति दुर्योधने प्रतिज्ञां पूरयितुम् । वत्स दुःशासन, न भेतव्यं न भेतव्यम् । अयमहमागतोऽस्मि ननु । सूत, प्रापय रथं तमेवोद्देशं यत्र वत्सो मे दुःशासनः ।

सूत —आयुष्मन्, अक्षमाः सम्प्रति वाहास्ते रथमुद्वोढम् ( अपवार्य । ) मनोरथं च ।

दुर्योधनः—( रथादवतीर्य, सगर्वं साकूतं च । ) कृतं स्यन्दनगमनकालातिपातेन ।

सूत —( सवैलक्ष्यं सकरुणं च । ) मर्षयतु मर्षयतु देवः ।

---

त्याकारकविपर्ययम्, अनारूढस्य = अप्राप्तस्य, यदि अचेतनता न विनष्टा स्यात्तदा त्वयत्नेन भीमः पूर्णप्रतिज्ञः स्यादिति भावः । एषा = दुर्योधनोरुभङ्गजन्यवधरूपा, प्रतिज्ञा = प्रतिश्रुतिः, त्वया = हतविधिना, पूर्यते = सम्पूर्णीक्रियते । अनुष्टुब्छन्दः ॥

उपलब्धसंज्ञः = प्राप्तचैतन्यः । अनपगतदुःशासनवधो दुर्योधनो दुःशासनत्राणचिकीर्षुराह—आः शक्तिरिति ।

अक्षमाः = असमर्थाः, वाहाः = अश्वाः, मनोरथं = दुःशासनत्राणरूपम् ।

स्यन्दनगमनकालातिपातेन = रथगमनकालयापनेन ।

धिक् सूत = हे सूत त्वां धिक् ।

---

संशयरूप दोले पर भी नहीं झूलना पडा तो भी इस भीमसेन की प्रतिज्ञा की पूर्ति करते जा रहे हो ॥ ४ ॥

**दुर्य्योधन**—( धीरे धीरे चैतन्य होकर ) ओह ! वायुपुत्र दुष्ट अभागे भीमसेन की क्या शक्ति है जो मुझ दुर्य्योधन के जीवित रहते हुए अपनी प्रतिज्ञा की पूर्ति करे । वत्स दुश्शासन ! त्रस्त न हो [ डरो न ] यह लो, अब मैं आ ही गया !! सूत, मेरे रथ को उसी स्थान पर ले चलो जहाँ मेरा प्यारा दुश्शासन है ।

**सूत**—महाराज ! इस समय आप के घोडे इस रथ को खींचने में असमर्थ हैं (छिपाकर) और मनोरथ को अर्थात् आपकी इच्छापूर्ण करने में भी असमर्थ हैं ।

**दुर्य्योधन**—( रथ से उतर कर अभिमान के साथ व्यङ्गपूर्वक ) समय बिताकर रथ पर चलने की कोई आवश्यकता नहीं ।

**सूत**—( लज्जित होकर कातर स्वरसे ) क्षमा कीजिए । क्षमा कीजिए । महाराज !

दुर्योधन—धिक्सूत, किं रथेन । केवलमरातिविमर्दसंघट्टसञ्चारी दुर्योधनः खल्वहम् तद्गदामात्रसहायः समरभुवमवतरामि ।

सूतः—देव, एवमेतत् ।

दुर्योधन—यद्येवं किमेवं भाषसे । पश्य—

बालस्य मे प्रकृतिदुर्ललितस्य पापः
पापं व्यवस्यति समक्षमुदायुधोऽसौ ।
अस्मिन्निवारयसि किं व्यवसायिनं मां

अन्वय—प्रकृतिदुर्ललितस्य बालस्य, पापम्, मे समक्षम्, पापः, उदायुधः, असौ, व्यवस्यति, अस्मिन्, व्यवसायिनम्, माम्, किम्, निवारयसि, ते, क्रोधः, न, नापि, करुणा, नच, लज्जा, अस्ति ॥ ५ ॥

बालस्येति । प्रकृतिदुर्ललितस्य = स्वभावतः चपलस्य, बालस्य = अल्पवयस्कस्य, पापं = मरणम्, मे = मम, समक्षम्, पापः = पापी उदायुधः = उद्यतशस्त्रः, असौ = भीमः, व्यवस्यति, अस्मिन् = भीमविषये, व्यवसायिनम् = उद्योगिनम् भीमहननार्थमिति भावः । मां = दुर्योधनम्, निवारयसि = अवरुणत्सि, किम्, ते

दुर्योधन—सूत ! तुझे धिक्कार है ! रथ से क्या ? शत्रुओं की ठसाठस भीड के भीतर मैं [ दुर्योधन ] अकेला भ्रमण करने वाला हूं । केवल गदा हाथ में लेकर मैं रणक्षेत्र में उतरने जा रहा हूं ।

सूत—महाराज, आप ऐसे ही हैं [ इसमें सन्देह ही क्या ? ]

दुर्योधन—यदि यही बात है तो फिर इस प्रकार की बातचीत क्यों कर रहे हो ? अर्थात् जब तुम्हें मेरे पराक्रम के विषय में ज्ञान है तो फिर क्यों कह रहे हो कि घोडे रथ नहीं खींच सकते । देखो.—

यह नीच [ भीमसेन ] हाथ में शस्त्र लेकर शैशवकाल से मेरे आँखों के सामने लालित इस बालक [ दुश्शासन ] के वध की चेष्टा कर रहा है । इस पापी का प्रतिकार करते हुए मुझे क्यों निषेध कर रहे हो क्या तुम्हें [ शत्रुपर ] क्रोध नहीं आता ? क्या [ बालक पर ] दया का सञ्चार भी नहीं होता ? अथवा क्या तुम्हें [ अपने कार्यपर ] लज्जा भी नहीं लगती ? तात्पर्य यह कि दुश्शासन मेरा छोटा भाई है अभी बच्चा है लडकपन से दुलारा गया है अत लडकपन के कारण द्रौपदी के केश और वस्त्रों को इसने खींचा है । फिर भी उसका बदला चुकाने के लिए यह भीमसेन शस्त्र लेकर उद्यत है । मैं उसका प्रतिकार करने के लिए तय्यार हूं । तुम रोक रहे हो इसमें ऐसे दुरात्मा शत्रु पर तुम्हारे क्रोध की ज्वाला नहीं भडकती है और न तुम्हें लड़के पर दया आती है और

क्रोधो न नाम करुणा न च तेऽस्ति लज्जा ॥ ५ ॥

सूतः—( सकरुणं पादयोर्निपत्य । ) एतद्विज्ञापयामि । आयुष्मन्, सम्पूर्णप्रतिज्ञेन निवृत्तेन भवितव्यमिदानीं दुरात्मना वृकोदरहतकेन । अत एवं ब्रवीमि ।

दुर्योधनः—( सहसा भूमौ पतन् । ) हा वत्स दुःशासन, हा मदाज्ञाविरोधितपाण्डव, हा विक्रमैकरस, हा मदङ्कदुर्ललित, हा अरातिकुलगजघटामृगेन्द्र, हा युवराज, क्वासि । प्रयच्छ मे प्रतिवचनम् । ( इति निःश्वस्य मोहमुपगतः । )

सूतः—राजन्, समाश्वसिहि समाश्वसिहि ।

---

क्रोधो न, राजबन्धुवधकाले त्वयाऽवश्यं क्रोधः कार्यः । नापि, करुणा = दया, परविलापकालेऽवश्यं दया कार्या । न च लज्जा अस्ति । मम समक्षं यच्छत्रुणा प्रतिज्ञा पूर्यते तदतीव लज्जाकरमिति भावः । वसन्ततिलका छन्दः ॥ ५ ॥

विज्ञापनमेवाह—आयुष्मन्निति । सम्पूर्णप्रतिज्ञेन = पीतदुःशासनशोणितेन अत एव निवृत्तेन, दुरात्मना वृकोदरहतकेन = दुष्टभीमेन, भवितव्यम्, इदानीमित्यन्वयः । एवं = मर्षयतु आयुष्मानिति, युद्धे न गन्तव्यमित्यर्थः ।

मदाज्ञाविरोधितपाण्डव = ममाज्ञया विरोधितः पाण्डवः येन तत्सम्बोधने मयाज्ञयैव द्रौपदीकेशाम्बराकर्षणं कृतं ततश्च तस्य पाण्डवेन विरोधो जात इति भावः । विक्रमैकरस = विक्रमः एकरसः अद्वितीयगुणः यस्य 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । अरातिः = शत्रुः, घटा = समूहः, मृगेन्द्रः = सिंहः मोहं = मूर्च्छाम्, उपगतः = प्राप्तः ।

---

ऐसे व्यसन के समय में 'मेरे घोडे रथ खींचने में असमर्थ हैं'। यह बात कहने में तुम्हें लज्जा भी नहीं आती ॥ ५ ॥

सूत—( करुणा के साथ चरणों पर गिरकर ) विनम्र निवेदन है—'महाराज ! इस समय तक दुरात्मा नीच भीमसेन अपनी प्रतिज्ञा की पूर्ति कर चुका होगा' इसीलिए मैं इस प्रकार कह रहा हूँ।

दुर्योधन—( एकाएक पृथ्वीपर गिरता हुआ ) हा प्रिय दुश्शासन ! हाय मेरी आज्ञा से पाण्डवविरोधी !! हाय पराक्रमपरायण !!! हाय मेरी गोदी के खेलने वाले ! हाय शत्रुकुलरूपी हाथियों के झुण्ड के लिए सिंह ! हाय युवराज ! तुम कहाँ हो ? मुझे उत्तर दो ।

( ठंढी श्वास लेकर मूर्छित हो जाता है )

सूत—महाराज ! धैर्य धारण कीजिए; धैर्य धारण कीजिए ।

दुर्योधनः—( संज्ञां लब्ध्वा । निःश्वस्य । )

युक्तो यथेष्टमुपभोगसुखेषु नैव
त्वं लालितोऽपि हि मया न वृथाग्रजेन ।
अस्यास्तु वत्स तव हेतुरहं विपत्ते-
र्यत्कारितोऽस्य विनयं न च रक्षितोऽसि ॥ ६ ॥

( इति पतति । )

सूतः—आयुष्मन्, समाश्वसिहि समाश्वसिहि ।

दुर्योधनः—धिक् सूत, किमनुष्ठितं भवता ।

---

अन्वय—( हे ) वत्स, त्वम्, उपभोगसुखेषु, यथेष्टम्, नैव, युक्तः, वृथाग्रजेन, मया, त्वम्, हि न, लालितः, तव, अस्याः, विपत्तेः, हेतुः, अहम्, तु, अविनयम्, यत् कारितः, असि, नच, रक्षितः असि ॥ ६ ॥

दुर्योधनो विलपति—युक्तो यथेष्टमिति । उपभोगसुखेषु = उत्तमभोजनादिजन्यसुखेषु, यथेष्टम् = इच्छानुरूपम्, नैव, युक्तः = सम्मिलितः, सर्वदा मदर्थमेव व्यापृतत्वाद् । वृथाग्रजेन = व्यर्थज्येष्ठेन मया, लालितः = विलासितः, अस्याः = हृदयविदारणरूपायाः, विपत्तेः = आपत्तेः, तु-तु शब्दः पूर्वव्यवच्छेदकः । अविनयं केशाम्बराकर्षणम्, कारित इत्यत्र प्रयोज्ये कर्मणि क्तप्रत्ययः । असि त्वमित्यस्याग्रेऽप्यन्वयः । नच, रक्षितोऽसि भीमादिति शेषः । अविनये यदि नियोजितस्तदा वध्ययुक्तापत्तौ रक्षणीयोऽपि मयेति भावः । अत्र चतुर्थचरणे विशेषोक्तिरलङ्कारः । वसन्ततिलका छन्दः ॥ ६ ॥

---

दुर्योधन—( चैतन्य होकर आह भर कर )

हे वत्स ! मैंने तुम्हें इच्छा के अनुकूल भोजनवस्त्रादिरूप उपभोगसामग्री के उपभोग में नहीं लगाया । तुम्हारा मैंने कभी प्यार भी नहीं किया । मैं व्यर्थ ही ज्येष्ठ भ्राता हुआ । तुम्हारी इस विपत्ति का कारण मैं ही हूं क्यों कि मैंने चापल्य की शिक्षा तो दी परन्तु तुम्हारी रक्षा न कर सका अर्थात् मेरी ही आज्ञा से द्रौपदी के वस्त्र और केश का आकर्षण तूने किया जिसके कारण यह विपत्ति तुम्हारे शिर पर घहराई है परन्तु इस विपत्ति से तुम्हारी रक्षा करने में मैं समर्थ न हो सका ॥ ६ ॥

( फिर गिर पडता है ) ।

सूत—महाराज ! धैर्य धारण कीजिए । धैर्य धारण कीजिए ।

दुर्योधन—सूत ! धिक्कार है । यह आपने क्या कर डाला ?

क्रोधो न नाम करुणा न च तेऽस्ति लज्जा ॥ ५ ॥

सूतः—( सकरुणं पादयोर्निपत्य । ) एतद्विज्ञापयामि । आयुष्मन्, सम्पूर्णप्रतिज्ञेन निवृत्तेन भवितव्यमिदानीं दुरात्मना वृकोदरहतकेन । अत एवं ब्रवीमि ।

दुर्योधनः—( सहसा भूमौ पतन् । ) हा वत्स दुःशासन, हा मदाज्ञाविरोधितपाण्डव, हा विक्रमैकरस, हा मदङ्कदुर्ललित, हा अरातिकुलगजघटामृगेन्द्र, हा युवराज, क्वासि । प्रयच्छ मे प्रतिवचनम् । ( इति निःश्वस्य मोहमुपगतः । )

सूतः—राजन्, समाश्वसिहि समाश्वसिहि ।

---

क्रोधो न, राजबन्धुवधकाले त्वयाऽवश्यं क्रोधः कार्यः । नापि, करुणा=दया, परविनाशकालेऽवश्यं दया कार्या । न च लज्जा अस्ति । मम समक्षं यच्छत्रुणा प्रतिज्ञा पूर्यते तदतीव लज्जाकरमिति भावः । वसन्ततिलका छन्दः ॥ ५ ॥

विज्ञापनमेवाह—आयुष्मन्निति । सम्पूर्णप्रतिज्ञेन=पीतदुःशासनशोणितेन अत एव निवृत्तेन, दुरात्मना वृकोदरहतकेन=दुष्टभीमेन, भवितव्यम्, इदानीमित्यन्वयः । एवं=मर्षयतु आयुष्मानिति, युद्धे न गन्तव्यमित्यर्थः ।

मदाज्ञाविरोधितपाण्डव=ममाज्ञया विरोधितः पाण्डवः येन तत्सम्बोधने ममाज्ञयैव द्रौपदीकेशाम्बराकर्षणं कृतं ततश्च तस्य पाण्डवेन विरोधो जात इति भावः । विक्रमैकरस=विक्रमः एकरसः अद्वितीयगुणः यस्य 'श्रृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । अरातिः=शत्रुः, घटा=समूहः, मृगेन्द्रः=सिंहः मोहं=मूर्च्छाम्, उपगतः=प्राप्तः ।

---

ऐसे व्यसन के समय में 'मेरे घोड़े रथ खींचने में असमर्थ हैं'। यह बात कहने में तुम्हें लज्जा भी नहीं आती ॥ ५ ॥

सूत—( करुणा के साथ चरणों पर गिरकर ) विनम्र निवेदन है—'महाराज ! इस समय तक दुरात्मा नीच भीमसेन अपनी प्रतिज्ञा की पूर्ति कर चुका होगा' इसीलिए मैं इस प्रकार कह रहा हूँ।

दुर्योधन—( एकाएक पृथ्वीपर गिरता हुआ ) हा प्रिय दुश्शासन ! हाय मेरी आज्ञा से पाण्डवविरोधी !! हाय पराक्रमपरायण !!! हाय मेरी गोदी के खेलने वाले ! हाय शत्रुकुलरूपी हाथियों के झुण्ड के लिए सिंह ! हाय युवराज ! तुम कहाँ हो ? मुझे उत्तर दो।

( ठंढी श्वास लेकर मूर्छित हो जाता है )

सूत—महाराज ! धैर्य धारण कीजिए, धैर्य धारण कीजिए।

दुर्योधनः—( संज्ञां लब्ध्वा । निःश्वस्य । )

युक्तो यथेष्टमुपभोगसुखेषु नैव
त्वं लालितोऽपि हि मया न वृथाग्रजेन ।
अस्यास्तु वत्स तव हेतुरहं विपत्ते-
र्यत्कारितोऽस्य विनयं न च रक्षितोऽसि ॥ ६ ॥

( इति पतति । )

सूतः—आयुष्मन् , समाश्वसिहि समाश्वसिहि ।

दुर्योधनः—धिक् सूत, किमनुष्ठितं भवता ।

---

अन्वय —( हे ) वत्स, त्वम् , उपभोगसुखेषु, यथेष्टम् , नैव, युक्तः, वृथाग्रजेन, मया, त्वम् , हि न, लालितः, तव, अस्याः, विपत्तेः, हेतुः, अहम् , तु, अविनयम् , यत् कारितः, असि, नच, रक्षितः असि ॥ ६ ॥

दुर्योधनो विलपति—युक्तो यथेष्टमिति । उपभोगसुखेषु = उत्तमभोजनादिजन्यसुखेषु, यथेष्टम् = इच्छानुरूपम् , नैव, युक्तः = सम्मिलितः, सर्वदा मदर्थमेव व्यापृतत्वात् । वृथाग्रजेन = व्यर्थज्येष्ठेन मया, लालितः = विलासितः, अस्याः = हृदयविदारणरूपायाः, विपत्तेः = आपत्तेः, तु—तु शब्दः पूर्वव्यवच्छेदकः । अविनयं केशाम्बराकर्षणम् , कारित इत्यत्र प्रयोज्ये कर्मणि क्तप्रत्ययः । असि त्वमित्यस्याप्यन्वयः । नच, रक्षितोऽसि भीमादिति शेषः । अविनये यदि नियोजितस्तदा तत्प्रयुक्तापत्तौ रक्षणीयोऽपि मयेति भावः । अत्र चतुर्थचरणे विशेषोक्तिरलङ्कारः । वसन्ततिलका छन्दः ॥ ६ ॥

---

दुर्योधन—( चेतन्य होकर आह भर कर )

हे वत्स ! मैंने तुम्हें इच्छा के अनुकूल भोजनवस्त्रादिरूप उपभोगसामग्री के उपभोग में नहीं लगाया । तुम्हारा मैंने कभी प्यार भी नहीं किया । मैं व्यर्थ ही ज्येष्ठ भ्राता हुआ । तुम्हारी इस विपत्ति का कारण मैं ही हूँ क्यों कि मैंने चापल्य की शिक्षा तो दी परन्तु तुम्हारी रक्षा न कर सका अर्थात् मेरी ही आज्ञा से द्रौपदी के वस्त्र और केश का आकर्षण तूने किया जिसके कारण यह विपत्ति तुम्हारे शिर पर घहराई है परन्तु इस विपत्ति से तुम्हारी रक्षा करने में मैं समर्थ न हो सका ॥ ६ ॥

( फिर गिर पडता है ) ।

सूत—महाराज ! धैर्य धारण कीजिए । धैर्य धारण कीजिए ।

दुर्योधन—सूत ! धिक्कार है । यह आपने क्या कर डाला ?

रक्षणीयेन सततं बालेनाज्ञानुवर्तिना ।
दुःशासनेन भ्रात्राहमुपहारेण रक्षितः ॥ ७ ॥

सूत—महाराज, मर्मभेदिभिरिषुतोमरशक्तिप्रासवर्षैर्महारथानामपहृतचेतनत्वान्निश्चेतनः कृतो महाराज इत्यपहृतो मया रथः ।

दुर्योधन—सूत, विरूपं कृतवानसि ।

तस्यैव पाण्डवपशोरनुजद्विषो मे
क्षोभैर्गदाशनिकृतैर्न विबोधितोऽस्मि ।

अन्वय—सततम्, आज्ञानुवर्तिना, बालेन, रक्षणीयेन, भ्रात्रा, दुःशासनेन, उपहारेण, अहम्, रक्षितः ( त्वया ) ॥ ७ ॥

रक्षणीयेनेति । सततं = निरन्तरम्, आज्ञानुवर्तिना = आदेशानुसारिणा, बालेन = अल्पवयस्केन, अत एव, रक्षणीयेन = रक्षायोग्येन, भ्राता = दुःशासनेन, उपहारेण = बलिना, अह = दुर्योधन, रक्षितः त्वयेति शेषः । मद्रक्षणार्थं दुःशासनो बलिरूपेण प्रदत्तः किं त्वया । यथा देवेभ्यः स्वरक्षार्थं बलिर्दीयते तथेति भावः । अत्र पदार्थगतकाव्यलिङ्गमलङ्कार । अनुष्टुप् छन्द ॥ ७ ॥

मर्मभेदिभिः = अन्त.करणभेदकै, इषुतोमरशक्तिप्रासवर्षैः = बाणशर्वलाशक्तिनामकास्त्रविशेषकुन्तवर्षैः, महारथानां = दशसहस्रवीरैर्योधयितृणाम् अपहृतचेतनत्वात् = निश्चेतनत्वात्, महाराजः = भवान्, निश्चेतनः=मूर्च्छितः, कृत, इति= अतः, रथः = स्यन्दनः, अपहृतः, मया । विरूपं = विपरीतम् ।

अन्वय—पाण्डवपशोः मे, अनुजद्विषः, तस्य, एव, गदाशनिकृतै, क्षोभैः, न, विबोधितः, अस्मि ( अत एव ) ताम्, एव, दौःशासनीम्, रुधिरार्द्रशय्याम्, अहम्, न, अधिशयितः, आशु, वृकोदर, वा, न ( अधिशयितः ) ॥ ८ ॥
कथं विरूपं कृतमित्याह—तस्यैवेति ।

पाण्डवपशो = पाण्डव. पशुरिव तस्य, मे = मम, अनुजद्विषः = कनिष्ठभ्रातृ-

सर्वदा आज्ञा पालन करने में तत्पर कनिष्ट भ्राता दुश्शासन की, जो निरा बालक था, रक्षा करनी चाहिए थी । उसे बलि देकर [ आपने ] मेरी रक्षा की है अर्थात् बच्चे की रक्षा चाहे जैसे होती करते परन्तु रक्षा न करके प्रत्युत उसका वध कराके मुझे बचाया है आपने यह काम अच्छा नहीं किया ॥ ७ ॥

**सूत**—राजाधिराज ! महारथियों के मर्मच्छेदी वाण, भाले, बर्छे और गडासों के प्रहार से महाराज मूर्छित कर दिये गए अत मैंने [ वहा से ] रथ हटा लिया ।

**दुर्योधन**—सूत ! प्रतिकूल [ अनुचित ] कार्य कर डाले हो ।

मेरे कनिष्ठ भ्राता के विघाती असभ्य पाण्डुपुत्र ( भीम ) के वज्र संदृश गदा के प्रहारों

तामेव नाधिशयितो रुधिरार्द्रशय्यां
दौःशासनीं यदहमाशु वृकोदरो वा ॥ ८ ॥

( निःश्वस्य नभो विलोक्य । ) ननु भो हतविधे, कृपाविरहित, भरतकुलविमुख,

अपि नाम भवेन्मृत्युर्न च हन्ता वृकोदरः ।

सूत—शान्तं पापं शान्तं पापम् । महाराज, किमिदम् ।

---

शत्रोः, तस्य = भीमस्य, एव, गदाशनिकृतैः गदा अशनि वज्र इव तत्कृतैः, घातैः= प्रहारैः, विबोधितः = प्राप्तचैतन्यः, अस्मि भवामीत्यर्थः । यदि तस्य गदाभिघातैः विगतमूर्च्छः स्याम् तदेति भावः । अत एव ताम् , एव, दौःशासनीं = दुःशासनसम्बन्धिनीम् , रुधिरार्द्रशय्यां = शोणितक्लिन्नशयनीयम् , अहम् , न अधिशयितः, न सुप्तः, आशु = शीघ्रम् , वृकोदरः = भीमः, वा नाधिशयितः । यदि तस्य गदयोत्थितः तदा द्वयोर्युद्धे सति वृकोदरस्य घातमहं कुर्याम् अथवा मां भीमो हन्यादिति भावः । वसन्ततिलका छन्दः ॥ ८ ॥

अन्वय.—मृत्युः, अपि, नाम, भवेत् , वृकोदरः, नच, हन्ता, ( भवेत् ) घातिताशेषबन्धोः, मे, राज्येन, किम् , वा, जयेन, किम् , ॥ ९ ॥

स्वप्नमेव मृत्युर्भवतु भीमो न हन्यादित्याह—अपि नामेति । अपि, नामेति सम्भावनायाम् । वृकोदरः नच हन्ता = हिंसकः । मृत्युर्भवतु नच वृकोदरो हन्ता भवतु इति भावः ।

अनिष्टश्रवणात् सूतः वचनसमाप्तिमध्य एवाह—शान्तं पापमिति । इत्थं न वाच्यमित्यर्थः ।

---

से मेरी मूर्छा दूर न की गई क्योंकि दुश्शासन के रक्त से पङ्किल [ कीचड से युक्त ] शय्या पर न तो मैंने शयन किया और न भीम को शीघ्र ही शयन कराया अर्थात् मुझे वहीं पर चेतनाविहीन होकर पडे रहने देते , मुझ पर भीम के गदाप्रहार पडने देते जिससे मुझ में चेतना का सञ्चार होता और मैं फिर युद्ध करके या तो जहाँ दुश्शासन का शव है वहाँ मैं भी सर्वदा के लिए सो जाता अथवा भीम को ही शयन करा देता । मुझे रणक्षेत्र से दूर हटा कर महान् अनुचित तूने किया ॥ ८ ॥

( उच्छ्वास लेकर और ऊपर देखकर ) अरे निर्दयी भरतवंश से रुष्ट विधाता !

यदि मेरी मृत्यु भी हो तो भीम घातक न हों [ यही प्रार्थना है ]

सूत—अमङ्गल का नाश हो । महाराज ! यह क्या ?

दुर्योधनः—

घातिताशेषबन्धोर्मे किं राज्येन जयेन वा ॥ ६ ॥

( ततः प्रविशति शरप्रहारव्रणबद्धपट्टिकालङ्कृतकायः सुन्दरकः । )

सुन्दरकः—अज्जा, अवि णाम इमस्सिं उद्देसे सारहिदुइओ दिट्ठो तुम्हेहिं महाराजदुज्जोहणो ण वेत्ति । ( निरूप्य । ) कहं ण कोवि मन्तेदि । होदु । एदाणं वद्धपरिअराणं पुरिसाण समूहो दीसइ । एत्थ गदुअ पुच्छिस्सम् । ( परिक्रम्य विलोक्य च । ) कहं एदे क्खु सामिणो गाढप्पहारहदस्स घणसण्णाहजालदुब्भेज्जमुहेहिं कङ्कवत्तेहिं हिअआदो सल्लाइं उद्धरन्ति । ता ण क्खु एदे जाणन्ति । होदु । अण्णदो विचिणइस्सम् । ( अग्रतोऽवलोक्य, किञ्चित्परिक्रम्य । ) इमे क्खु अवरे प्पहूददरा सङ्गदा वीरमणुस्सा दीसन्ति । ता एत्थ गदुअ पुच्छिस्सम् । ( उपगम्य । ) हंहो, जाणह तुम्हे कस्सिं उद्देसे कुरुणाहो वट्टइत्ति । कहं एदे वि मं पेक्खिअ अहिअदरं रोअन्दि । ( दृष्ट्वा । ) ता ण क्खु एदे वि जाणन्ति । हा, अदिकरुणं क्खु एत्थ वट्टइ । एसा वीलमादा समलविणिहदं पुत्तअं सुणिअ रत्तंसुअणिवसणाए असमग्गभूसणाए बहूए सह अणुमरदि । ( सश्लाघम । ) साहु वीरमादे, साहु, अण्णस्सिं वि जम्मन्तरे अणिहदपुत्तआ हुविस्ससि । होदु । अण्णदो पुच्छिस्सम् । ( अन्यतो विलोक्य । ) अअं अवरो बहुप्पहारणिहदकाओ अकिदव्वणबन्धो एव्व जोहसमूहो इमं सुण्णासणं तुलङ्गमं उवालहिअ रोइदि । णूणं एदाणं एत्थ एव्व सामी वावादिदो । ता ण क्खु एदे वि जाणन्दि । होदु । अण्णदो गदुअ पुच्छिस्सम् । ( सर्वतो विलोक्य । ) कहं सव्वो एव्व अवत्थाणुरूवं व्वसणं अणुभवन्तो भाअधेअविसमसीलदाए पज्जाउलो जणो । ता कं दाणीं एत्थ पुच्छिस्सम् । क वा उवालहि-

घातिताशेषबन्धोः = हिंसितनिखिलबान्धवस्य, मे राज्येन किम् , वा = अथवा, जयेन किम् , राज्यजययोः न किमपि प्रयोजनमित्याशयः । अनुष्टुपछन्दः ॥ ९ ॥

शरप्रहारव्रणबद्धपट्टिकालङ्कृतकायः = शरप्रहारेण यद् व्रणम् तत्र बद्धा या

दुर्योधन—जब मेरे सभी परिवार की समाप्ति हो गई तो फिर राज्य और विजयलाभ से क्या प्रयोजन ? ॥ ९ ॥

( इसके अनन्तर वाणों के द्वारा क्षत अङ्गों पर पट्टी वाधे हुए सुन्दरक का प्रवेश ) ।

सुन्दरक—ऐ भद्रपुरुषो ! क्या आप लोगों ने इस स्थानपर सारथि के साथ महाराज

स्सम् । होदु । सअं एव्व एत्थ विचिणइस्सम् । ( परिक्रम्य । ) होदु । देव्वं दाणीं उवालहिस्सम् । हंहो देव्व, एआदसाणं अक्खोहिणीणं णाहो जेट्ठो भादुसदस्स भत्ता गङ्गेअद्दोणङ्गराअसल्लकिवकिदवम्मअस्सत्थामप्पमुहस्स राअचक्कस्स सअलप्पुहवीमण्डलेक्कणाहो महाराअदुज्जोहणो वि अण्णेसीअदि । अण्णेसीअन्तो वि ण जाणीअदि कस्सिं उद्देसे वट्टइत्ति । (विचिन्त्य निःश्वस्य च।) अहवा किं एत्थ देवं उवालहामि । जदो तस्स क्खु एदं णिब्भच्छिअविउरवअणवीअस्स अवधीरिदपिदामहहिदोवदेसक्कुरस्स सउणिप्पोच्छाहणादिविरूढमूलस्स जदुगेहजूदविससाहिणो संभूदचिरआलसंबद्धवेरालवालस्य पञ्चालीकेसग्गहणकुसुमस्स फलं परिणमदि । ( अन्यतो विलोक्य ) जहा एत्थ एसो विविहरदिणप्पहासंवलिदसूरकिरणप्पसूदसक्कचावसहस्ससंपूरिददसदिसामुहो लूणकेदुवंसो रहो दीसइ, ता अहं तक्केमि अवस्सं एदिणा महाराअदुज्जोहणस्स विस्सामुद्देसेण होदव्वम् । याव निरूपेमि । ( उपगम्य दृष्ट्वा निःश्वस्य च । ) कधं एआदहाणं अक्खोहिणीणं णाअको भविअ महाराओ दुज्जोहणो पइदपुरिसो विअ असलाहणीए भूमीए उवविट्ठो चिट्ठदि । अध वा तस्स क्खु एदं पञ्चालीकेसग्गहकुसुमस्स फलं परिणमदि । ( आर्याः, अपि नामास्मिन्नुद्देशे सारथिद्वितीयो दृष्टो युष्माभिर्महाराजदुर्योधनो न वेति । कथं न कोऽपि मन्त्रयते । भवतु । एतेषा बद्धपरिकराणां पुरुषाणा समूहो दृश्यते । अत्र गत्वा प्रक्ष्यामि । कथमेते खलु स्वामिनो गाढप्रहाराहतस्य घनसन्नाहजालदुर्भेद्यमुखैः कङ्क-

---

पट्टिका व्रणाच्छादनवस्त्रविशेषः तया अलङ्कृतः कायः शरीरं यस्य सः ।

उद्देशे = स्थाने, सारथिद्वितीयः = सूतसहितः, महाराजदुर्योधनः, युष्माभिः दृष्टो नवेति पृच्छति सुन्दरकस्तत्रस्यजनम् । कोपि, कथं, न, मन्त्रयते = कथयति । ततोऽन्यत्र गत्वा पृच्छति । एतेऽपि न जानन्तीत्याह—कथमेते खलु स्वामिन इति । गाढप्रहारहतस्य = गाढं भृशं यथा स्यात्तथा यः प्रहारः तेन हतस्य मूर्च्छितस्य, घनसन्नाहजालदुर्भेद्यमुखैः = निविडकवचसमूह इव दुर्भेद्य मुखम् अग्रम् येषां तैः,

---

सुयोधन को देखा है अथवा नहीं ? (देखकर) क्यों क्या कारण है कोई उत्तर नहीं देता ? अच्छा ! यह कवचधारण किए हुए सैनिकों का समूह दृष्टिगोचर हो रहा है । यहीं चलकर पूछता हूँ ( इधर-उधर घूमकर और देखकर ) अरे, ये तो अपने अपने स्वामी के, जो प्रखर प्रहार से व्यथित हैं, हृदय से बाण की गाँसियों को कङ्कपत्र के द्वारा निकालने में तत्पर

पत्रैर्हृदयाच्छल्यान्युद्धरन्ति। तन्न खल्वेते जानन्ति। भवतु। अन्यतो विचेष्यामि। इमे खल्वपरे प्रभूततराः सङ्गता वीरमनुष्या दृश्यन्ते। तदत्र गत्वा प्रक्ष्यामि। हंहो, जानीथ यूयं कस्मिन्नुद्देशे कुरुनाथो वर्तत इति। कथमेतेऽपि मा प्रेक्ष्याधिकतरं रुदन्ति। तन्न खल्वेतेऽपि जानन्ति। हा, अतिकरुणं खल्वत्र वर्तते। एषा वीरमाता समरविनिहतं पुत्रकं श्रुत्वा रक्तांशुकनिवसनया समग्रभूषणया वध्वा सहानुम्रियते। साधु वीरमातः, साधु। अन्यस्मिन्नपि जन्मान्तरेऽनिहतपुत्रका भविष्यसि। भवतु। अन्यत प्रक्ष्यामि। अयमपरो बहुप्रहारनिहतकायोऽकृतव्र-

---

कङ्कपत्रैः = शल्योद्धारकवस्तुविशेषैः, शल्यानि = शङ्कून्, उद्धरन्ति = निःसारयन्ति। विचेष्यामि = निश्चिनोमि। सङ्गताः = सम्मिलिताः, प्रभूततराः = अत्यधिकाः, अपरे = अन्ये, इमे, वीरमनुष्याः, दृश्यन्ते खलु इत्यन्वयः। कस्मिन् उद्देशे = स्थाने, कुरुनाथः = दुर्योधनः वर्तत इति जानीथेत्यन्वयः। प्रेक्ष्य = दृष्ट्वा, रुदन्तीति—यद्यत्र महाराजोऽभविष्यत्तदा मामकथयिष्यदत्र ते महाराजः, नचाचकथत् किन्तु अधिकतरमेव रुदन्तीत्यनुमीयते नात्र महाराज इति भावः। वीरमाता = वीरस्य जननी, समरविनिहतं = सङ्ग्रामे व्यापादितम्, पुत्रकमिति अनुकम्पार्थे कप्रत्ययः। रक्तांशुकनिवसनया = रक्तांशुकं रक्तवस्त्रं निवसनं परिधानं यस्याः तया, समग्रभूषणया = समग्रं सर्वाङ्गव्याप्तं भूषणम् अलङ्कारः यस्याः तया, वध्वा = पुत्रस्त्रिया, सह, अनुम्रियते = पश्चात्प्राणत्यागं करोति, वीरमाता, अत्रैवान्वेति। अनिहतपुत्रका = जीव-

---

हैं। दृढ़ कवचों के जाल के भीतर इस शल्योद्धारक ( कङ्कपत्र ) यन्त्र के मुख महान् प्रयत्न से प्रविष्ट किए जारहे हैं। ये लोग क्या जानें? [ अर्थात् ये लोग अपने कार्य में सलग्न हैं ये क्या जानें कि महाराज कहा है ] अच्छा [ चलूँ ] अन्य किसी स्थान में अन्वेषण करूँ ( सामने देखकर, थोड़ा इधर-उधर घूमकर ) ये और भी बहुत से शूरवीर एकत्रित दिखलाई पड रहे है अतः वहाँ चल कर पूछूँगा। क्यों, क्या आप लोग जानते हैं कौरवों के अधिराज [ दुर्योधन ] किस स्थान पर हैं? क्यों? ये मुझे देखकर परिमाण से अधिक अश्रुपात कर रहे हैं अतः ये भी नहीं जानते हैं ( देखकर ) हाय! यहाँ तो महान् दुष्कर कार्य्य हो रहा है। यह वीरमाता युद्ध में अपने पुत्र की मृत्यु सुनकर अरुण वस्त्र धारण किये हुई तथा सम्पूर्ण अलङ्कारों से अलङ्कृत पुत्रवधू के साथ प्राण परित्याग कर रही है ( श्लाघापूर्वक ) धन्य! वीरजननी धन्य!! दूसरे जन्म में भी तुम्हें पुत्र की मृत्यु न देखना पडेगा। अच्छा, अब यहा से दूसरे स्थान पर चलकर अन्वेषण करूँगा। ( दूसरे स्थान में देखकर ) यह एक अन्य शूरवीरों का दल, जिसके शरीर अनेक शस्त्रों के

शवन्ध एव योधसमूह इमं शून्यासनं तुरङ्गमसुपालभ्य रोदिति । नूनमेतेषामत्रैव स्वामी व्यापादितः तन्न खल्वेतेऽपि जानन्ति । भवतु । अन्यतो गत्वा प्रक्ष्यामि । कथं सर्व एवावस्थानुरूपं व्यसनमनुभवन्भागधेयविषमशीलतया पर्याकुलो जनः । तत्किमिदानीमत्र प्रक्ष्यामि । कं वोपालप्स्ये । भवतु । स्वयमेवात्र विचेष्यामि । भवतु । दैवमिदानीमुपालप्स्ये । हंहो दैव, एकादशानामक्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गाङ्गेयद्रोणाङ्गराजशल्यकृपकृतवर्माश्वत्थामप्रमुखस्य राजचक्रस्य सकलपृथ्वीमण्डलैकनाथो महाराजदुर्योधनोऽप्यन्विष्यते । अन्विष्यमाणोऽपि न ज्ञायते कस्मिन्नुद्देशे वर्तत इति ।। अथवा किमत्र दैवमुपालभे । यतस्तस्य खल्विदं निर्भर्त्सि-

---

रपुत्रका । अकृतव्रणबन्धः = अकृतपट्टिकः । शून्यासनम् = शून्यम् आरोहकरहितम् आसनं पीठं यस्य तम्, तुरङ्गम् = अश्वम् । अवस्थानुरूप = दशायोग्यम्, व्यसनं= दुःखम् । भागधेयविषमशीलतया = विपरीतभाग्यतया, पर्याकुलः = समन्तादाकुलः । उपालप्स्ये = साक्षेप कथयिष्यामि । अक्षौहिणीनां = सख्याविशेषविशिष्टसेनानाम्, नाथः, भ्रातृशतस्य ज्येष्ठः, निर्धारणेऽत्र षष्ठी । गाङ्गेयः = भीष्मः, अङ्गराजः = कर्णः । राजचक्रस्य = राजसमूहस्य, भर्तेत्यन्वयः । अन्विष्यत इति । य एतादृशः स स्वयमेव विदितो भवेत् नचान्वेषणापेक्षा परन्तु अन्विष्यत इति महदाश्चर्यम् निखिलसेवकानां विनाशादन्विष्यमाणोऽपि न ज्ञायत इति गूढाभिप्रायः ।

निर्भर्त्सितविदुरवचनबीजस्य = निर्भर्त्सित तिरस्कृत विदुरवचनरूप बीजं यस्य

---

आघात से जर्जर हो रहे हैं, तथा व्रण विना किसी उपचार [ अर्थात् औषध पट्टी के बिना ] यों ही पडे हुए हैं, आसन रहित अश्व को पकडकर विलख रहा है, निश्चय इन लोगों के स्वामी यहीं मारे गये हैं । अतः ये भी [ महाराज को ] नहीं जानते । अच्छा दूसरे स्थान पर चलकर पूछूं । [ चारों तरफ देखकर ] अरे यहां तो सभी लोग अपनी अपनी दशा के अनुरूप विपत्ति का अनुभव करते हुए भाग्य के विपरीत होने के कारण [ विधाता के वाम होने के कारण ] व्याकुल हो रहे हैं । अत यहाँ किससे पूछूं ? और किसे दोषी ठहराऊं । अच्छा, स्वय ही मैं [ महाराजको ] अन्वेषण करता हूँ । अच्छा, अब मैं विधाता को ही दोषी मानता हूँ । अये विधात ! एकादश ( ग्यारह ) अक्षौहिणी सेना के स्वामी, सौ भाइयों के बडे भाई, भीष्म, जयद्रथ, द्रोण, कर्ण, शल्य, कृप, कृतवर्मा तथा अश्वत्थामा इत्यादि राजाधिराजोंके स्वामी अखण्ड भूमण्डल के एक छत्र राजाधिराज दुर्योधन का भी अन्वेषण करना पड़ता है और अन्वेषण करने पर भी नहीं जाना जाता कि महाराज किस स्थान में हैं ? अथवा इसमें भाग्य को दोष क्यों दूँ । क्योंकि विदुर के वचनों को अव-

नविदुरवचनवीजस्यावधीरितपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनादिविरूढ-मूलस्य जतुगृहद्यूतविषशाखिनः सम्भूतचिरकालसम्बद्धवैरालवालस्य पाञ्चालीकेश-ग्रहणकुसुमस्य फलं परिणमति । यथात्रैष विविधरत्नप्रभासंवलिततूर्यकिरणप्रसूत-शक्रचापसहस्रसंपूरितदशदिशामुखो लूनकेतुवंशो रथो दृश्यते तदहं तर्कयाम्यवश्य-मेतेन महाराजदुर्योधनस्य विश्रामोद्देशेन भवितव्यम् । यावन्निरूपयामि । कथमेका-दशानामक्षौहिणीना नायको भूत्वा महाराजो दुर्योधन' प्राकृतपुरुप इवाश्लाघनीयाया भूमावुपविष्टस्तिष्ठति । अथ वा तस्य खल्विदं पाञ्चालीकेशग्रहकुसुमस्य फलं परिणमति ।)

अवधीरितपितामहहितोपदेशाङ्कुरस्य = अवधीरितः अनादृतो यः पितामहोपदेशः भीष्मकर्तृकहितवचः स एव अङ्कुरं यस्य, शकुनिप्रोत्साहनादिविरूढमूलस्य = शकुनेः मातुलस्य प्रोत्साहनादिना विरूढम् मूलं यस्य, जतुगृहद्यूतविपशाखिनः = जतुगृहं लाक्षावेश्म द्यूतम् अक्षैर्देवनम् विपं मृत्युजनकवस्तुविशेपः तान्येव शाखाः, ताः सन्त्यस्मिन्, वृक्ष इत्यर्थः, तस्य, सम्भूतचिरकालसम्बद्धवैरालवालस्य = सम्भूतं सञ्जात चिरकालसम्बद्धं बहुदिनसम्बन्धि यद्वैरं तदेव आलवाल. वृक्षमूले जलावरो-धनार्थं मृत्तिकानिर्मिताल्पसेतुः यस्य, पाञ्चालीकेशग्रहणकुसुमस्य = द्रौपदीकेशग्रह-णपुष्पस्य, एतादृशानेकापराधरूपवृक्षस्येत्यर्थः । फलम्, इदम्, परिणमति = उत्प-द्यते, तस्य = दुर्योधनस्येत्यन्वयः । विविधरत्नप्रभासंवलितसूर्यकिरणप्रसूतशक्रचाप-सहस्रसम्पूरितदशदिशामुखः = विविधरत्नानां या प्रभा कान्तिः तया संवलितं व्याप्तं यत्सूर्यकिरणं तेन प्रसूता उत्पन्ना ये शक्रचापाः इन्द्रधनूंषि तेषां सहस्रं तेन करणभूतेन सम्पूरितानि दशदिशामुखानि येन सः, । अत्रैव महाराजदुर्योधनो वर्तते इत्याह—एतेन महाराजस्येति । प्राकृतपुरुप. = साधारणजनः । अश्लाघनीयायाम् = अप्रशस्तायाम् ।

हेलना जिस वृक्ष का बीज है । भीष्मपितामह के उपदेश की अवमानना जिसका अङ्कुर है । बर्बर शकुनि के द्वारा किया गया प्रोत्साहन जिसका सुदृढ मूल [ जड़ ] है । लाक्षा-गृह, द्यूत [जुआ] और विषप्रदानादि रूप उस वृक्ष का आलवाल [ थाला = जो पेड़ों के जड के चारों ओर मिट्टी से घेरकर पानी के रुकने लायक बनाया जाता है ] चिरकाल की शत्रुता है, द्रौपदी के केश और वस्त्रों का आकर्षण [ खींचना ] उसका पुष्प है उस का यह फल है [ जो यह सब कौरव लोग भोग रहे है ] ( दूसरी ओर देखकर ) यहा पर यह रथ दृष्टि गोचर हो रहा है इसके विविध रत्नों की प्रभायें सूर्य की किरणों से विमिश्रित होकर सहस्रों इन्द्रधनुप का निर्माण करती हैं और उनसे सम्पूर्ण दिशायें व्याप्त हो रही हैं । इसका पताकादण्ड भी कट कर गिर गया है अतः मेरा जहा तक अनुमान है—'अवश्य महाराज दुर्योधन का यही विश्राम स्थान है'

( उपसृत्य सूतं संज्ञया पृच्छति । )

सूत —( दृष्ट्वा । ) अये, कथं सङ्ग्रामात्सुन्दरकः प्राप्तः ।

सुन्दरकः—( उपगम्य । ) जअदु जअदु महाराओ । ( जयतु जयतु महाराजः । )

दुर्योधन —( विलोक्य । ) अये सुन्दरक, कच्चित्कुशलमङ्गराजस्य ।

सुन्दरक—देव, कुसलं सरीरमेत्तकेण ( देव, कुशलं शरीरमात्रकेण । )

दुर्योधन —किं किरीटिनास्य निहता धौरेया हतः सारथिर्भग्नो वा रथः ।

सुन्दरक—देव, ण भग्गो रहो । से मणोरहो । ( देव, न भग्नो रथः । अस्य मनोरथः । )

दुर्योधनः—किमविस्पष्टकथितैराकुलमपि पर्याकुलयसि मे हृदयम् । तदलं संभ्रमेण । अशेषतो विस्पष्टं कथ्यताम् ।

सुन्दरकः—जं देवो आणवेदि । देवस्स मउडमणिप्पहावेण अवणीदा

---

सञ्ज्ञया = सङ्केतेन ।

धौरेयाः = धुरीणा अश्वाः ।

मनोरथ इति—कर्णस्य यो मनोरथः, अर्जुनं हनिष्यामीति स भग्न इत्यर्थः । न हन्तु तं शक्नोमीति मनसि सञ्जात इति भावः ।

अविस्पष्टकथितैः = अव्यक्तवचनैः, मे = मम, आकुलम् , अपि, हृदयम् = मनः, पर्याकुलयसि = समन्तात् व्याकुलं करोषि, किमित्यन्वय. ।

---

( समीप जाकर सूत को सकेत करता है )

**सूत**—( देखकर ) अरे ! क्यों महाराङ्गण से सुन्दरक आया है ?

**सुन्दरक**—( समीप जाकर ) विजय, विजय, महाराज की ।

**दुर्योधन**—सुन्दरक ! अङ्गनरेश [ कर्ण ] का कुशल तो है ?

**सुन्दरक**—महाराज ! [ वे ] जीवित हैं यही कुशल समझिए ।

**दुर्योधन**—( व्याकुल होकर ) सुन्दरक ! क्या अर्जुन ने इनके घोड़ों को तथा सारथि को भी मार डाला ? और रथ को भी तोड डाला क्या ?

**सुन्दरक**—महाराज ! केवल रथ ही नहीं भङ्ग किया किन्तु साथ साथ इनका मनोरथ भी [ पुत्र भी ] ।

**दुर्योधन**—( क्रोध पूर्वक ) अरे ? क्यों इस प्रकार के अव्यक्त वचनों से मेरे व्याकुल मन को अधिक सन्तप्त कर रहा है ? सम्पूर्ण बातें स्पष्टरूप से कहो न ।

**सुन्दरक**—अच्छा, जो महाराज की आज्ञा । अहा ! महाराज के मुकुट में जड़े हा॰

मे रणप्पहारवेअणा ( इति साटोपं परिक्रम्य । ) सुणादु देव । अत्थिदाणीं कुमालदुस्सासणवह–( इत्यर्धोक्ते मुखमाच्छाद्य शङ्कां नाटयति । ) ( यद्देव आज्ञापयति । देवस्य मुकुटमणिप्रभावेणापनीता मे रणप्रहारवेदना । शृणोतु देव । अस्तीदानीं कुमारदुःशासनवध—)

सूत—सुन्दरक, कथय । कथितमेव दैवेन ।

दुर्योधन —कथ्यताम् । श्रुतमस्माभिः ।

सुन्दरक—( स्वगतम् । ) कधं दुस्सासणवहो सुदो देवेण । ( प्रकाशम । ) सुणादु देवो । अज्ज दाव कुमालदुस्सासणवहामरिसिदेण सामिणा अङ्गराएण किदकुडिलभिउडीभङ्गभीसणललाडवट्टेण अविण्णादसंधाणतीक्खमोक्खणिक्खित्तसरधारा वरिसिणा अभिजुत्तो सो दुराआरा दुस्सासणवेरिओ मज्झमपण्डवा । ( कथं दुःशासनवधः श्रुतो देवेन । शृणोतु देव । अद्य तावत्कुमारदुःशासनवधामर्षितेन स्वामिनाङ्गराजेन कृतकुटिलभ्रुकुटीभङ्गभीषणललाटपट्टे-

---

अपनीता=दूरीभूता, रणप्रहारवेदना=रणे यो प्रहारः तेन या वेदना दुःखम् ।

कुमारदुःशासनवधेति—अप्रियं भ्रातृवधं कथयितुमशक्नुवन् वाक्यसमाप्तिमध्य एव विरराम सुन्दरकः ।

विज्ञातवृत्तान्तः सूतोऽवोचत्—सुन्दरकेति ।

कुमारदुःशासनवधामर्षितेन=कुमारदुःशासनस्य वधेन आमर्षितः क्रुद्धो यः तेन, अङ्गराजेन=कर्णेन, कृतकुटिलभ्रुकुटीभङ्गभीषणललाटपट्टेन=कुटिलः वक्रो यो भ्रुकुटीभङ्गः क्रोधेन ललाटसङ्कोचकरण तेन भीषणः ललाटपट्टः मस्तकस्थितोष्णीषः कृतः येन, अविज्ञातसन्धानतीक्ष्णमोक्षनिक्षिप्तशरधारावर्षिणा=अविज्ञातौ सन्धानतीक्ष्णमोक्षौ येन स चासौ निक्षिप्तशरधारावर्षी तेन, अभियुक्तः=अभिगृहीतः,

---

रत्नों की महिमा से युद्ध के प्रहार की पीडा शान्त हो गई [ गर्व के साथ आगे बढकर ] सुनिए महाराज ! आज तो कुमार दुःशासन का वध ...( आधी बात कह कर मुख ढक लेता है )

**सूत**—सुन्दरक ! कहो । अभाग्यने तो कह ही दिया है ।

**दुर्योधन**—कहो । मैं सुन चुका हूँ ।

**सुन्दरक**—( मन ही मन ) महाराज ने दुःशासन का वध कैसे सुन लिया ? ( प्रकट रूप से ) सुनिये राजाधिराज ! आज कुमार दुश्शासन के वध से क्रुद्ध स्वामी अङ्गाधिराज [ कर्ण ] ने अपनी कुटिल भौहें चढ़ाकर ललाट प्रदेश को भयावह बना लिया । उनके बाणों

नाविज्ञातसंधानतीक्ष्णमोक्षनिक्षिप्तशरधारावर्षिणाभियुक्तः स दुराचारो दु शासनवैरी मध्यमपाण्डव । )

उभौ—ततस्ततः ।

सुन्दरक—तदो देव, उहअबलमिलन्तदीप्पन्तकरितुरअपदादिस-मुद्धूदधूलिणिअरेण पल्लत्थगअघढासंघादेण अ वित्थरन्तेण अन्धआरेण अन्धीकिदं उहअबलम् । ण हु गगणतलं लक्खी अदि । ( ततो देव, उभय-बलमिलद्दीप्यमानकरितुरगपदातिसमुद्धूतधूलिनिकरेण पर्यस्तगजघटासंघातेन च विस्तीर्यमाणेनान्धकारेणान्धीकृतमुभयबलम् । न खलु गगनतलं लक्ष्यते । )

उभौ—ततस्ततः ।

सुन्दरक—तदो देव, दूराकट्टिअधणुग्गुणाच्छोडणटङ्कारेण गम्भीरभी-सणेण जाणीअदि गज्जिदं पलअजलहरेण त्ति । ( ततो देव, दूराकृष्टधनुर्गु-

---

युद्धार्थं लक्ष्यीकृतः, दुराचारः = दुष्टः, मध्यमपाण्डवः = भीमः, कर्णो भीमेन सह युद्धार्थं सन्नद्ध इत्यर्थः ।

उभयबलमिलद्दीप्यमानकरितुरगपदातिसमुद्धूतधूलिनिकरेण = उभयसैन्ययोः मिलन्तो ये दीप्यमानहस्तिघोटकचरणगन्तारः तैः समुद्धूतः सञ्जातो यो धूलि-निकरः रजःसमूहः तेन, पर्यस्तगजघटासङ्घातेन = पर्यस्ता व्याप्ता या गजघटा हस्ति-समूहः तस्याः सङ्घातेन, च, विस्तीर्यमाणेन = विततेन, अन्धकारेण = तमसा, उभयबलं = कौरवपाण्डवसैन्यमन्धीकृतम्, गगनतलम् = आकाशमण्डलम् ।

दूराकृष्टधनुर्गुणाच्छोटनटङ्कारेण = दूरं यथा स्यात्तथा आकृष्टो यो धनुर्गुणः चाप-

---

के आदान और मोक्ष का पता नहीं चलता था । उन्होंने अगणित बाणों की झडी लगाते हुए उस दुष्ट मझले पाण्डव भीमसेन पर आक्रमण कर दिया ।

दोनों—तो फिर क्या हुआ ?

सुन्दरक—तो फिर महाराज ! दोनों पक्षों की सेनाओं के हाथी, घोडे और पैदल सैनिकों के भिड जाने के कारण उठी हुई धूलिराशि से और इधर-उधर फैले हुए हाथियोंके झुण्ड से सर्वत्र विस्तृत अन्धकार से दोनों पक्ष की सेना अन्धी सी हो गई, पृथ्वी और आकाश का पता नहीं चलता था ।

दोनों—तो फिर ?

सुन्दरक—जब धनुष की प्रत्यञ्चा [ डोरी ] पूरी तरह खींच कर छोड़ दी जाती थी तब उसकी गम्भीर ध्वनि के कारण त्रासजनक अन्धकार से विदित होता था कि प्रलयकालीन

णाच्छोटनटङ्कारेण गम्भीरभीषणेन ज्ञायते गर्जितं प्रलयजलधरेणेति । )

दुर्योधन'—ततस्ततः ।

सुन्दरक—तदो देव, दोह्णिं वि ताणं अण्णोण्णसिंहणादगज्जिदपिसुणं विविहपरिमुक्कप्पहरणाहदकवअसंगलिदजलणविज्जुच्छडाभासुरं गम्भीरत्थणिअचावजलहर प्पसरन्तसरधारासहस्सवरिसं जादं समरदुद्दिणं । ( ततो देव, द्वयोरपि तयोरन्योन्यसिंहनादगर्जितपिशुनं विविधपरिमुक्तप्रहरणाहतकवचसङ्कलितज्वलनविद्युच्छटाभासुरं गम्भीरस्तनितचापजलधरं प्रसरच्छरधारासहस्रवर्षि जातं समरदुर्दिनम् । )

दुर्योधन'—ततस्ततः ।

सुन्दरक'—तदो देव, एदस्सि अन्तरे जेट्ठस्स भाडुणो परिभसङ्किणा

---

ज्या तस्याच्छोटनेन आस्फालनेन यः टङ्कारः धनुःशब्दः तेन, गम्भीरभीषणेन= धीरभयावहेन, प्रलयजलधरेण=प्रलयकालिकमेघेन, गर्जितं=स्तनितमिति ज्ञायते ।

तयोः—भीमकर्णयोः, अन्योन्यसिंहनादगर्जितपिशुनं=परस्परं सिंहनाद इव गर्जितं तस्य पिशुनं सूचकम्, विविधपरिमुक्तप्रहरणाहतकवचसङ्कलितज्वलनविद्युच्छटाभासुरं=विविधैः अनेकविधैः परिमुक्तप्रहरणैः त्यक्तशस्त्रैः आहतं यत् कवचं तस्मात् सङ्कलितः निःसृतो यो ज्वलनः अग्निः विद्युच्छटा इव तया भासुरं प्रकाशमानम्, गम्भीरस्तनितचापजलधरं=गम्भीरं स्तनितं शब्दः यस्य स चासौ चापः स एव जलधरः मेघो यत्र, इदं सर्वसमरदुर्दिनस्य विशेषणम् । प्रसरच्छरधारासह-

---

मेघ गर्जन कर रहे हैं अर्थात् अन्धकार प्रलय काल के मेघों की भाँति और धनुष की टङ्कार उनके गटगटाहट के साथ गर्जन की भाँति प्रतीत होता था ।

**दुर्योधन**—फिर क्या हुआ ?

**सुन्दरक**—इसके अनन्तर महाराज ! उन दोनों [ कर्ण और भीमसेन ] का परस्पर हुँकारनाद मेघगर्जन का सूचक था । अनेक प्रकार के प्रक्षिप्त शस्त्रों से सन्ताडित कवच से निकले हुए स्फुलिङ्ग ( चिनगारिया ) विजली के सदृश थे । प्रचुर परिमाण में रक्त की बिन्दुयें जुगुनू के सदृश चकक रहे थे । गम्भीर निर्घोषकारी धनुषरूपी मेघसे छूटते हुए वे असख्य वाणजल की धारायें थीं जो अत्यन्त भयोत्पादक दिखलाई पडती थीं । वर्षा के दिन की तरह दोनों में युद्ध प्रारम्भ हो गया ।

**दुर्योधन**—तो फिर क्या हुआ ?

**सुन्दरक**—तो फिर महाराज इसी अवसर पर ज्येष्ठ भ्राता [ भीम ] के पराजय की

घणंजएण वज्जणिग्घादणिग्घोसविसमरसिदधअग्गट्ठिदमहावाणरो तुरङ्गमसंवाहणवापिदवासुदेवसङ्खचक्कासिगदालच्छिदचडब्बाहुदण्डो आपूरिअपञ्चजण्णदेअत्ततारसिदप्पडिरवभरिददसदिसामुहकुहरो धाविदो तं उद्देसं रहवरो । ( ततो देव, एतस्मिन्नन्तरे ज्येष्ठस्य भ्रातुः परिभवशङ्किना धनंजयेन वज्रनिर्घातनिर्घोषविषमरसितध्वजाग्रस्थितमहावानरस्तुरङ्गमसंवाहनव्यापृतवासुदेवशङ्खचक्रासिगदालञ्छितचतुर्बाहुदण्ड आपूरितपाञ्चजन्यदेवदत्तताररसितप्रतिरवभरितदशदिशामुखकुहरो धावितस्तमुद्देशं रथवरः । )

दुर्योधनः—ततस्ततः ।

---

स्रवर्षि=प्रसरन्ती या शरधारा वाणप्रचारः तस्याः सहस्रं तद्वर्षणशीलम्, समरदुर्दिनं=दुर्दिनमिव समरः सङ्ग्रामः, मेघाच्छन्नं हि दिनं दुर्दिनमुच्यते जात, दुर्दिनमिव सङ्ग्रामोऽभूदिति भावः ।

ज्येष्ठस्य=अग्रजस्य, भ्रातुः=भीमस्य, परिभवशङ्किना=पराजयाशङ्केन, धनञ्जयेन=अर्जुनेन, वज्रनिर्घातेति—वज्रनिर्घात. अशनिशब्दः तद्वद् यो निर्घोषः शब्दः तद्वद् रसितं यत्र, ध्वजाग्रस्थितः महावानरः यत्र, अश्वसंवाहने व्यापृतो यो वासुदेवः तस्य शङ्खचक्रखड्गादिभिः लाञ्छितः अङ्कितः दण्ड इव चत्वारो बाहव इति चतुर्बाहुदण्डः स यत्र । यद्यपि कृष्णस्य चतुर्भुजरूपेणोत्पत्तौ सत्यामपि जन्मकालोत्तरमेव भुजद्वयस्य विलोप इति चतुर्बाहुदण्ड इति कथनमसङ्गतम् तथापि महाभारतसङ्ग्रामकाले कृष्णः शत्रुत्रासार्थं चतुर्भुजो बभूव अत एवोक्तं गीतायां-

'तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते' इति ।

कथमन्यथा, चतुर्भुजित्व रूपं तदा यदासीत् तदेव रूपं प्राप्नुहीत्यर्थकगीतावचनं सङ्गतं स्यात् पूर्वमपि चतुर्भुजत्वप्राप्तिकथनस्यायुक्तेः अत एवोक्तमत्र-चतुर्बाहुदण्डेति । पाञ्चजन्यं कृष्णस्य शङ्खः देवदत्तमर्जुनस्य ।

---

आशङ्का से अर्जुन ने [ अपने ] उत्तम रथ को उस स्थान तक [ जहाँ भीम और कर्ण का युद्ध हो रहा था ] दौड़ाया । उस की पताका पर वज्रपात के सदृश भीषण किलकार करते हुए वानरराज [ हनुमान् ] बैठे हुए थे । घोड़ों की शुश्रूषा में संलग्न भगवान् वासुदेव की शङ्ख, चक्र करवाल और गदा से युक्त भुजायें उस रथ पर दण्डाकार थीं । उस रथ पर बजाये जाते हुए पाञ्चजन्य [ श्रीकृष्णचन्द्र के शङ्ख तथा अर्जुन के शख का नाम है ] नामक शङ्ख के तुमुल निनाद से सम्पूर्ण दिशाओं का मुखविवर गूँज रहा था ।

**दुर्योधन**—इसके अनन्तर क्या हुआ ?

सुन्दरक—ततो भीमसेणधणंजएहिं अभिजुत्तं पिदरं पेक्खिअ ससंभमं विअलिअं अवधूणिअ रअणसीसअ आकण्णाकट्ठिदकठिणकोदण्डजीओ दाहिणहत्थुक्खित्तसरपुंखविघट्टणतुवराइदसारहीओ तं देसं उवगदो कुमालविससेणो। (ततो भीमसेनधनंजयाभ्यामभियुक्तं पितरं प्रेक्ष्य ससम्भ्रमं विगलितमवधूय रत्नशीर्षकमाकर्णाकृष्टकठिनकोदण्डजीवो दक्षिणहस्तोत्क्षिप्तशरपुङ्खविघट्टनत्वरायितसारथिकस्तं देशमुपगतः कुमारवृषसेनः।)

दुर्योधन—(सावष्टम्भम्।) ततस्ततः।

सुन्दरक—तदो अ देव, तेण आअच्छन्तेण एव्व कुमालविससेणेण विदलिदासिलदासामलसिणिद्धपुङ्खेहि कठिणकङ्कवत्तेहि किसणवण्णेहिं सार्णासिलणिसिदसामलसल्लवन्धेहि कुसुमिदो विअ तरू मुहुत्तएण सिलीमुहेहि पच्छादिदो धणंजअस्स रहवरो। (ततश्च देव, तेनागच्छतैव कुमारवृषसेनेन विदलितासिलताश्यामलस्निग्धपुङ्खैः कठिनकङ्कपत्रैः कृष्णवर्णैः शातशि-

---

विगलितं = यथास्थानमप्राप्तं, किञ्चित् पतितमित्यर्थः। रत्नशीर्षकं = मण्यादिनिर्मितशिरस्थम्, उष्णीषमिति यावत्। आकर्णाकृष्टकठिनकोदण्डजीवः = कर्णपर्यन्तम् आकृष्टा कठोरचापस्य जीवा गुणः येन सः, दक्षिणहस्तोत्क्षिप्तशरपुङ्खविघट्टनत्वरायितसारथिकः = दक्षिणहस्ते उत्क्षिप्तः स्थापितः शरपुङ्खः बाणमूलप्रदेशः येन सः, विघट्टने सञ्चालने त्वरायितः शीघ्रकारितायां नियुक्तः सारथिर्येन सः, बहुव्रीह्युत्तरं द्वयोः कर्मधारयः। कुमारवृषसेनः = कर्णपुत्र, तं देशम्, उपगत इत्यन्वयः।

विदलितासिलताश्यामलस्निग्धपुङ्खैः = विदलिता मर्दिता या असिलता खड्गः तद्वत् श्यामलाः स्निग्धाः पुङ्खाः शरमूलानि येषां तैः, शल्यबन्धैरित्यन्तस्य शिलीमुखैरित्यनेनान्वयः। कठिनकङ्कपत्रैः = कठिनं कठोरं कङ्कपत्र कङ्कनामकपक्षिपक्षो येषु,

---

सुन्दरक—इसके पश्चात् भीमसेन और अर्जुन से युद्ध करते हुए अपने पिता को देखकर राजकुमार वृषसेन व्याकुल होकर शीघ्रता के कारण गिरे हुए रत्न जटित उष्णीष [ साफा या पगडी ] की अवहेलना करते हुए, कानतक सार गर्भित धनुष की प्रत्यञ्चा [ डोरी ] को आकृष्ट करते हुए तथा दाहिने हाथ से तरकश से निकाले गए बाणों के मूल में लगे हुए पुङ्ख से सारथि को शीघ्रता के लिये प्रेरित करते हुए उस प्रदेश तक पहुच गए।

दुर्योधन—(गर्व के साथ) तो फिर क्या हुआ ?

सुन्दरक—पुन इसके अनन्तर महाराज! पहुँचते ही उस कुमार वृषसेन ने सम्चूर्णित तलवार की तरह चमचमाते हुए नील वर्ण के पुङ्ख से युक्त कर्कश कङ्कपत्र सम्पन्न अतएव

लानिशितश्यामलशल्यकन्धैः कुसुमित इव तरुर्मुहूर्तेन शिलीमुखैः प्रच्छादितो धनञ्जयस्य रथवर ।

उभौ—( सहर्षम् । ) ततस्ततः ।

सुन्दरक—तदो देव, तीक्खविक्खित्तणिसिदभल्लवाणवरिसिणा धणंजएण ईसि विहसिअ भणिदम्—'अरे रे विससेण, पिदुणो वि दाव दे ण जुत्तं मह कुविदस्स अभिमुहं ठादुम् । किं उण भवदो वालस्स । ता गच्छ । अवरेहिं कुमारेहि सह गदुअ आओधेहि ।' एव्वं वाअं णिसमिअ गुरुअणाहिक्खेवेण उद्दीविअकोवोपरत्तमुहमण्डल विअम्भिअभिउडिभङ्गभीसणेण चावधारिणा कुमालविससेणेण मम्मभेदएहिं परुसविसमेहि सुदिवहकिदप्पणएहिं णिब्भच्छिदो गण्डीवी बाणेहिं ण उण दुट्ठवअणेहि । ( ततो देव, तीक्ष्णविक्षिप्तनिशितभल्लवाणवर्षिणा धनंजयेनेषद्विहस्य भणितम्—'अरे रे वृषसेन, पितुरपि तावत्ते न युक्तं मम कुपितस्याभिमुखं स्थातुम् । किं पुनर्भवतो वालस्य । तद्गच्छ । अपरैः कुमारैः सह गत्वा युध्यस्व । एवं वाचं निशम्य गुरुजनाधिक्षेपेणोद्दीपितकोपोपरक्तमुखमण्डलविजृम्भितभ्रुकुटीभङ्गभीषणेन चापधारिणा

कृष्णमुखैः=श्यामलाग्रभागैः, शाणशिलानिशितश्यामलशल्यवन्धैः=शाणे कृततीक्ष्णाग्रैरित्यर्थः शिलीमुखैः=बाणैः, मुहूर्तेन, कुसुमितः=पुष्पितः तरुरिव धनञ्जयस्य, रथवरः, प्रच्छादित इत्यन्वयः ।

तीक्ष्णनिक्षिप्तभल्लवाणवर्षिणा=तीक्ष्णं यथा स्यादेवं निक्षिप्ताः निशिताः शाणाग्निना तेजिता भल्लाः कुन्ताः येन स चासौ बाणवर्षी तेन, धनञ्जयेन=अर्जुनेन, ईषद्=अल्प, विहस्य, भणितम्=उक्तम्, किमुक्तमित्याह—अरे रे इति ।

गुरुजनाधिक्षेपेण=पितृनिन्दया, उद्दीपितकोपोपरक्तमुखमण्डलविजृम्भितभ्रुकुटी-

नील वर्ण के वाणों से जिनके फल सान पर चढा देने के कारण चमक दमक से पूर्ण थे, फूले हुए वृक्ष को भ्रमरों की भाँति अर्जुन के प्रशस्त रथ को क्षणभर में आच्छादित कर दिया ।

दोनों—[ दुर्योधन और सूत ]—( प्रसन्नता पूर्वक ) उसके पश्चात् ?

सुन्दरक—तो फिर, राजाधिराज ! वेग के साथ छोडे गए तीक्ष्ण [ तेज ] भाला के सदृश बाणों की वृष्टि करते हुए अर्जुन ने ईषत् स्मित करके [ थोड़ा हसकर ] कहा—'अरे ए वृषसेन, तुम्हारे पिता भी क्रुद्ध हो जाने पर मेरे समक्ष नहीं ठहर सकते फिर तुम तो बच्चे हो कहना ही क्या ? अतः जाओ और किसी दूसरे बच्चों के साथ युद्ध करो' । इस प्रकार की बात को सुनकर गुरुजनों की निन्दा से जगे हुए क्रोध से तमतमाते हुए

कुमारवृषसेनेन मर्मभेदकै: परुषविषमै: श्रुतिपथकृतप्रणयैर्निर्भर्त्सितो गाण्डीवी बाणैर्न पुनर्दुष्टवचनै: ।

दुर्योधन —साधु वृषसेन, साधु । सुन्दरक, ततस्ततः ।

सुन्दरक —तदो देव, णिसिदसराभिघादवेअणोपजादमण्णुणा किरीटिणा चण्डगण्डीवजीआसद्दणिज्जिदवज्जणिग्घादघोसेण बाणणिपडणपडिसिद्धदंसण पसरेण पत्थुदं सिक्खाबलाणुरूवं किं वि अच्चरिअम् । (ततो देव, निशितशराभिघातवेदनोपजातमन्युना किरीटिना चण्डगाण्डीवजीवाशब्दनिर्जितवज्रनिर्घातघोषेण बाणनिपतनप्रतिषिद्धदर्शनप्रसरेण प्रस्तुत शिक्षाबलानुरूपं किमप्याश्चर्यम् ।)

---

भङ्गभीषणेन = उद्दीपितो यः कोप तेनोपरक्त यन्मुखमण्डलम् , यश्च विजृम्भितः सम्पादितः भ्रुकुटीभङ्गः ताभ्यां भीषणेन भयावहेन, चापधारिणा = धनुर्धरेण, कुमार वृषसेनेन = कर्णपुत्रेण, मर्मभेदकै: = अन्त:करणविदारकैः, परुषविषमै: = परुषैः कठोरैरत एव विषमैः, श्रुतिपथकृतप्रणयै: = कर्णमार्गपर्यन्ताकृष्टैः, बाणै: = शरै: गाण्डीवी= अर्जुन:, निर्भर्त्सितः = सन्तर्जितः, दुष्टवचनै: = दुःखकरवाक्यै:, न, पुनः, भर्त्सित इत्यस्यात्राप्यन्वय । यथाऽर्जुनेन अरे रे पितुरित्यादिना दुष्टवचनेन वृषसेनो भर्त्सितस्तथा वृषसेनेन दुष्टवचनैः न भर्त्सित: किन्तु बाणैरेवेति समुदितार्थ: ।

निशितशराभिघातवेदनोपनीतमन्युना = तीक्ष्णबाणप्रहारदुःखजातक्रोधेन 'मन्युर्दैन्ये क्रतौ क्रुधी'ति विश्व: । किरीटिना, चण्डगाण्डीवजीवाशब्दनिर्जितवज्रनिर्घातघोषेण = चण्डः प्रचण्डो: यो गाण्डीवजीवाशब्दः अर्जुनचापमौर्वीजन्यशब्दः तेन निर्जित: वज्रनिर्घातघोष: येन, बाणनिपतनप्रतिषिद्धदर्शनप्रसरेण = शरवर्षणेन प्रतिषिद्ध: दर्शनप्रसरः दृष्टिचाञ्चल्य येन तेन, शिक्षाबलानुरूपं = शस्त्राभ्यासयोग्यम् , किमपि, आश्चर्यम् = अद्भुतम , प्रस्तुतम् = आरब्धम् ।

---

मुखमण्डल मे जँभाई लेने के कारण तनी हुई भौंह से भयङ्कर कुमार वृषसेन ने धनुष धारण करके मर्म छेदी विकराल तथा कान तक आकृष्ट बाणों से न कि कटुवचनों से अर्जुन का उत्तर दिया ।

दुर्योधन—साधु वृषसेन, साधु । सुन्दरक ! फिर क्या हुआ ?

सुन्दरक—इसके अनन्तर महाराज ! तीक्ष्ण बाणों के प्रहार से क्रोधावेश में आकर अर्जुन के कठोर गाण्डीव धनुष की प्रत्यञ्चा के टङ्कार से वज्रपात की गर्जन को लज्जित करते हुए, तथा बाणों की वर्षा से दृष्टि की गति का अवरोध करते हुए अपने शिक्षा और पराक्रम के अनुरूप आश्चर्य जनक कुछ कार्य करने लगे ।

दुर्योधनः—( साकूतम् । ) ततस्ततः ।

सुन्दरकः—तदो देव, तं तारिसं पेक्खिअ सत्तुणो समरव्वावारचउरत्तणं अविभाविअतूणीरमुहधणुग्गुणगमणागमणसरसंधाणमोक्खचटुलकरअले कुमालविससेणेण वि सविसेसं पत्थुदं समलकम्म । ( ततो देव, तत्तादृश प्रेक्ष्य शत्रोः समरव्यापारचतुरत्वमविभाविततूणीरमुखधनुर्गुणगमनागमनशरसंधानमोक्षचटुलकरतलेन कुमारवृषसेनेनापि सविशेषं प्रस्तुतं समरकर्म । )

दुर्योधन—ततस्ततः ।

सुन्दरक—तदो देव, एत्थन्तरे विमुक्कसमरव्वावारो मुहुत्तविस्सामिदवेराणुबन्धो दोणं वि कुरुराअपण्डवबलाण 'साहु कुमालविससेण, साहु' त्ति किदकलअलो वीरलोओ अवलोइदु पउत्तो । ( ततो देव, अत्रान्तरे विमुक्तसमरव्यापारो मुहूर्तविश्रामितवैरानुबन्धो द्वयोरपि कुरुराजपाण्डवबलयो 'साधु कुमारवृषसेन, साधु' इति कृतकलकलो वीरलोकोऽवलोकयितुं प्रवृत्तः । )

दुर्योधन—( सविस्मयम् । ) ततस्ततः ।

---

अविभाविततूणीरमुखगमनागमनशरसन्धानमोक्षचटुलकरतलेन = अविदितयोः निषङ्गमुखधनुर्गुणगमनागमनयोः शरग्रहणत्यागयोश्च चटुल चपल करतलं हस्त यस्य तेन, सविशेष = विशिष्टम् , समरकर्म = सङ्ग्रामव्यापारः, प्रस्तुतं = प्रारब्धम् ।

विमुक्तसमरव्यापार = त्यक्तसङ्ग्रामक्रियः, मुहूर्तविश्रामितवैरानुबन्धः = मुहूर्त विश्रामित त्यक्तः वैरानुबन्धः शत्रुत्वप्रक्रिया येन सः ।

---

**दुर्योधन**—( उत्कण्ठा पूर्वक ) तो फिर··· ?

**सुन्दरक**—इसके अनन्तर महाराज ! शत्रु के इस प्रकार की युद्धक्रियापटुता को देखकर कुमार वृषसेन ने भी अपने चपल करों के द्वारा, जिनका तरकश के मुख तक जाना और फिर धनुष तक पहुँच जाना तथा बाणों को वेग के साथ फेंकना और उन्हें लौटा लेना प्रत्यक्ष दृष्टिगोचर नहीं हो रहा था, विशेष रूप से संग्राम करना प्रारम्भ कर दिया ।

**दुर्योधन**—तो फिर ········ ?

**सुन्दरक**—इसके अनन्तर इसी अवसर में संग्राम कार्य से पृथक् होकर क्षण मात्र के लिए शत्रुता को विश्राम देकर दोनों कौरव और पाण्डवों के सेना का सैनिकवर्ग शावाश वृषसेन शावाश ! इस प्रकार का कोलाहल करता हुआ देखने लगा ।

**दुर्योधन**—( आश्चर्य के साथ ) अच्छा फिर क्या हुआ ?

सुन्दरक—तदो अ देव, अवहीरिदसअलराअधाणुक्कचक्कपराक्कमसालिणो सुदस्स तहाविहेण समलकम्मालम्भेण हरिसरोसकरुणासङ्कडे वट्टमाणस्स सामिणो अङ्गराअस्स णिवडिआ सरपद्धइ भीमसेणे बाप्पपज्जाउला दिट्ठी कुमालविससेणे। ( ततश्च देव, अवधीरितसकलराजधानुष्कचक्रपराक्रमशालिनः सुतस्य तथाविधेन समरकर्मारम्भेण हर्षरोषकरुणासंकटे वर्तमानस्य स्वामिनोऽङ्गराजस्य निपतिता शरपद्धतिर्भीमसेने बाष्पपर्याकुला दृष्टिः कुमारवृषसेने। )

दुर्योधन—( सभयम्। ) ततस्ततः

सुन्दरक—तदो अ देव, उभअबलप्पउत्तसाहुकारामरिसिदेण गण्डीविणा तुरंगेसु सारहिं पि रहवरे धणुं पि जीआइं पि णलिन्दलञ्छणे सिदादवत्ते अ व्वावारिदो समं सिलीमुहासारो। ( ततश्च देव, उभयबलप्रवृत्तसाधुकारामर्षितेन गाण्डीविना तुरगेषु सारथावपि रथवरे धनुष्यपि जीवायामपि नरेन्द्रलाञ्छने सितातपत्रे च व्यापारितः समं शिलीमुखासारः। )

---

अवधीरितसकलराजधानुष्कचक्रपराक्रमशालिनः = अवधीरितं सकलराजधानुष्कचक्रं येन स चासौ पराक्रमशाली तस्य, सुतस्य; तथाविधेन = आश्चर्यप्रयोजकेन, समरकर्मारम्भेन = सङ्ग्रामप्रक्रियारम्भेण, हर्षरोषकरुणासङ्कटे = पुत्रकर्तृकतादृशयुद्धदर्शनेन हर्षः, अल्पवयस्केन सह शत्रुकर्तृकयुद्धस्य दर्शनेन क्रोधः, महाबलेन सह बालकर्तृकयुद्धस्य दर्शनेन करुणा, एतत्त्रितयसमुदाय एव सङ्कटम् तत्र, वर्तमानस्य, स्वामिनः, अङ्गराजस्य = कर्णस्य शरपद्धतिः = बाणसमूहः, भीमसेने, निपतिता, बाष्पपर्याकुला = अश्रुव्याप्ता, दृष्टिः = नेत्रम् , अङ्गराजस्येत्यस्यात्राप्यन्वयः। कुमारवृषसेने निपतितेत्यस्यात्रापि सम्बन्धः।

उभयबलप्रवृत्तसाधुकारामर्पितेन = उभयबलेन कौरवपाण्डवसैन्येन प्रवृत्तो यः साधुकारः तेनामर्पितः क्रुद्धः तेन, जीवायां = धनुर्गुणे, नरेन्द्रलाञ्छने = राजचिह्ने सितातपत्रे = श्वेतच्छत्रे, शिलीमुखासारः = बाणधाराः।

---

सुन्दरक—पुनः हे महाराज! सभी धनुर्धर राजाओं के समूह को तिरस्कृत करने वाले पराक्रम से युक्त पुत्र के इस प्रकार के युद्धकर्म से प्रसन्नता, क्रोध और दया की विपत्ति में उपस्थित कर्ण के बाणों की वर्षा भीमसेन पर और अश्रुपूर्णदृष्टि कुमार वृषसेन पर पड़ी।

**दुर्योधन**—( भयपूर्वक ) तो फिर ··?

**सुन्दरक**—फिर भी महाराज! दोनों पक्षसे उठे हुए 'साधु, साधु' शब्द से क्रुद्ध होकर अर्जुन ने [ कुमार के ] घोड़ों पर, सारथि पर, दिव्य रथ पर, धनुष पर, प्रत्यञ्चा पर और राजचिह्न श्वेत छत्र पर भी एक ही समय में बाणों की वर्षा करना प्रारम्भ कर दिया।

दुर्योधनः—( सभयम् ) ततस्ततः ।

सुन्दरक—तदो देव, विरहो लूणगुणकोदण्डो परिब्भमणमेत्तव्वावारो मण्डलग्गेण विअरिदु पउत्तो कुमालविसरेणो । ( ततो देव, विरथो लूनगुणकोदण्ड· परिभ्रमणमात्रव्यापारो मण्डलाग्रेण विचरितुं प्रवृत्तः कुमारवृषसेनः । )

दुर्योधनः—( साशङ्कम् । ) ततस्ततः ।

सुन्दरकः—तदो देव, सुदरहविद्धंसणामरिसिदेण सामिणा अङ्गराएण अगणिअभीमसेणाभिजोएण पडिमुक्को धणंजअस्स उवरि सिलीमुहासारो कुमालो वि परिजणोवणीद अण्णं रहं आरुहिअ पुणो वि पउत्तो धणंजएण सह आओधेदुम् । ( ततो देव, सुतरथविध्वंसनामर्षितेन स्वामिनाङ्गराजेनागणितभीमसेनाभियोगेन परिमुक्तो धनंजयस्योपरि शिलीमुखासारः । कुमारोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि प्रवृत्तो धनंजयेन सहायोधितुम् । )

उभौ—साधु वृषसेन, साधु । ततस्ततः ।

---

विरथः=विगतः रथः यस्य सः विनष्टरथ इत्यर्थ. । लूनगुणकोदण्डः=गुणश्च कोदण्डश्च तौ गुणकोदण्डौ मौर्वीचापौ तौ लूनौ यस्य स., परिभ्रमणमात्रव्यापारः, मण्डलाग्रेण = खड्गेन 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टय. । कौक्षेयको मण्डलाग्र' इत्यमरः।

सुतरथविध्वसनामर्षितेन = पुत्रस्यन्दनविनाशक्रुद्धेन, स्वामिना, अङ्गराजेन, अगणितभीमसेनाभियोगेन = अगणितः अनपेक्षितः भीमसेनाभियोगः भीमकर्तृकाभिग्रहः येन, धनञ्जयस्य = अर्जुनस्य, उपरि, शिलीमुखासारः = शरधारा, परिमुक्त इत्यन्वयः ।

---

दुर्योधन—( त्रस्त होता हुआ ) तो फिर ।

सुन्दरक—तो फिर महाराज ! कुमार वृषसेन रथ से रहित होकर तथा प्रत्यञ्चा (डोरी) के साथ धनुष के कट जाने पर हाथ में कृपाण लेकर केवल पैंतरा बदलते हुए इधर-उधर विचरने लगे ।

दुर्योधन—( भयपूर्वक ) तो फिर क्या हुआ ?

सुन्दरक—फिर महाराज ! अङ्गाधिराज स्वामी ( कर्ण ) पुत्ररथ के भग्न हो जाने के कारण कुपित होकर भीमसेन की सेना के प्रहारका ध्यान न देकर अर्जुन पर शरवर्षण करने लगे । कुमार [ वृषसेन ] भी भृत्यों के द्वारा लाए हुए अन्य रथ पर बैठकर अर्जुन के साथ युद्ध करने लगे ।

दोनों—[ दुर्योधन और सूत )-शाबाश ! वृषसेन, शाबाश !! फिर क्या हुआ ?

सुन्दरक—तदो देव, भणिदं च कुमालेण—'रे रे तादाहिक्खेवमुहल मज्झमपण्डव, मह सरा तुह सरीरं उज्झिअ अण्णस्सि ण णिवडन्ति' त्ति भणिअ सरसहस्सेहि पण्डवसरीरं पच्छादिअ सिंहणादेण गज्जिदु पउत्तो। (ततो देव, भणितं च कुमारेण—'रे रे ताताधिक्षेपमुखर मध्यमपाण्डव, मम शरास्तव शरीरमुज्झित्वान्यस्मिन्न निपतन्ति' इति भणित्वा शरसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्त'।)

दुर्योधन—(सविस्मयम्।) अहो, बालस्य पराक्रमो मुग्धस्वभावेऽपि। ततस्ततः।

सुन्दरक—तदो अ देव, तं सरसंपाद समवधूणिअ णिसिदसराभिघाद-जादमण्णुणा किरीटिणा गहिदा रहुच्छङ्गादो कणन्तकणअकिङ्किणीजालझ-ङ्कारविराइणी मेहोवरोहविमुक्कणहत्थलणिम्मला णिसिदसामलसिणिद्ध-मुही विविहरअणप्पहाभासुरभीसणरणिज्जदंसणा सत्ती विमुक्का कुमाला-हिमुही। (ततश्च देव, तं शरसम्पातं समवधूय निशितशराभिघातजातमन्युना

ताताधिक्षेपमुखर=ताताधिक्षेपेण पितृनिन्दया मुखर दुर्मुख, 'दुर्मुखे मुखराब-द्धमुखौ शक्लः प्रियवदे' इत्यमरः। मध्यमपाण्डवः=अर्जुन', युधिष्ठिरभीमयोरर्जुन-स्याग्रजत्वात् नकुलसहदेवयोश्चार्जुनावरजत्वादर्जुनो मध्यमपाण्डव उच्यते।

शरसम्पात=शरपतनम्, समवधूय=तिरस्कृत्य, निशितशराभिघातजातमन्युना= तीक्ष्णवाणप्रहारोत्पन्नक्रोधेन किरीटिना, गृहीता=आत्ता, अस्य शक्तिरित्यनेनान्वयः। रथोत्सङ्गात्=रथक्रोडात् रथमध्यादित्यर्थः। क्वणत्कनककिङ्किणीजालझङ्कारविराविणी= क्वणन्ति शब्दायमानानि यानि कनककिङ्किणीजालानि सुवर्णघण्टिकासमूहः तेषां झङ्कारेण विराविणी शब्दायित्री, मेघोपरोधविमुक्तनभस्तलनिर्मला=मेघावरणरहि-

**सुन्दरक**—इसके पश्चात् महाराज! कुमार [वृषसेन] ने कहा, 'अरे रे मेरे पिता की निन्दा में रत मझला पाण्डुकुमार! मेरे वाण तुम्हारे अङ्गोंके अतिरिक्त अन्यत्र कहीं नहीं गिरेंगे' इस प्रकार कह कर अगणित बाणों से अर्जुन के शरीर को आच्छादित करते हुए 'कुमारने सिंहके गर्जन के सदृश गर्जन प्रारम्भ कर दिया।

**दुर्योधन**—(आश्चर्य के साथ) भोले भाले बालक का पराक्रम भी कैसा प्रशसनीय है।

**सुन्दरक**—इसके अनन्तर महाराज! उन बाणों की झडियों का सहन कर के तीक्ष्ण वाणों के प्रहार के कारण क्रुद्ध अर्जुन के द्वारा रथ के बीच से बजते हुए सुवर्णनिर्मित घुघ-रुओं की राशि के झङ्कार से झङ्कृत होती हुई, मेघों के अवरोध से रहित आकाशमण्डल-

किरीटिना गृहीता रथोत्सङ्गात्क्वणत्कनककिङ्किणीजालझङ्कारविराविणी मेघोपरोधविमुक्तनभस्तलनिर्मला निशितश्यामलस्निग्धमुखी विविधरत्नप्रभाभासुरभीषणरमणीयदर्शना शक्तिर्विमुक्ता कुमाराभिमुखी । )

दुर्योधन —( सविषादम् । ) अहह । ततस्ततः ।

सुन्दरक —तदो देव, पज्जलन्तीं सत्ति पेक्खिअ विअलिअ अङ्गराअस्स हत्थादो ससरं धणु हिअआदो वीरसुलहो उच्छाहो णअणादो बाप्पसलिलं पि । रसिदं अ सिंहणाद विओदलेण । दुक्कलं दुक्कलं त्ति आक्कन्दिदं कुरुबलेण । ( ततो देव, प्रज्वलन्तीं शक्तिं प्रेक्ष्य विगलितमङ्गराजस्य हस्तात्सशरं धनुर्हृदयाद्वीरसुलभ उत्साहो नयनाद्वाष्पसलिलमपि । रसितं च सिंहनादं वृकोदरेण । दुष्करं दुष्करमित्याक्रन्दितं कुरुबलेन । )

दुर्योधन —( सविषादम् ) ततस्ततः ।

सुन्दरक —तदो देव, कुमालविससेणेण आकण्णपूरिदेहि णिसिदक्खु-

---

ताकाशतुल्यस्वच्छा । निशितश्यामलस्निग्धमुखी = निशितं श्यामलस्निग्ध मुखम् यस्याः सा । अनेकपदबहुव्रीहिः । विविधरत्नप्रभाभासुरभीषणरमणीयदर्शना = विविधानि यानि रत्नानि तेषां प्रभाभिः भासुरा दीप्यमाना सा चासौ भीषणरमणीयदर्शना, शक्तिः = अस्त्रविशेषः, कुमाराभिमुखी=वृषसेनसम्मुखी, विमुक्ता । वृषसेनविनाशार्थं शक्तिः निक्षिप्तेति भावः ।

प्रज्वलन्तीं—दीप्यमानाम्, शक्तिम्, प्रेक्ष्य = दृष्ट्वा सशरम् = बाणसहितम्, विगलितम् = पतितम्, अनया शक्त्या मम पुत्रस्य विनाशः स्यादेवेति हेतोरितिभावः । बाष्पसलिलं = नेत्राम्बु । रसितं = शब्दितम्, वृकोदरेण = भीमेन ।

---

भाँति स्वच्छ शक्ति, जो अनेक प्रकार के रत्नों की कान्ति से दीप्त हो रही थी अतएव देखने में भयावनी और मनोहर भी प्रतीत होती थी, कुमार वृषसेन के सम्मुख छोड़ी गई ।

**दुर्योधन**—( विषाद के साथ ) हाय ! फिर क्या हुआ ?

**सुन्दरक**—इसके बाद महाराज ! प्रज्वलन्त शक्ति को देखकर अङ्गनरेश [ कर्ण ] के हाथ से बाण और धनुष, अन्तःकरण से वीरोंके लिए सुखप्राप्य उत्साह और नेत्रों से अश्रुजल गिर पडे । भीमसेन ने सिंहगर्जन किया । 'दुष्कर, दुष्कर' कह कर कौरवीय सेना चिल्लाने लगी ।

**दुर्योधन**—( विषाद के साथ ) तो फिर क्या हुआ ?

**सुन्दरक**—तो फिर महाराज ! कुमार वृषसेन ने कान तक खींचकर तीक्ष्ण धारवाले

रप्पवाणेहिं चिरं णिल्मइअ अद्धपहे एव्व भाईरही विअ आअच्छन्ती जधा भअवदा विसमलोअणेण तधा तिधा किदा सत्ती। ( ततो देव, कुमारवृषसेनेनाकर्णपूरितैर्निशितक्षुरप्रवाणैश्चिरं निधार्यार्धपथ एव भागीरथीवागच्छन्ती यथा भगवता विषमलोचनेन तथा त्रिधा कृता शक्ति । )

दुर्योधन —साधु वृषसेन, साधु । ततस्ततः ।

सुन्दरक —तदो अ देव एदस्सि अन्तले कलमुहलेण वीरलोअसाहुवादेण अन्तरिदो समरतूरणिग्घोसो । सिद्धचालणगणविमुक्ककुसुमप्पअरेण पच्छादिदं समलाङ्गणम् । भणिअं अ सामिणा अङ्गराएण—'भो वीर विकोदल, असमत्तो तुह मह वि समलव्वावारो । ता अणुमण्ण मं मुहुत्तअम् । पेक्खामहे दाव वस्सस्स तुह भादुणो अ धणुव्वेदसिक्खाचदुरत्तणम् । तुह वि एदं पेक्खणिज्जम्' त्ति । ( ततश्च देव, एतस्मिन्नन्तरे कलमुखरेण वीरलोकसाधुवादेनान्तरित समरतूर्यनिर्घोष' । सिद्धचारणगणविमुक्तकुसुमप्रकरेण

आकर्णपूरितैः=कर्णमभिव्याप्य पूरितै. कर्णपर्यन्ताकृष्टैरित्यर्थः। क्षुरप्रवाणैः=क्षुरप्रनामकवाणविशेषै', निर्धार्य=निश्चित्य, अर्धपथे=पथोऽर्धे 'अर्धं नपुंसकमि'ति तत्पुरुषः। एव आगच्छन्ती स्वर्गादित्यर्थः। भागीरथी=भगीरथस्येयम् 'तस्येदमि'त्यण् ङीप् च, भगीरथेनानीता गङ्गा, विषमविलोचनेन=शिवेन, यथा त्रिधा कृता अतएव 'गङ्गा त्रिपथगा' इत्युच्यते तथा शक्तिः, त्रिधा कृता अर्धपथ एव।

कुमारवृषसेनेन शक्तिखण्डनात्तस्य पराक्रमेण प्रसन्नैः वीरजनै' साधु, साधु, इति कृतं तदाह—एतस्मिन्नन्तरे इति। कलमुखरेण=शब्दे तत्परमुखेन, यद्यपि वीरलोकसाधुवादस्य मुखरत्वं न सम्भवति तथापि औपचारिकं तत्। अन्तरितः=प्रच्छादितः समरतूर्यनिर्घोष'=सङ्ग्रामस्य वाद्यविशेषशब्दः। सिद्धचारणगणविमुक्तकुसुमप्रकरेण=सिद्धः देवयोनिविशेष', चारणः कुशीलवः ताभ्यां विमुक्तेन कुसुमप्रकरेण पुष्पसमूहेन, 'सिद्धो व्यासादिके देवयोनौ निष्पन्नमुक्तयोरिति कोषः। चार·

क्षुरप्र वाणों से भली-भाति निर्धारित करके आधे मार्ग में ही तीन भागों में इस तरह विच्छिन्न कर डाला जिसप्रकार [ स्वर्ग से आती हुई ] जाह्नवी [ गङ्गा ] को शङ्कर भगवान् बीच मार्ग में ही तीन भागों में विभक्त कर दिए।

**दुर्योधन**—धन्य! वृषसेन धन्य!! तो फिर क्या हुआ?

**सुन्दरक**—इसके पश्चात् महाराज! इसी अवसर में वीरों के धन्य धन्य की पुकार के कोलाहल से रणभेरी का शब्द छिप गया। सिद्ध और चारणों के द्वारा की गई पुष्पवर्षा से रणाङ्गण [ युद्धस्थल ] आच्छन्न हो गया। और स्वामी कर्ण ने कहा, 'हे वीर भीमसे

प्रच्छादितं समराङ्गणम् । भणितं च स्वामिनाङ्गराजेन—'भो वीर वृकोदर, असमाप्तस्तव ममापि समरव्यापार । तदनुमन्यस्व मा मुहूर्तम् । प्रेक्षावहे तावद्वत्सस्य तव भ्रातुश्च धनुर्वेदशिक्षाचतुरत्वम् । तवाप्येतत्प्रेक्षणीयम्' इति । )

दुर्योधनः—ततस्ततः ।

सुन्दरक —तदो देव, विस्समिदा ओधनव्वावारा मुहुत्तविस्समिदणिअवेराणुबन्धा दुवे वि पेक्खआ जादा भीमसेणङ्गराआ । (ततो देव, विश्रमितायोधनव्यापारौ मुहूर्तविश्रमितनिजवैरानुबन्धौ द्वावपि प्रेक्षकौ जातौ भीमसेनाङ्गराजौ ।

दुर्योधनः—( साभिप्रायम् । ) ततस्ततः ।

सुन्दरक —तदो देव, सत्तिखण्डणामरिसिदेण गण्डीविणा भणिअम्—अरे रे दुज्जोहणप्पमुहा—( इत्यर्धोक्तौ लज्जा नाटयति । ) ( ततश्च देव, शक्तिखण्डनामर्षितेन गाण्डीविना भणितम्—अरे रे दुर्योधनप्रमुखाः— )

दुर्योधन—सुन्दरक, कथ्यताम् । परवचनमेतत् ।

---

णास्तु कुशीलवा' इत्यमरः । समराङ्गणं = सङ्ग्रामस्थानम् । अनुमन्यस्वेति—मुहूर्तं सङ्ग्राम त्यजेत्यर्थ. । वत्सस्य = कुमारवृषसेनस्य, तव भ्रातुः = अर्जुनस्य धनुर्वेदशिक्षाचतुरत्व = धनुर्विद्याशिक्षणनिपुणत्वम् ।

विश्रमितायोधनव्यापारौ = विश्रमितः आयोधनव्यापारः युद्धक्रिया याभ्यां तौ, तौ = भीमकर्णौ ।

---

मेरा और तुम्हारा संग्राम अभी समाप्त नहीं हुआ है तो भी क्षणमात्र के लिए विश्राम लेने दो । जिससे हमलोग क्षणमात्र तक अपने पुत्र [ वृषसेन ] और तुम्हारे भ्राता [ अर्जुन ] की धनुर्वेदशिक्षानिपुणता को देख लें । तुम्हें भी यह देखना ही है ।'

**दुर्योधन**—इसके पश्चात् ?

**सुन्दरक**—तो फिर महाराज ! दोनों ही कर्ण और भीम युद्ध को स्थगित करके क्षणमात्र के लिए अपनी शत्रुता का विश्राम देकर [ उस वृषसेन और अर्जुन के युद्ध के ] दर्शक बन गए ।

**दुर्योधन**—[ उत्कट इच्छा के साथ ] तो फिर ?

**सुन्दरक**—इसके बाद महाराज ! शक्ति के छिन्न भिन्न करने के कारण कुपित अर्जुन ने कहा, 'अरे, अरे दुर्योधन प्रभृति····· (आधा कहकर लज्जा का अभिनय करता है)

**दुर्योधन**—कहो सुन्दरक ! यह तो दूसरे के मुख की बात है ।

सुन्दरकः—सुणादु देवो। 'अरे दुज्जोहणप्पमुहा कुरुवलसेणापहुणो अविणअणोकण्णधार कण्ण, तुह्मेहिं मह परोक्ख वहुहिं महारहेहिं पडिवारिअ एआई मम पुत्तओ अहिमण्णू व्वावादिदो अहं उण तुह्माणं पेक्खन्ताण एव्व एदं कुमालविससेणसुमरिदव्वसेसं करोमित्ति भणिअ सगव्व आप्फालिदं तेण वज्जणिग्घादभीसणजीआरवं गण्डीवम्। सामिणा वि सज्जकिदं कालपुट्ठम। ( शृणोतु देव। 'अरे, दुर्योधनप्रमुखा कुरुबलसेनाप्रभव, अविनयनौकर्णधार कर्ण, युष्माभिर्मम परोक्षं वहुभिर्महारथैः परिवृत्यैकाकी मम पुत्रकोऽभिमन्युर्व्यापादित। अहं पुनर्युष्माकं प्रेक्षमाणानामेवैतं कुमारवृषसेनं स्मर्तव्यशेष करोमि' इति भणित्वा सगर्वमास्फालितमनेन वज्रनिर्घातघोषभीषणजीवारवं गाण्डीवम्। स्वामिनापि सज्जीकृत कालपृष्ठम। )

दुर्योधन—( सावहित्थम् ) ततस्ततः।

सुन्दरकः—तदो अ देव, पडिसिद्धभीमसेणसमलकम्मालम्भेण गाण्डीविणा विरइदा अङ्गराअविससेणरहकूलंकसाओ दुवे बाणणदीओ। तेहि वि दुवेहिं अण्णोण्णदंसिदसिक्खाविसेसेहि अभिजुत्तो सो दुराआरो मज्झमपण्डवो ( ततश्च देव, प्रतिषिद्धभीमसेनसमरकर्मारम्भेण गाण्डीविना विर-

---

परिवृत्य=मिलित्वा। व्यापादितः=हत.। स्मर्तव्यशेष=स्मर्तव्यः स्मरणं शेष यस्य तादृशं करोमि। भावे तव्यप्रत्ययः। स्मरणमात्रमेवास्यावशिष्टं स्यात्, मया हननादिति भाव'। गाण्डीवम्=अर्जुनधनुः। कालपृष्ठं=कर्णस्य धनुः। अथ कर्णस्य कालपृष्ठ शरासनम्। 'कपिध्वजस्य गाण्डीवगाण्डिवौ पुन्नपुंसकौ, इत्यमरः।

---

सुन्दरक—सुनिए महाराज! 'अरे दुर्योधनप्रभृतिकौरवसेनानायकों, और असभ्यतारूपी जलयान के कर्णधार कर्ण! तुम सब बहुत से महारथियों ने मिलकर मेरी अनुपस्थित में असहाय मेरे पुत्र अभिमन्यु का वध किया है और मैं तुम लोगों के समक्ष ही कुमार वृषसेन को स्मृतिमात्र शेष रक्खूंगा (अर्थात् उसकी जीवन लीला समाप्त कर दूंगा)।' इस प्रकार कहकर अहङ्कार के साथ गाण्डीव धनुष को, जिसकी प्रत्यञ्चा का शब्द वज्रपात के सदृश है, चढाया। महाराज कर्णने भी 'कालपृष्ठ' नामक धनुष को खींचा।

दुर्योधन—( आकृति छिपाकर ) तो फिर क्या हुआ?

सुन्दरक—इसके अनन्तर महाराज! भीमसेन के युद्ध को रोककर अर्जुन ने कर्ण और वृषसेन के रथ रूपी तट को काटकर गिराने वाली दो बाणों की नदी निर्माण कर

चिते अङ्गराजवृषसेनरथकूलङ्कषे द्वे वाणनद्यौ । ताभ्यामपि द्वाभ्यामन्योन्यदर्शित-शिक्षाविशेषाभ्यामभियुक्तः स दुराचारो मध्यमपाण्डव. । )

दुर्योधन.—ततस्ततः ।

सुन्दरक—तदो अ देव, गण्डीविणा ताररसिदजीआणिग्घोसमेत्त-विण्णादवाणवरिसेण तह आअरिदं पत्तिहिं जह ण णहत्तलं ण सामी ण रहो ण धरणी ण कुमालो ण केदुवंसो ण बलाइ ण सारही ण तुलङ्गमा ण दिसाओ ण वीरलोओ अ लक्खीअदि । ( ततश्च देव, गाण्डीविना ताररसित-ज्यानिर्घोषमात्रविज्ञातवाणवर्षेण तथा चरितं पत्रिभिर्यथा न नभस्तलं न स्वामी न रथो न धरणी न कुमारो न केतुवंशो न वलानि न सारथिर्न तुरङ्गमा न दिशो न वीरलोकश्च लक्ष्यते । )

दुर्योधन —( सविस्मयम् । ) ततस्ततः ।

---

अङ्गराजवृषसेनरथकुलङ्कषे = कर्णवृषसेनरथावेव कुले तटे ते कषतः 'सर्वकुला-भ्रकरीषेषु कष' इति खच्प्रत्ययः । 'अरुरि'ति मुमागमः । वाणनद्यौ = वाणा एव नद्यौ ते । ताभ्यां = कर्णवृषसेनाभ्याम् ।

ताररसितज्यानिर्घोषमात्रविज्ञातवाणवर्षेण = तारेण उच्चै रसिता शब्दिता या ज्या धनुर्गुण. तस्या निर्घोषमात्रेण विज्ञात वाणवर्षः येन तेन, ज्याशब्दमात्रेणैव बाणवर्षणं ज्ञायते बाणवर्षणानामतिशीघ्रतया करणादिति भावः । गाण्डिविना, कर्त्रा, पत्रिभिः = शरैः 'कलम्बमार्गणशरा. पत्री रोप इषुर्द्वयो'रित्यमरः । तथा, चरितं = कृतम् , यथा, नभस्तलम् = आकाशमण्डलम् , स्वामी = कर्णः, धरणी = पृथ्वी, केतुः = ध्वजम् , सर्वाणि वाणैर्व्याप्तत्वान्न दृष्टानीति भावः ।

---

दिया । उन दोनों ( कर्ण और वृषसेन ) के साथ, जो एक दूसरे से अपनी अपनी शिक्षा की कला का प्रदर्शन कर रहे थे, वह मझला पाण्डुकुमार भीमसेन भिड़ गया ।

दुर्योधन—तो फिर ···?

सुन्दरक—इसके उपरान्त महाराज ! गाण्डीवधारी [ अर्जुन ] ने बाणों की वर्षा से, जो केवल धनुष की प्रत्यञ्चा के गगनभेदी टङ्कार से प्रतीत हो रही थी, इस प्रकार बाणों के द्वारा कौशल प्रदर्शन किया कि आकाशमण्डल, स्वामीकर्ण, रथ, भूमि, कुमार वृषसेन, पताकादण्ड, सैन्य, सारथी, घोड़े दिशायें और सैनिक-वर्ग इनमें से कोई भी दृष्टि में नहीं आता था ।

दुर्योधन—( विस्मित होकर ) उसके उपरान्त क्या हुआ ?

सुन्दरकः—तदो अ देव, अदिक्कन्ते सरवरिसे क्खणमेत्तं ससिंहणादे पण्डवबले विमुक्काक्कन्दे कौरवबले उत्थिदो महन्तो कल अलो हा हदो कुमालविससेणो हा हदो त्ति। ( ततश्च देव, अतिक्रान्ते शरवर्षे क्षणमात्रं ससिंहनादे पाण्डवबले विमुक्ताक्रन्दे कौरवबल उत्थितो महान् कलकलो हा हतः कुमारवृषसेनो हा हत इति। )

दुर्योधनः—( सबाष्परोधम् ) ततस्ततः।

सुन्दरकः—तदो देव, महन्तीए वेलाए पेक्खिअ हदसारहितुलङ्गं लूणादवत्तकेदुवंस सग्गप्पब्भट्ट विअ सुलकुमालं एक्केण ज्जेव मम्मभेदिणा सिलीमुहेण भिण्णदेहं रहमज्झे परिट्ठिदं कुमालं आअदो। ( ततो देव, महत्या वेलया प्रेक्ष्य हतसारथितुरङ्गं लूनातपत्रकेतुवंशं स्वर्गप्रभ्रष्टमिव सुरकुमारमेकेनैव मर्मभेदिना शिलीमुखेन भिन्नदेहं रथमध्ये परिस्थितं कुमारमागतः।)

दुर्योधनः—( सास्रम्। ) अहह कुमारवृषसेन, अलमतः परं श्रुत्वा। हा वत्स वृषसेन, हा मदङ्कदुर्ललित, हा गदायुद्धप्रिय, हा राधेयकुलप्ररोह,

---

ससिंहनादे, पाण्डवबले, सतीत्यन्वयः। विमुक्ताक्रन्दे, कौरवबले सतीत्यन्वयः। वेलया = समयेन, अस्य प्रेक्ष्येत्यनेनान्वयः। सुरकुमारं—देवपुत्रम्, इव, शिलीमुखेन = बाणेन, कुमार = वृषसेनम्, प्रेक्ष्य = दृष्ट्वा, आगतोऽहमित्यन्वयः।

वृषसेनवधश्रवणाद् विलपति दुर्योधनः—अहहेति। मदङ्कदुर्ललित = मम अङ्के क्रोडे दुर्ललितः यः, तत्सम्बोधने, कृच्छ्रविलासित इत्यर्थः।

---

**सुन्दरक**—इसके अनन्तर महाराज बाणवर्षा के समाप्त होने पर क्षणभर में ही सिंहगर्जन करती हुई पाण्डव सेना में और रोती पीटती हुई कौरव सेनामें 'हाय! कुमार वृषसेन मारा गया, हाय मारा गया' इस तरह का महान् कलकल होने लगा।

**दुर्योधन**—( अश्रु रोक कर ) तो फिर क्या हुआ?

**सुन्दरक**—तो फिर महाराज! कुमार के घोडे और सारथी मरे हुए पडे थे। उनके ध्वजा और छाते का दण्ड खण्डित कर दिया गया था। वे स्वर्गच्युत देवकुमार की भाँति एक ही मर्मभेदी बाण से जर्जरित कलेवर होकर रथ के बीच में बैठे हुए थे। बहुत देरतक मैं वहाँ उसे देखकर चला आया।

**दुर्योधन**—( आँसू भरकर ) हाय! कुमार वृषसेन, वृषसेन, इसके बाद सुनने की आवश्यकता नहीं। हाय बेटा वृषसेन! हाय मेरी गोदी के प्यारे! हाय गदायुद्ध के प्रेमी!

हा प्रियदर्शन, हा दुःशासननिर्विशेष, हा सर्वगुरुवत्सल, प्रयच्छ मे प्रतिवचनम् ।

पर्याप्तनेत्रमचिरोदितचन्द्रकान्त-
मुद्भिद्यमाननवयौवनरम्यशोभम् ।
प्राणापहारपरिवर्तितदृष्टि दृष्टं
कर्णेन तत्कथमिवाननपङ्कज ते ॥ १० ॥

सूतः—आयुष्मन्, अलमत्यन्तदुःखावेगेन ।

दुर्योधन—सूत, पुण्यवन्तो हि दुःखभाजो भवन्ति । अस्माकं पुनः प्रत्यक्ष हतबन्धूनामेतत्परिभवाग्निना ।

---

अन्वय.—ते, पर्य्याप्तनेत्रम्, अचिरोदितचन्द्रकान्तम्, उद्भिद्यमाननवयौवनरम्यशोभम्, प्राणापहारपरिवर्तितदृष्टि, तत्, आननपङ्कजम्, कथमिव, कर्णेन, दृष्टम् ॥१०॥

पर्याप्तेति—ते = तव वृषसेनस्य, पर्याप्तनेत्रं = पर्याप्त नेत्र यस्मिन् तत्, दीर्घनेत्रमित्यर्थः । पर्याप्तनेत्रमित्यादि दृष्टीत्यन्तम् आननपङ्कजेऽन्वेति । अचिरोदितचन्द्रकान्त = त्वरितोदितेन्दुसदृशसुन्दरम्, उद्भिद्यमाननवयौवनरम्यशोभम् = उद्भिद्यमानं प्रादुर्भूयमानम् यन्नवयौवन ( तरुणता ) तेन रम्या शोभा यस्य तत्, प्राणापहारपरिवर्तितदृष्टि = प्राणविनाशविपरीतदर्शनम्, आननपङ्कज = पङ्कज कमलमिव आनन मुखम्, 'उपमितं व्याघ्रादिभि'रिति समास. । कथमिव कर्णेन दृष्टम् तदा कर्णस्य कीदृशी व्यथाऽभूदिति भावः । अत्र चतुर्थचरणे लुप्तोपमालङ्कारः । वसन्ततिलका छन्दः ॥ १० ॥

अन्वय—प्रत्यक्षम्, हतबन्धूनाम्, ( अस्माकम् ) हृदयम्, परिभवाग्निना, अत्यर्थम्, दह्यते, ( अतः ) कुतः, दुःखम्, कुतः, व्यथा ॥ ११ ॥

प्रत्यक्षं = समक्षं न तु परोक्षम्, हतबन्धूनां = व्यापादितबान्धवानाम्, अस्माकं

---

हाय कर्णवंश के अङ्कुर ! हाय दुश्शासन के सदृश प्रिय ! हाय सब बड़े लोगों के दुलारे ! मुझे उत्तर दो ।

विशाल लोचन, बालचन्द्रमा के सदृश रम्य, उमँगते हुए अभिनव यौवन की छटा से सुशोभित और प्राणान्त होने के कारण विकृति दृष्टि से युक्त तुम्हारे मुखकमल को कर्ण ने किस प्रकार से देखा अर्थात् इस तरह के हृदयविदारक दृश्य को किस प्रकार देखा होगा ॥

**सूत**—श्रीमान् ! अधिक दुःखावेश में पड़ने की आवश्यकता नहीं ।

**दुर्योधन**—सूत ! भाग्यवान् लोग ही दुःख के भागी होते हैं । हम लोगों का तो.—

जिनके कुटुम्बियों का वध हो गया है ऐसे व्यक्तियों का हृदय तो अपमान की ज्वाला

हृदयं दह्यतेऽत्यर्थं कुतो दुःखं कुतो व्यथा ॥ ११ ॥

( इति मोहमुपगतः । )

सूत—समाश्वसितु समाश्वसितु महाराजः । (इति पटान्तेन वीजयति।)

दुर्योधन—( लब्धसंज्ञः । ) भद्र सुन्दरक, ततो वयस्येन किं प्रतिपन्नमङ्गराजेन ।

सुन्दरक—तदो अ देव, तधाविधस्स पुत्तस्स दंसणेण संगलिदं अस्सुजादं उज्झिअ अणवेक्खिदपरप्पहरणाओएण सामिणा अभिजुत्तो धणंजओ । त अ सुदवहामरसुद्दीविदपक्कमं तह परिक्कमन्तं पेक्खिअ गअलसहदेवपञ्चालप्पमुहेहिं अन्तरिदो धणंजअस्स रहवरो । ( ततश्च देव, तथाविधस्य पुत्रस्य दर्शनेन संगलितमश्रुजातमुज्झित्वानऽपेक्षितपरप्रहरणेन स्वामि-

---

हृदयम् = अन्तःकरणम् , परिभवाग्निना = परिभव एवाग्निः तेन, अत्यर्थं, दह्यते = भस्मसात्क्रियते, वेदान्तिमते अन्तःकरणस्य दुःखसमवायित्वेन अन्तःकरणरूपाधारस्य दाहे सति आधारस्याभावेन आधेयदुःखस्याभावादुक्त—'कुतो दुःखं कुतो व्यथेति । यद्यपि 'पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् , इति कोशे व्यथादुःखयोः पर्यायत्वेनोक्तेः पुनरुक्त्या कुतो दुःखं कुतो व्यथेत्युभयग्रहणमयुक्तं तथापि व्यथाशब्दः शारीरिकदुःखे उपचर्यते । अत्र द्वितीयचरणे रूपकमलङ्कारः । पथ्यावक्त्र छन्दः ॥ ११ ॥

**पटान्तेन = वस्त्रान्तेन, बीजयति = व्यजनक्रियां करोति ।**

**वयस्येन = मित्रेण, अङ्गराजेन, किम् , प्रतिपन्नं = कृतम् ।**

**तथाविधस्य = मृत्युमुख प्राप्तस्य, सङ्गलितं = प्रच्युतम् , उज्झित्वा = पृथक्कृत्य,**

---

से प्रत्यक्षरूप से ही जला करता है फिर उन्हें दुःख और वेदना कहाँ अर्थात् दुःख और सुख का सम्बन्ध तो अन्तःकरण से हुआ करता है यदि अन्तःकरण ही जल गया तो दुःख और सुख की प्रतीति किस को होगी ? ॥ ११ ॥

( चेतनारहित हो जाता है )

सूत—धैर्य धरें, महाराज धैर्य धरें । ( वस्त्राञ्चल से पङ्खा करता है )

दुर्योधन—( चैतन्य होकर ) भाई सुन्दरक ! तो फिर मित्र कर्ण ने क्या किया ?

सुन्दरक—इस के अनन्तर महाराज ! इस प्रकार की दुर्दशा में पड़े हुए पुत्र के देखने से झरते हुए अश्रुजलों को रोक कर शत्रुवों के प्रहार की उपेक्षा करके स्वामी कर्ण ने अर्जुन को आक्रान्त कर लिया । और उन्हें [ कर्ण को ] पुत्रवध के क्रोध से उद्दीप्त पराक्रम के साथ

नाभियुक्तो धनञ्जयः । तं च सुतवधामर्षोद्दीपितपराक्रमं तथा परिक्रामन्तं प्रेक्ष्य नकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनञ्जयस्य रथवरः ।)

दुर्योधन —ततस्ततः ।

सुन्दरक—तदो देव, सल्लेण भणिदम्–'अङ्गराअ, हदतुलङ्गमो भग्गकूवरो दे रहो ण जोग्गो भीमाज्जुणेहिं सह आजुज्झिदुम्' त्ति पडिवट्टिदो रहो ओदारिदो सामी सन्दणादो बहुप्पआरं अ समस्सासिदो। तदो अ सामिणा सुइरं विलपिअ परिअणोवणीदं अण्णं रहं पेक्खिअ दीहं निस्ससिअ मइ दिट्ठी विणिक्खिविदा। सुन्दरअ एहि त्ति भणिदं अ। तदो अह उवगदो सामिसमीवम्। तदो अवणिअ सीसट्ठाणादो पट्टिअं सरीरसंगलिदेहि सोणिअहिं लित्तमुहं बाणं कदुअ अहिलिहिअ पेसिदो देवस्स संदेसो (इति पट्टिकामर्पयति ।) (ततो देव, शल्येन भणितम्—'अङ्गराज, हततुरङ्गमो भग्नकूवरस्ते रथो न योग्यो भीमार्जुनाभ्यां सहायोद्धुम्' इति परिवर्तितो रथोऽवतारितः स्वामी स्यन्दनाद्बहुप्रकारं च समाश्वासितः । ततश्च स्वामिना सुचिरं विलप्य परिजनोपनीतमन्यं रथं प्रेक्ष्य दीर्घं निःश्वस्य मयि

---

अनपेक्षितपरप्रहरणेन = अनपेक्षितं परप्रहणं शत्रुकृतप्रहारो येन, तेन, स्वामिना = अङ्गराजेन, अभियुक्तः = युद्धार्थं लक्ष्यीकृतः ।

कूवरः = युगन्धरः, रथस्य युगकाष्ठबन्धनस्थानम्, स्यन्दनात् = रथात् स्वामी = अङ्गराजः, अवतारितः = उत्तारितः इत्यन्वयः । परिजनोपनीतम् = आत्मीयजनानीतम्, अन्य, रथम् प्रेक्ष्य = दृष्ट्वा, दीर्घं निःश्वस्य = उच्चैः श्वासं गृहीत्वा । दीर्घ-

---

जीवन की आशा छोड़ कर उस प्रकार परिक्रमण करते हुए देख कर नकुल, सहदेव और पाञ्चालनरेश प्रभृति वीरों ने अर्जुन के रथ को ढक लिया ।

दुर्योधन—अच्छा तो फिर ...?

सुन्दरक—फिर महाराज ! शल्यने कहा, 'अङ्गनरेश ! आप का रथ जिसके घोड़े मार डाले गये और जिसका कूबर (गोल कुछ लम्बा काठ जिसमें पहिए के अरे लगे होते हैं) टूट गया है, भीम और अर्जुन के साथ युद्ध करने योग्य नहीं रह गया' इस प्रकार कहकर रथ घुमा लिया स्वामी [ कर्ण ] को रथ ने उतार लिया और उसने अनेक प्रकार से धैर्य बँधवाया । इसके अनन्तर स्वामी ने अधिक समय तक विलाप करके सेवकों से लाये गये अन्य रथ को देख कर तथा दीर्घ निश्वास लेकर मुझ पर दृष्टि डाली । 'सुन्दरक ! यहा आओ, यह भी उन्होंने कहा । फिर मैं स्वामी के समीप उपस्थित हुआ । पुनः उन्होंने

दृष्टिर्विनिक्षिप्ता। सुन्दरक, एहीति भणितं च। ततोऽहमुपगतः स्वामिसमीपम्। ततोऽपनीय शीर्षस्थानात्पट्टिकां शरीरसंगलितैः शोणितबिन्दुभिर्लिप्तमुखं बाणं कृत्वाऽभिलिख्य प्रेषितो देवस्य संदेशः।)

( दुर्योधनो गृहीत्वा वाचयति। )

यथा—'स्वस्तिमहाराजदुर्योधन समराङ्गणात्कर्ण एतदन्तं कण्ठे गाढमालिङ्ग्य विज्ञापयति—

अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमा-
न्भ्रातृभ्योऽपि ममाधिकोऽयममुना जेयाः पृथासूनवः।

निःश्वासेन दुःख व्यज्यत इति भावः। मयि=सुन्दरके, दृष्टिः=नेत्रम्, विनिक्षिप्ता=निपातिता दत्तेत्यर्थः। भणितमित्यस्य कर्म—एहीति। शीर्षस्थानात्=मस्तकात्, पट्टिकां=मस्तकवेष्टनवस्त्रम्, अपनीय=अधोनिपात्य, शरीरसंगलितैः=देहप्रसृतैः, बाणं=शरम्, लिप्तमुखं=लिप्तं मुखं यस्य तादृश, कृत्वा, अभिलिख्य पट्टिकायामिति शेषः। देवस्य=भवतः, संदेशः=बोधयितुमिष्टवचनम्, प्रेषितः=प्रहितः। कर्णेन पत्र लिखित्वा प्रेषितमिति भाव'।

महाराजदुर्योधनमित्यस्य आलिङ्ग्येत्यत्र विज्ञापयतीत्यत्र चान्वयः।

अन्वयः—समरेषु, अस्त्रग्रामविधौ, कृती, अस्य, तुल्यः, पुमान्, न, अस्ति, अयम्, मम, भ्रातृभ्यः, अपि, अधिकः, ( अत ) अमुना, पृथासूनवः, जेयाः, इति, अहम्, यत्, सम्भावितः, मया, दुःशासनारिः, नच, हतः, ( अत ) स्वयमेव, त्वम्, भुजयोः, वीर्येण, वाष्पेण, वा तम्, दुःखप्रतिकारम्, एहि॥ १२॥

यदर्थं त्वयाऽहं सम्मानितः तन्मया नाकारीत्याह=अस्त्रग्रामविधौ कृतीति।

समरेषु, अस्त्रग्रामविधौ=आयुधसमूहसञ्चालने, कृती=निपुणः अस्य=कर्णस्य, तुल्यः=सदृशः पुमान्, न, अस्ति। एतादृशवीरोऽन्यो नास्तीति भावः। अयं=कर्णः, भ्रातृभ्यः, अपि, अधिकः—बलवान्, अमुना=कर्णेन, पृथासूनवः,=पृथापुत्राः

शिर से पट्टी खोलकर शरीर से निकलते हुए रक्तबिन्दुओं से बाण के मुख को लिप्तकर सन्देश लिखा और महाराज के समीप प्रेषित कर दिया।

( ऐसा कहकर पत्रिका देता है और दुर्योधन उसे लेकर पढता है )—

स्वस्ति, कण्ठ से आलिङ्गनपूर्वक कर्ण समरभूमि से महाराज दुर्योधन को सूचित करता है:—

'युद्धस्थल के बीच शस्त्रास्त्र प्रयोग में इसके समान निपुण कोई नहीं है। यह मेरे भ्राताओं से बढ़कर है। यह कुन्ती के पुत्रों पर विजय प्राप्त करेगा'—इस प्रकार की

यत्संभावित इत्यहं न च हतो दुःशासनारिर्मया
तं दुःखप्रतिकारमेहि भुजयोर्वीर्येण बाष्पेण वा ॥ १२ ॥

दुर्योधनः—वयस्य कर्ण, किमिदं भ्रातृशतवधदुःखितं मामपरेण वाक्शल्येन घट्टयसि । भद्र सुन्दरक, अथेदानीं किमारम्भोऽङ्गराजः ।

सुन्दरकः—देव, अज्जवि आरम्भो पुच्छीअदि । अवणीदसरीरावरणो अप्पवहकिदणिच्चओ पुणोवि पत्थेण सह समलं मग्गदि । ( देव, अद्याप्यारम्भः पृच्छ्यते । अपनीतशरीरावरण आत्मवधकृतनिश्चयः पुनरपि पार्थेन सह समरं मार्गयते । )

दुर्योधनः—( आवेगादासनादुत्तिष्ठन् । ) सूत, रथमुपनय । सुन्दरक,

पाण्डवा इत्यर्थः । जेयाः = जेतुं योग्याः, अनेन पाण्डवोपरि विजयः स्यादिति भावः । इति = पूर्वोक्तप्रकारेण, अहम् , यत् , सम्भावितः = आशाविषयः कृतः, त्वयेति शेषः । एतादृशसम्भावनाविषयेणापि, मया, दुःशासनारि = दुःशासनशत्रुः भीमः, नच, हतः । भीमाद् दुःशासनत्राणं कर्तव्यं भीमवधश्च कर्तव्यो मया तदुभयं न कृतमित्याशयः । अतः स्वयमेवेत्यध्याहारः, तथाच त्वं स्वयमेव, भुजयोः, वीर्येण = पराक्रमेण, बाष्पेण = नेत्रजलेन, दुःखप्रतिकारं = दुःखविनाशोपायम् , एहि = प्राप्नुहि, युद्ध्वा रुदित्वा वा दुःखप्रतीकारं कुर्वित्यर्थः । अहं तत्राशक्तः सन् मरणायोद्यत इति गूढाभिप्रायः । शार्दूलविक्रीडितं छन्दः ॥ १२ ॥

वाक्शल्येन = वाक् शल्यः शङ्कुरिव तेन, 'वा पुंसि शल्य शङ्कुर्ना'त्यमरः । शल्यः 'वर्छी' इति प्रसिद्ध = शस्त्रविशेषः । घट्टयसि = पीडयसि ।

अपनीतशरीरावरणः = अपनीतं त्यक्तं शरीरावरण कवचं येन सः, अत एव आत्मवधकृतनिश्चयः = आत्मवधे कृतो निश्चयो येन सः । मानिनो मानधनत्वात् , दुःशासनस्य वधेन मानस्य ह्रानान्मरणार्थमुद्यत इत्यर्थः ।

धारणा मेरे विषय में तो आप की थी । ( परन्तु ) मैंने दुश्शासन के शत्रु का वध नहीं किया । उस दुःख की प्रतिक्रिया भुजाओं के पराक्रम से अथवा अश्रु की वर्षा से कीजिए ।

दुर्योधन—मित्र कर्ण ! यह क्यों सौ भाइयों के वध से व्यथित मुझे एक दूसरे प्रकार के वचनवाण से विद्ध कर रहे हो ? भाई सुन्दरक ! अब कर्ण ने क्या करना विचारा है ?

सुन्दरक—महाराज ! अब भी आरम्भ की बात पूछ रहे हैं ? शरीर–कवच को दूर करके अपने वध को हृदय से निश्चय करके फिर भी अर्जुन के साथ युद्ध का अवसर देख रहा है ।

दुर्योधन—( वेग के साथ आसन से उठता हुआ ) सारथे ! रथ उपस्थित करो ।

त्वमपि मद्वचनात्त्वरिततरं गत्वा वयस्यमङ्गराजं प्रतिबोधय। अलमतिसाहसेन। अभिन्न एवायमावयोः संकल्पः। न खलु भवानेको जीवितपरित्यागाकाङ्क्षी किंतु।

हत्वा पार्थान्सलिलमशिवं बन्धुवर्गाय दत्त्वा
मुक्त्वा बाष्पं सह कपिपयैर्मन्त्रिभिश्चारिभिश्च।
कृत्वाऽन्योन्यं सुचिरमपुनर्भावि गाढोपगूढं

जीवितपरित्यागाकाङ्क्षी = प्राणपरित्यागेच्छुः।

अन्वय.—पार्थान्, हत्वा, अशिवम्, सलिलम्, बन्धुवर्गाय, दत्त्वा, कतिपयैः, मन्त्रिभिः, अरिभिः, च, सह, बाष्पम्, मुक्त्वा, अपुनर्भावि, गाढोपगूढम्, अन्योऽन्यम्, सुचिरम्, कृत्वा, दुःखितौ, निर्वृतौ, च, (आवाम्), इमाम्, हततनुम्, सन्त्यक्ष्यावः॥ १३॥

पार्थान् = पाण्डवान्, हत्वा = व्यापाद्य, अशिवम् = अमङ्गलम्, सलिलं = जलं मरणोत्तरं देयं तिलाञ्जलिमित्यर्थः। बन्धुवर्गाय = समरे हताय बान्धवसमूहाय दत्त्वा, कतिपयैः = कियद्भिः, मन्त्रिभिः = अमात्यैः, मदीयदुःखेन मन्त्रिणामपि दुःखित्वादिति भावः। अरिभिः = शत्रुभिः, आवयोरिव तेषामपि बन्धुनाशाद् दुःखेनाश्रुमोचनमिति भावः। च शब्दः समुच्चयद्योतकः। सह = साकम्, बाष्पम् = अश्रु, मुक्त्वा—त्यक्त्वा, अपुनर्भावि—पुनर्भवितुं शीलमस्य पुनर्भावि न पुनर्भावीत्यपुनर्भावि, गाढोपगूढ = गाढम् अतिशयं यथा स्यात्तथा उपगूढम् आलिङ्गनम्, जन्मान्तरे उभयोरेकत्र जन्मनोऽनिश्चितत्वात् पुनरालिङ्गनं न सम्भवत्यत उक्तम्—अपुनर्भावीति। अन्योऽन्यं = परस्परम्, सुचिरं = बहुकालम् कृत्वा, दुःखितौ बन्धुनाशेनेति भावः। निर्वृतौ = सन्तुष्टौ, पार्थहननेन कृतकृत्यत्वादिति भावः। हततनुं =

सुन्दरक! तुम भी मेरी आज्ञा से शीघ्र ही जाकर मित्र कर्ण को सूचित कर दो—अधिक साहस की आवश्यकता नहीं। हमलोगों का यह सङ्कल्प एक है। आप अकेले ही अपने जीवन के परित्याग की इच्छा नहीं करते हैं किन्तु :—

पृथा के पुत्रों का वध करके, अमाङ्गलिक जल कुटुम्बियों को देकर दो चार बचे हुए मन्त्रियों और शत्रुओं के साथ आँसू बहाकर, परस्पर भविष्य में दुष्प्राप्य गाढ आलिङ्गन करके और दुःखपूर्वक अथवा कार्य की पूर्ति करते हुए इस नश्वर शरीर का परित्याग करेंगे अर्थात् पाण्डवों का, संहार करके युद्ध में प्राण परित्याग किए हुए कुटुम्बियों को तिलाञ्जलि प्रदान करके जीवित शत्रु तथा मन्त्रियों के साथ खूब रोकर आपस में एक

संत्यक्ष्यावो हततनुमिमां दुःखितौ निर्वृतौ च ॥ १३ ॥

अथवा शोक प्रति मया न किंचित्संदेष्टव्यम् ।

वृषसेनो न ते पुत्रो न मे दुःशासनोऽनुजः ।
त्वां बोधयामि किमहं त्वं मां संस्थापयिष्यसि ॥ १४ ॥

सुन्दरक—जं देवो आणवेदि ( इति निष्क्रान्तः ) ( यद्देव आज्ञापति । )

दुर्योधनः—तूर्णमेव रथमुपस्थापय ।

सूत—( कर्णं दत्वा । ) देव, ह्रेषासंवलितो नेमिध्वनिः श्रूयते । तथा तर्कयामि नूनं परिजनोपनीतो रथः ।

---

मृतप्रायशरीरम्, सन्त्यक्ष्यावः=हास्यावः, आवामिति शेषः। मन्दाक्रान्ता छन्दः॥१३॥

अथवेति—शोकविषयकसन्देशो न प्रेषितव्य इत्यर्थः। तस्य स्वयमेवागतत्वादित्याशयः।

अन्वय.—ते, वृषसेन., पुत्रः, न, किम्, मे, दुःशासनः, अनुजः, न, (किम्) अहम्, त्वाम्, किम्, बोधयामि, त्वम्, माम्, किम्, संस्थापयिष्यसि ॥ १४ ॥

वृषसेन इति। ते=तव, वृषसेनः=त्वत्पुत्रः पुत्रः, न, किमिति शेषः। पुत्र एवेति भावः। मे=मम, दुःशासनः, अनुजः=कनिष्ठभ्राता, न, अनुज एवेति भावः। त्वां=कर्णम् किम्, बोधयामि=आश्वासयामि, न किमपीत्यर्थः। त्वं=कर्णः, माम्, किम्, संस्थापयिष्यसि=धैर्यं धारयिष्यसि, तथाचावां मिलित्वैव शत्रुविजयं करिष्यावः अत एव कथयिष्यति—तूर्णमेव रथमुपस्थापयेति। अनुष्टुप् छन्दः ॥ १४ ॥

ह्रेषासंवलितः—अश्वशब्दयुक्तः, नेमिध्वनिः—चक्रप्रान्तशब्दः, श्रूयते, तर्कयामि=

---

दूसरे के साथ प्रेमालिङ्गन करके इस शरीर का त्याग करेंगे क्योंकि इसका कोई ठिकाना नहीं है हम लोगों का कार्य भी इस तरह पूरा हो जाता है ॥ १३ ॥

अथवा शोकग्रस्त के प्रति मुझे कुछ भी सन्देश नहीं भेजना है।

तुम्हारा पुत्र क्या वृषसेन नहीं है ? और मेरा क्या कनिष्ठ भ्राता दुश्शासन नहीं है ?। मैं तुम्हें क्या धैर्यप्रदान करू और तुम मुझे क्या सान्त्वना दोगे ?

अथवा—वृषसेन तुम्हारा ही पुत्र नहीं था मेरा भी पुत्र है। दुश्शासन मेरा ही भाई नहीं था किन्तु आपका भी भाई था दोनों का दुःख बराबर है अत मैं क्या तुम्हें समझाऊँ और तुम मुझे क्या समझाओगे ?॥ १४ ॥

**सुन्दरक**—अच्छा, जो महाराज की आज्ञा ( चल पडता है )

**दुर्योधन**—शीघ्र ही रथ उपस्थित करो !

**सूत**—( कान लगाकर ) महाराज ! हिनहिनाहट के साथ रथचक्र की ध्वनि सुनाई पड़ रही है अतः अनुमान करता हूँ कि अवश्य भृत्यों ने रथ को लाया होगा।

दुर्योधनः—सूत, गच्छ त्वं सज्जीकुरु ।

सूतः—यदाज्ञापयति देवः । ( इति निष्क्रम्य पुनः प्रविशति । )

दुर्योधनः—( विलोक्य । ) किमिति नारूढोऽसि ।

सूतः—एष खलु तातोऽम्बा च सञ्जयाधिष्ठितं रथमारुह्य देवस्य समीपमुपगतौ ।

दुर्योधनः—किं नाम तातोऽम्बा च संप्राप्तौ । कष्टमतिबीभत्समाचरितं दैवेन । सूत, गच्छ त्वं स्यन्दनं तूर्णमुपहर । अहमपि तातदर्शनं परिहरन्नेकान्ते तिष्ठामि ।

सूतः—देव, त्वदेकशेषबान्धवावेतौ कथमिव न समाश्वासयसि ।

दुर्योधनः—सूत, कथमिव समाश्वासयामि विमुखभागधेयः । पश्य ।

---

अनुमिनोमि, नूनं = निश्चयम् , 'नूनं तर्केऽर्थनिश्चय' इत्यमरः । परिजनोपनीतः = स्वजनानीतः ।

सज्जीकुरु = असज्जं सज्जं सन्नद्धं कुरु, 'कृभ्वस्तियोग' इति च्विप्रत्ययः । 'अस्य च्वावि' तीत्वम् ।

तातः = धृतराष्ट्रः, अम्बा = गान्धारी ।

अतिबीभत्सम् = अत्यनुचितम् , दैवेन = भाग्येन । यदि पितरावागच्छेतां तदा समरगमने विघ्नं स्यादित्यभिप्रायः ।

त्वदेकशेषबान्धवौ = त्वम् एकः शेषोऽवशिष्टः बान्धवः ययोः तौ, एतौ = मातापितरौ, समाश्वासयिष्यसि = सान्त्वयिष्यसि ।

---

दुर्योधनः—जाओ, सुसज्जित कर लो ।

सूत—अच्छा, जो महाराज की आज्ञा ( यह कहकर चला जाता है और फिर प्रवेश करता है )

दुर्योधन—आरूढ होकर क्यों नहीं आए हो ?

सूत—यह पिताजी माताजी और संजयके साथ रथपर बैठकर महाराजके पास आगये।

दुर्योधन—क्या माता जी और पिता जी आ पहुँचे ? दैव ने घोर कष्ट उपस्थित कर दिया है । सूत ! तुम जाओ, शीघ्र ही रथ लाओ । मैं भी पिता जी और माता जी का दर्शन न करके एकान्त स्थान में जाकर रहता हूँ ( रहूँगा ) ।

सूत—महाराज ! इन दोनों के परिवार में अब एक आप ही शेष रह गए हैं आप क्यों नहीं धैर्य बँधाते ।

दुर्योधन—सूत ! किस प्रकार धैर्य बँधाऊँ । मेरा विधाता ही विपरीत है देखिए:—

अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा
घ्रातस्ताभ्यां शिरसि विनतोऽहं च दुःशासनश्च ।
तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां
पार्श्वं पित्रोरपगतघृणः किन्नु वक्ष्यामि गत्वा ॥ १५ ॥

तथाप्यवश्यं वन्दनीयौ गुरू । ( इति निष्क्रान्तौ )

इति चतुर्थोऽङ्कः ।



अन्वय —आवाम् , अद्यैव, तातम् , अम्बाम् , च, दृष्ट्वा, रणम् , उपगतौ, ताभ्याम् , विनतः, अहम् , च, दुःशासनः, च, शिरसि घ्रातः, अरिणा, ताम् , अवस्थाम् , तस्मिन् , बाले, प्रसभम् , प्रापिते, ( सति ) पित्रोः, पार्श्वम् , गत्वा, अपगतघृणः किन्नु, वक्ष्यामि ॥ १५ ॥

अद्यैवावामिति । आवां=दुर्योधनदुःशासनौ, अद्यैव, तातं=पितरम्, अम्बां=गान्धारीम् , च दृष्ट्वा रणं=संग्रामम् , उपगतौ=प्राप्तौ, ताभ्याम्=मातापितृभ्याम् , विनतः=नम्रः, अहं, दुःशासनश्च शिरसि=मस्तकावच्छेदेन, अवच्छेदे सप्तमी । घ्रातः अरिणा=भीमेन तां=हृद्विदारणपूर्वकमरणरूपाम् , अवस्थां=दशाम् , तस्मिन्=दुःशासने, बाले, प्रसभ=बलात् प्रापिते, सति, पित्रोः=मातापित्रोः पार्श्वं=समीपम् , गत्वा अपगतघृणः=निर्लज्जः, सन् किं नु वक्ष्यामि=दुःशासनविनाशेन एकोऽह गतः किं कथयिष्यामीत्यर्थः । मन्दाक्रान्ता छन्दः ॥ १५ ॥

इति प्रबोधिनीव्याख्यायां चतुर्थोऽङ्कः ।



आज ही हम दोनों [ दुर्योधन और दुश्शासन ] माता और पिता का दर्शन करके युद्ध में गये थे । और उन लोगों के द्वारा प्रणत होते हुए समय मेरा और दुश्शासन का शिर सूँघा गया था । हठात् शत्रु ने उस बालक को [ दुश्शासन को ] उस दशा में पहुँचा दिया [ वध कर डाला ] फिर निर्लज्ज होकर माता पिता के समीप जाकर क्या कहूँगा अर्थात् बच्चे का वध करवा कर कौन सा मुख लेकर उनके समीप जाऊँ ॥ १५ ॥

तो भी गुरुजनों को प्रणाम अवश्य करना चाहिए ।

( यह कह कर चले जाते हैं )

चतुर्थ अङ्क समाप्त ॥



## अथ पञ्चमोऽङ्कः।

( ततः प्रविशति रथयानेन गान्धारी संजयो धृतराष्ट्रश्च । )

धृतराष्ट्रः—वत्स संजय, कथय कथय कस्मिन्नुद्देशे कुरुकुलकाननैकशेषप्रवालो वत्सो मे दुर्योधनस्तिष्ठति । कच्चिज्जीवति वा न वा ।

गान्धारी—जाद, जइ सच्चं जीवदि मे वच्छो ता कधेहि कस्सि देसे वट्टदि । ( जात, यदि सत्यं जीवति मे वत्सस्तत्कथय कस्मिन्देशे वर्तते । )

संजयः—नन्वेष महाराज एक एव न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।

गान्धारी— (सकरुणम् ।) जाद, एआइ त्ति भणासि । किं णु क्खु सम्पदं भादुसदं से पास्से भविस्सदि । ( जात, एकाकीति भणसि । किं नु खलु साम्प्रतं भ्रातृशतमस्य पार्श्वे भविष्यति । )

---

करोति दृष्टं तमसां विनाशं ददाति तुष्टश्च समीहितं वत् ।
मदीयविज्ञानसमृद्धिवीजं भजाम्यहं श्रीगुरुपादयुग्मम् ॥ १ ॥

गान्धारी = दुर्योधनस्य माता,

उद्देशे = स्थाने, कुरुकुलकाननैकशेषप्रवालः = कुरुकुलं काननं वनम् इव तस्मिन् एकशेषः एकमात्रावशिष्टः प्रवालः अङ्कुरः सः, वत्सः = पुत्र. 'वत्सः पुत्रादिवर्षयोस्तर्णके नोरसि क्लीब'मिति मेदिनी । कच्चिदिति—कच्चिदितीष्टप्रश्ने प्रयुज्यते । 'कच्चित्कामप्रवेदने' इत्यमरः । इष्टप्रश्नः कामप्रवेदनम् ।

जात इति—जात इति पुत्रस्थानीयस्य पुत्रस्य वा सम्बोधने प्रयुज्यते ।

न्यग्रोधच्छायायां = वटच्छायायाम 'न्यग्रोधो वहुपाद्वटः' इत्यमरः ।

सञ्जयेन यदुक्तम् एक एव तिष्ठतीति तत्र गान्धारी आह—एकाकीति किं भणसि, भ्रातृशतस्य विनाशात् कथं सद्वितीयस्तिष्ठत्विति भावः ।

---

( रथ पर बैठकर सजय के साथ धृतराष्ट्र और गान्धारी का प्रवेश )

धृतराष्ट्र—बेटा सजय ! कहो कहो किस स्थान पर वत्स दुर्योधन, जो कुरुवशरूपी अरण्यानी का एकमात्र विरवा शेष रह गया है, किस स्थान पर है ? जीवित है अथवा नहीं ।

गान्धारी—सुत [ सजय ] ! यदि सत्य ही मेरा वच्चा जीवित है तो बतलाओ, वह किस स्थान में है ?

संजय—यह महाराज [ सामने ] अकेले ही वट की छाया में बैठे हुए हैं ।

गान्धारी—( करुणा के साथ ) पुत्र ! क्या कहते हो 'अकेले ?' क्यों सौ भाई उसके समीप होंगे [ कैसे सम्भव है ] ।

संजयः—तात, अम्ब, अवतरतं स्वैरं रथात् ।

( उभाववतरणं नाटयत । )

( तत. प्रविशति सव्रीडमुपविष्टो दुर्योधन । )

संजय.—( उपसृत्य । ) विजयतां महाराजः । नन्वेष तातोऽम्बया सह प्राप्तः किं न पश्यति महाराजः ।

( दुर्योधनो वैलक्ष्यं नाटयति । )

धृतराष्ट्रः—

शल्यानि व्यपनीय कङ्कवदनैरुन्मोचिते कङ्कटे
बद्धेषु व्रणपट्टकेषु शनकैः कर्णे कृतापाश्रयः ।

---

अवतरतम् = अवतीर्णौ भवतम् युवाम् । स्वैरम् = शनैः ।
सव्रीडं = सलज्जम् ।
वैलक्ष्यं = लज्जाम् ।

अन्वय —कङ्कटे, उन्मोचिते, कङ्कवदनैः, शल्यानि, व्यपनीय, व्रणपट्टकेषु, बद्धेषु, कर्णे, कृतापाश्रयः, निर्जितशात्रवान्, नरपतीन्, लीलया, दूरात्, आलोकयन्, भवान्, पापेन, मया, ( हे ) पुत्रक, ( त्वया ) वेदना, सह्या, इति, न, पृष्टः ॥ १ ॥

शल्यानीति । कङ्कटे = कवचे, उन्मोचिते = शरीरान्निःसारिते कङ्कवदनैः = कङ्कस्य लोहपृष्ठनामकपक्षिविशेषस्य वदनं मुखमिव मुख येषां तैः शल्यनिष्कासकयन्त्रविशेषै., शल्यानि = बाणाग्रस्थफलकानि, व्यपनीय = निःसार्य उद्धृत्येत्यर्थः । व्रणपट्टकेषु = व्रणजन्यपीडानाशकौषधिसंलिप्तवस्त्रेषु, पट्टी इति प्रसिद्धः । शनकैः = स्थिरेण, 'अव्ययसर्वनाम्नामि'त्यव्ययत्वादकच् प्रत्ययः । बद्धेषु, सत्सु । कर्णे = राधा·

---

संजय—पिता जी और माताजी ! रथ से धीरे धीरे उतरिये ।

( दोनों रथ से उतरने का अभिनय करते हैं )

( पुनः लज्जा में पडे हुए दुर्योधन का प्रवेश )

संजय—( समीप जाकर ) महाराज की विजय हो । यह पिता जी माता जी के साथ आए हुए हैं । क्या महाराज नही देख रहे हैं ?

( दुर्योधन लज्जित हो जाता है )

धृतराष्ट्र—

कवच को अङ्गों से हटा देने पर कङ्क [ गीध ] नामक पक्षी के मुख सदृश मुख वाले यन्त्रों से बाणों के गाँसियों को निकाल कर क्षतों ( घाव ) पर सावधानी से पट्टी बाँध

दूरान्निर्जितशात्रवान्नरपतीनालोकयँल्लीलया
सह्या पुत्रक वेदनेति न मया पापेन पृष्टो भवान् ॥ १ ॥

( धृतराष्ट्रो गान्धारी च स्पर्शेनोपेत्यालिङ्गत. । )

गान्धारी—वच्छ, अदिगाढप्पहारवेअणापज्जाउलस्स अम्हेसु सण्णिहिदेसु वि ण प्पसरदि दे वाणी । ( वत्स, अतिगाढप्रहारवेदनापर्याकुलस्यास्मासु संनिहितेष्वपि न प्रसरति ते वाणी ।

धृतराष्ट्र.—वत्स दुर्योधन, किमकृतपूर्वः संप्रति मय्यप्ययमव्याहारः ।

---

सुते, कृतापाश्रयः=कृतः अपाश्रयः आधारः येन सः, अपशब्देन यतो दुष्टाश्रयः कृतः अतस्तवेदृशी दशा सञ्जातेति ध्वनितम् । निर्जितशात्रवान्=विजितशत्रून्, 'शात्रव' इति स्वार्थेऽण् प्रत्ययः । लीलया=तिरस्कारेण, आलोकयन्=पश्यन्, भवान्, अस्य पृष्ट इत्यनेनान्वयः । पापेन=पापवता, सुतशतवधहेतुत्वेन पापवत्त्वम् । मया=धृतराष्ट्रेण, न, पृष्टः, किं न पृष्टः, इत्याह—सह्येति । पुत्रक=हे अनुकम्पित-पुत्र, दुःखित्वादनुकम्पार्ह इति भावः । वेदना=दुःखम्, त्वया सह्या=सहनयोग्या इति । पृष्ट इत्यस्येदं मुख्य कर्म भवच्छब्दश्च गौणकर्म, गौणे कर्मणि दुह्यादेरित्य-भियुक्तोक्त्या गौणकर्मणि प्रत्ययाद् भवच्छब्दात्प्रथमा । सति सहायकादौ तव दुःख-निवृत्तावपि मम पुत्रवधजन्यदुःखस्य सत्त्वान्न मया सह्या किन्तु त्वयैवेति भावः । अत्र यदुक्तं युद्धादित्यादि तत्त्वमित्यन्तं तदयुक्त दुःखनिवृत्तिकारणोपन्यासवैयर्थ्या-पत्तेरिति मैथिलाः । शार्दूलविक्रीडितं छन्दः ॥ १ ॥

अतिगाढप्रहारवेदनापर्याकुलस्य=अतिगाढं भृशं यः प्रहारः तेन या वेदना दुःख तया परि समन्तात् आकुलस्य, ते=दुर्योधनस्य, अस्मासु, सन्निहितेषु=समीपस्थेषु, अपि, वाणी, न, प्रसरति=बहिरागच्छति ।

अव्याहारः=अनुक्तिः, अकथनमित्यर्थः । 'व्याहार उक्तिर्लपितमित्यमरः ।

---

चुकने पर कर्ण पर अवलम्बित होकर अर्थात् कर्ण का आश्रय लेकर शत्रुओं पर विजय प्राप्त करनेवाले राजाओं को प्रेमपूर्ण नेत्रों से देखते हुए तुम 'हे बेटा ! क्या व्यथा सहन करने योग्य है ?' इस प्रकार मुझ पापी से पूछे नहीं गए ॥ १ ॥

(धृतराष्ट्र और गान्धारी टटोलते टटोलते समीप आकर [दुर्योधन का] आलिङ्गन करते हैं।)

**गान्धारी**—अत्यधिक आघात की व्यथा से व्याकुल तुम्हारे मुख से हमलोगों के समीप में रहने पर भी शब्द नहीं निकल रहा है ।

**धृतराष्ट्र**—पुत्र दुर्योधन ! क्या मेरे होते हुए भी यह आज अभूतपूर्व मौन !

गान्धारी—वच्छ जइ तुमं वि अम्हे णालवसि ता किं संपदं वच्छो दुस्सासणो आलवदि अध दुम्मरिसणो वा अण्णो वा । ( इति रोदिति । ) ( वत्स, यदि त्वमप्यस्मान्नालपसि तत्कि साप्रतं वत्सो दुःशासन आलपत्यथ दुर्मर्षणो वान्यो वा । )

दुर्योधनः—

जातोऽहमप्रतिकृतानुजनाशदर्शी
तातस्य बाष्पपयसां तव चाम्ब हेतुः ।
दुर्जातमत्र विमले भरतान्वये वः
किं मां सुतक्षयकरं सुत इत्यवैषि ॥ २ ॥

गान्धारी—जाद, अलं परिदेविदेण । तुमं वि दाव एक्को इमस्स अन्धजुअलस्स मग्गोवदेसओ । ता चिरं जीव । किं मे रज्जेण जएण

---

दुर्मर्षणः=दुःशासनानुजः । तेषामभावेन त्वयैवालपनीया वयमिति भावः ।

अन्वय —अहम् , अप्रतिकृतानुजनाशदर्शी, पापः, ( हे ) अम्ब ! तव, तातस्य, च, बाष्पपयसाम् , हेतुः, ( अस्मि ) अत्र, विमले, अपि, भरतान्वये, दुर्जातम् , वः, सुतक्षयकरम् , माम् , किम् , सुत, इति, अवैषि ॥ २ ॥

जात इति । अहं=दुर्योधनः, अप्रतिकृतानुजनाशदर्शी=अप्रतिकृत प्रतिक्रियारहितम् अनुजनाशं कनिष्ठभ्रातृसंक्षयं द्रष्टुं शीलम् अस्य सः, अत एव पापः=दुराचारी, ( हे ) अम्ब=मातः, तव, तातस्य=पितुः, च बाष्पपयसाम्=अश्रुजलानाम् , हेतुः=कारणम् , अस्मीति शेषः । अत्र=अस्मिन् , विमले=विशुद्धे, अपि भरतान्वये=भरतकुले, दुर्जातं=दुष्टोत्पन्नम् , वः=युष्माकं, सुतक्षयकरं=पुत्रक्षयकारणम् , मां=दुर्योधनम् , किम् , किमिति प्रश्ने । सुतः=पुत्रः, इति, अवैषि=जानासि, त्वमिति शेषः । नाहं पुत्रयोग्य इति भावः । वसन्ततिलका छन्दः ॥ २ ॥

---

**गान्धारी**—बेटा ! यदि तुम भी हम लोगों से भाषण न करोगे तो क्या अब पुत्र दुश्शासन अथवा दुर्मर्षण अथवा और कोई अन्य वार्तालाप करेगा ?

**दुर्योधन—**

मातः ! प्रतिकार न करके भाइयों का नाश देखता हुआ मैं पिता के और आपके अश्रुजलवर्षण का कारण हुआ । इस निष्कलङ्क भरतवंश में आप लोगों का मैं दुष्ट पुत्र हूँ, पुत्रों का नाश करने वाले मुझको क्या आपलोग पुत्र करके मानते हैं ॥ २ ॥

**गान्धारी**—पुत्र ! अब अधिक विलाप करने की आवश्यकता नहीं । तुम्हीं एक ही इन

वा। ( जात, अलं परिदेवितेन। त्वमपि तावदेकोऽस्यान्धयुगलस्य मार्गोपदेशक। तच्चिरं जीव। किं मे राज्येन जयेन वा। )

दुर्योधन—

> मातः! किमप्यसदृशं कृपण वचस्ते
> सुक्षत्रिया क भवती क च दीनतैषा।
> निर्वत्सले! सुतशतस्य विपत्तिमेतां
> त्वं नानुचिन्तयसि रक्षसि मामयोग्यम्॥ ३॥

---

परिदेवितेन = विलापेन, भावे क्त। 'विलापः परिदेवन' मित्यमरः। अन्धयुगलस्य = अन्धद्वयस्य मातापित्रोरित्यर्थः।

अन्वय.—( हे ) मातः, ते, किमपि, असदृशम्, कृपणम्, वचः, सुक्षत्रिया, भवती, क्व, एषा, दीनता, च, क्व, ( हे ) निर्वत्सले, सुतशतस्य, एताम्, विपत्तिम्, त्वम्, न, अनुचिन्तयसि, अयोग्यम्, माम्, रक्षसि॥ ३॥

दुःखेन कातरहृदयां मातरं प्रत्याह—मातः किमपीति।

हे मातः। ते = तव, किमपि = अवाच्यम्, असदृशम् = अयोग्यम्, कृपणं = कातरम्, वचः = पूर्वोक्तं वाक्यम्। अस्तीति शेषः। सुक्षत्रिया = उत्तमक्षत्रियकुलोत्पन्ना, भवती = माता क्व, एषा, दीनता = कातर्यम्, च क्व। उभयमत्यन्त विरुद्धमिति भाव.। निर्वत्सले = वात्सल्यरहिते, हे स्नेहशून्ये इत्यर्थः। निर्वत्सले इत्यत्र वत्सल इति भावप्रधाननिर्देशः, तथाच वत्सलः वात्सल्यम् स निर्गतः यस्याः। एकोनशतपुत्रवधे तत्प्रतीकारार्थमुद्यत मा युद्धान्निरुन्धतो वात्सल्यशून्यत्वं तवेति भाव। एतां = मरणरूपाम्, अनुचिन्तयसि = शोचसि, अयोग्यं = पुत्रधर्मशून्यम्, मां = दुर्योधनम्, रक्षसि। वसन्ततिलका छन्दः॥ ३॥

नूनं विचेष्टितमिदं सुतशोकस्य ।

संजयः—महाराज, किं वाऽयं लोकवादो वितथः 'न घटस्य कूपपतने रज्जुस्तत्रैव प्रक्षेप्तव्या' इति ।

दुर्योधनः—अपुष्कलमिदम् । उपक्रियमाणाभावे किमुपकरणेन । ( इति रोदिति । )

धृतराष्ट्रः—( दुर्योधनं परिष्वज्य । ) वत्स, समाश्वसिहि । समाश्वासय चास्मानिमामतिदीनां मातरं च ।

दुर्योधनः—तात, दुर्लभः समाश्वास इदानीं युष्माकम् । किंतु

कुन्त्या सह युवामद्य मया निहतपुत्रया ।

---

नूनमिति—सुतशोकवशादिदं कथयसि त्वमिति भावः ।

लोकवादः = लौकिकोक्तिः, आभाणकमित्यर्थः । वितथः = असत्यः किम् । आभाणकमेवाह—न घटस्येति । अधिकस्य विनाशे सति विनाशावशिष्टस्यापि विनाशकरणमयुक्तमिति भावः ।

अपुष्कलम् = अपर्याप्तम् , अयुक्तमित्यर्थः । इद = पूर्वोक्ताभाणकम् , उपक्रियमाणाभावे = उपकारविषयस्याभावे, उपकरणेन = साधनेन किम् , व्यर्थमित्यर्थः ।

परिष्वज्य = आलिङ्ग्य ।

अन्वय —अद्य, मया, निहतपुत्रया, कुन्त्या, सह, शोकेऽपि, विराजमानौ, युवाम् तनयान् , अनुशोचतम् ॥ ४ ॥

कुन्त्येति, अद्य, मया = दुर्योधनेन, निहतपुत्रया = निहताः, पुत्राः यस्याः तया, साकाङ्क्षत्वेऽपि शरै. शातितपत्र इतिवत्समासः । कुन्त्या = युधिष्ठिरमात्रा, सह,

---

अवश्य पुत्रशोक का यह कार्य है ।

**संजय**—महाराज ! 'घडे के कुएँ में गिर जाने पर रस्सी वहीं नहीं फेक देना चाहिए' यह लोकोक्ति असत्य है क्या ?

**दुर्योधन**—यह युक्त नहीं । उपयोग में लाने वाला नहीं होगा तो उपयोगी वस्तुओं की क्या उपयोगिता ? ( यह कहकर रोता है )

**धृतराष्ट्र**—( दुर्योधन का आलिङ्गन करके ) पुत्र ! धैर्य धारण करो । हम लोगों को और अपनी असहाय माता को भी धैर्य बधाओ ।

**दुर्योधन**—पिता जी इस समय आपलोगों को धैर्य बधाना टेढी खीर [ कठिन ] है ।

आज मैं कुन्ती के पुत्रों का वध कर डालता हूँ फिर आप दोनों शोक में भी उसके साथ बैठकर अपने मृतक पुत्रों के लिये शोक मनाइये [ अर्थात् अबतक तो उसके कोई पुत्र

दुर्योधन—संजय, अद्याप्युपदेष्टव्यमस्ति।

संजय—देव, यावत्प्राणिति तावदुपदेष्टव्यभूमिविजिगीषुः प्रज्ञावताम्।

दुर्योधन—(सक्रोधम्।) शृणुमस्तावद्भवत एव प्रज्ञावतोऽस्मान्प्रति प्रतिरूपमुपदेशम्।

धृतराष्ट्रः—वत्स युक्तवादिनि संजये किमत्र क्रोधेन। यदि प्रकृतिमापद्यसे तदहमेव भवन्तं ब्रवीमि। श्रूयताम्।

दुर्योधन—कथयतु तातः।

धृतराष्ट्र—वत्स, किं विस्तरेण। संधत्तां भवानिदानीमपि युधिष्ठिरमीप्सितपणबन्धेन।

दुर्योधन—तात, तनयस्नेहवैक्लव्यादम्बा बालिशत्वेन संजयश्च काममेवं ब्रवीतु। युष्माकमप्येवं व्यामोहः। अथ वा प्रभवति पुत्रनाश-

---

प्रज्ञावताम्, उपदेष्टव्यभूमिः, विजिगीषुरित्यन्वयः। प्रज्ञावतामिति तव्य-प्रत्यययोगे 'कृत्यानां कर्तरि वे'ति कर्तरि षष्ठी।

प्रतिरूपं = योग्यम्। अनुरूपमित्यपि क्वचित्पाठः।

सन्धत्तां = सन्धिं कुरुताम्, इदं युधिष्ठिरमित्यनेनान्वेति। ईप्सितपणबन्धेन = अभिलषितमूल्यनिबन्धनेन इन्द्रप्रस्थादिपञ्चग्रामदानेन, अर्धराज्यप्रदानेन वेत्यर्थः।

तनयस्नेहवैक्लव्यात्=पुत्रस्नेहव्याकुलत्वात्, अस्य ब्रवीत्वित्यनेनान्वयः। बालि-

---

दुर्योधन—संजय! क्या अब भी उपदेश देना शेष रह गया है?

संजय—महाराज! विजयाभिलाषी जबतक जीवित है तबतक बुद्धिमानों के उपदेश का पात्र है।

दुर्योधन—अच्छा, आप जैसे ही प्रज्ञाशील व्यक्ति का अपने लोगों के प्रति अनुकूल-उपदेश सुनूँ।

धृतराष्ट्र—संजय का कहना उचित ही होता है। इसमें क्रोध से क्या प्रयोजन? यदि क्रोध छोड़कर शान्त हो जाओ तो मैं ही तुमसे कहता हूं। सुनो?

दुर्योधन—कहिए, पिताजी!

धृतराष्ट्र—पुत्र! विस्तार से क्या प्रयोजन? अब भी तुम युधिष्ठिराभिलषित सन्धि-नियम पर सन्धि कर लो।

दुर्योधन—पिताजी! पुत्रप्रेम की विकलता से माता और मूर्खता के कारण संजय भले इस प्रकार उपदेश दें। आप को भी इस प्रकार का भ्रम! अथवा पुत्रनाश से उत्पन्न होने

जन्मा हृदयज्वरः। अन्यच्च। तात, अस्खलितभ्रातृशतोऽहं यदा तदाऽनवधारितवासुदेवसामोपन्यासः, संप्रति हि दृष्टपितामहाचार्यानुजराजचक्रविपत्तिः स्वशरीरमात्रस्नेहादुदात्तपुरुषव्रीडावहमसुखावसानं च कथमिव करिष्यति दुर्योधनः सह पाण्डवैः सन्धिम्। अन्यच्च। नयवेदिन्संजय,

हीयमानाः किल रिपोर्नृपाः संदधते परान्।
दुःशासने हतेऽहीनाः सानुजाः पाण्डवाः कथम् ॥ ६ ॥

शत्वेन = मूर्खतया 'बालिशस्तु शिशौ मूर्खे' इति मेदिनी। व्यामोहः = वैचित्यम्। अस्खलितभ्रातृशतः = अस्खलितम् अविनष्टं भ्रातृशतं यस्य सः, अवधीरितवासुदेवसामोपन्यासः = अवधीरितः तिरस्कृत. वासुदेवसामोपन्यासः कृष्णकृतशान्तिस्थापनं येन सः, आसमिति क्रियापदशेष.। उदात्तपुरुषव्रीडावह = महापुरुषलज्जाकरम्, 'उदात्तो दातृमहतोर्हृद्ये च स्वरभिधपी'ति हैमः। असुखावसानम् = असुखम् दुःखम् अवसाने अन्ते यस्य तम्।

अन्वयः—रिपोः, हीयमानाः, नृपाः, परान्, संदधते, किल, सानुजाः, (रिपोः) अहीनाः, पाण्डवाः, दुःशासने, हते, कथम्, ( सन्दधते ) ॥ ६ ॥

सम्प्रति सन्धिः सम्भवत्यपि नेत्याह—हीयमाना' किलेति।

रिपोः = शत्रोः, हीयमानाः = क्षीयमाणाः, नृपाः, किल परान् = शत्रून्, सन्दधते = सन्धिं कुर्वते, किल, सानुजाः 'अत एव रिपोः, अहीनाः, पाण्डवाः, दुःशासने, हते, हीन, माम्, कथं सन्दधते ? पाण्डवानां सबलत्वान्मम निर्बलत्वान्नीतिविरुद्धः सन्धिः कथं स्यादिति भावः। अत्र काव्यलिङ्गमलङ्कारः। अनुष्टुप् छन्दः ॥ ६ ॥

वाला हृदयज्वर होता ही है। और भी पिताजी ? जब मैं सौ भाइयों से था उस समय तो वासुदेव [ कृष्ण ] के शान्ति के उपदेश पर मेरा ध्यान नहीं गया, अब इस समय पितामह [ भीष्म ], आचार्य्य [ द्रोण ], कनिष्ठ भ्राता तथा राजन्यमण्डल की विपत्तियों को देखकर अपने केवल शरीर के स्नेह से उदार पुरुषों के लिए लज्जाजनक तथा दु.खान्त सन्धि को पाण्डवों के साथ दुर्योधन किस प्रकार करेगा ? और भी नीतिविशारद संजय !

शत्रु की अपेक्षा न्यूनशक्तिवाले राजा लोग शत्रुओं से सन्धि करते हैं। दुश्शासन के वधोपरान्त पाण्डव अपने भाइयों के साथ हैं उनमें किसी तरह की न्यूनता नहीं है फिर किस प्रकार वे सन्धि कर सकते हैं। [ अर्थात् इस समय मेरे कुटुम्बियों का संहार हो गया है अत. मेरी शक्ति न्यून है पाण्डवों के भाइयों में से किसी का मरण नहीं हुआ है अत. उनकी शक्ति पूरी है फिर युधिष्ठिर मेरी सन्धि को किस प्रकार स्वीकार कर सकते हैं ? ] ॥ ६ ॥

विराजमानौ शोकेऽपि तनयाननुशोचतम् ॥ ४ ॥

गान्धारी—जाद, एदं एव्व सम्पदं प्पभूदं जं तुमं वि दाव एक्को णाणु-सोअइदव्वो । ता जाद, प्पसीद । एसो दे सीसञ्जली । निवट्टीअदु समरव्वावारादो । अपच्छिमं करेहि पिदुणो वअणम् । (जात, एतदेव साम्प्रतं प्रभूतं यत्त्वमपि तावदेको नानुशोचितव्यः । तज्जात, प्रसीद । एष ते शीर्षाञ्जलिः । निवर्त्यतां समरव्यापारात् । अपश्चिमं कुरु पितुर्वचनम् । )

धृतराष्ट्रः—वत्स, शृणु वचनं तवाम्बाया मम च निहताशेषबन्धु-वर्गस्य । पश्य ।

दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ

शोकेऽपि=दुःखे सत्यपि, विराजमानौ=शोभमानौ (सन्तौ) अथवा दुःखेऽपि स्थितौ कुन्त्या अपि पुत्रविनाशादिति भावः । युवाम्=मातापितरौ, तनयान्=पुत्रान्, अनुशोचतं=चिन्तयतम् । यथा कुन्तीपुत्रेण तव पुत्रा हतास्तथैव त्वत्पुत्रेण मया कुन्तीपुत्रा हता भविष्यन्तीति भावः । अत्र सहोक्तिरलङ्कारः । अनुष्टुप् छन्दः॥

एतदेव, प्रभूतं=प्रचुरम्, अत्यन्तमित्यर्थः । साम्प्रतं=युक्तम्, 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । किं युक्तमित्याह—यत्त्वमपीति । शीर्षाञ्जलिः=प्रणामः अनुनय इत्यर्थः । विनय इति यावत् । पितुर्वचनम्, अपश्चिमम्=अनुल्लङ्घ्यम्, कुरु ।

अन्वय—ययोः, बलेन, दायादाः, न, गणिताः, तौ, द्रोणभीष्मौ, हतौ, कर्णस्य, आत्मजम्, (कर्णस्य) अग्रतः, शमयतः, अर्जुनात्, जगत्, भीतम्, मे, वत्सानाम्, निधनेन, रिपुः, अधुना, त्वयि, शेषप्रतिज्ञः, (अतः) वैरिषु, मानम्, मुञ्च, (हे) तात, इमौ, अन्धौ, पितरौ, पालय ॥ ५ ॥

शत्रुपराजयं न कर्तुं शक्नोषि त्वमित्याह—दायादा इति ।

मरे नहीं हैं और आपके बहुत से पुत्र मर चुके हैं इससे वह आप लोगों को देखकर प्रसन्न होती है अब उसके पुत्रों का आज वध करके आप लोगों के समान ही उसे दुःखी बना देता हूँ फिर आप लोग उसके साथ अपने पुत्रों के लिए शोक कीजिए ] ॥ ४ ॥

गान्धारी—पुत्र, इस समय यही अतुलसम्पत्ति है जो कि तुम्हारे एक के विषय में अनुताप नहीं करना है । अत पुत्र ! प्रसन्न हो । यह तुम्हारे शिर पर मैं हाथ रखती हूँ । [ अर्थात् तुम्हें मेरी सौगन्ध है ] युद्ध से विमुख हो जाओ । पिता के निदेश [ आज्ञा ] की अवहेलना न करो ?

धृतराष्ट्र—बेटा ! मेरी और अपने माता की, जिन के सम्पूर्ण परिवार का सत्यानाश हो गया, बात सुनो देखो —

जिन दो [ भीष्म और द्रोण ] के आधार पर मैंने शत्रुओं को तृण समान भी नहीं

कर्णस्यात्मजमग्रतः शमयतो भीतं जगत्फाल्गुनात् ।
वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना
मानं वैरिषु मुञ्च तात पितरावन्धाविमौ पालय ॥ ५ ॥

दुर्योधन —समरात्प्रतिनिवृत्य किं मया कर्तव्यम् ।

गान्धारी—जाद, जं पिदा दे विउरो वा भणदि । ( जात, यत्पिता ते विदुरो वा भणति । )

संजयः—देव, एवमिदम् ।

---

ययोः=द्रोणभीष्मयोः, बलेन=शक्त्या, दायादाः=बान्धवाः, युधिष्ठिरादयः 'दायादौ सुतबान्धवौ' इत्यमरः । न, गणिता', तिरस्कृता इत्यर्थः । तौ, द्रोणभीष्मौ, हतौ । तथा च तव युद्धावतरणं न युक्तं सहायकाभावादित्याशयः । कर्णबलेन जयः स्यादित्यपि न सम्भवतीत्याह—कर्णस्येति । आत्मजं=पुत्रम्, वृषसेनम्, अग्रतः, कर्णस्येत्यस्यात्राप्यन्वय. । तथा च कर्णस्याग्र एव, शमयतः=विनाशयत', फाल्गुनात्=अर्जुनात्, जगत्, भीत=त्रस्तम्, येन कर्णेन स्वपुत्ररक्षणमपि नाकारि तस्य साहाय्येन जयासम्भव इति भावः, मे=मम, वत्सानाम्=एकोनशतसंख्याक-पुत्राणाम्, निधनेन=मारणेन, रिपुः=भीमः, अधुना, त्वयि, शेषप्रतिज्ञः अस्तीति शेष. । भीमस्य प्रतिज्ञाऽसीद्यद् धृतराष्ट्रस्य पुत्रशत हनिष्यामीति तत्रान्येषां पुत्राणां वधेन त्वमेव प्रतिज्ञाविषयोऽवशिष्टोऽसि तादृशफाल्गुनसाहाय्येन भीमस्य प्रतिज्ञा-पूर्तौ न कोऽपि सशयः, तथा च तव सङ्ग्रामावतरणं न युक्तमिति भाव. । ( अतः ) वैरिषु, मानम्=अहङ्कारम्, मुञ्च=त्यज, ( हे ) तात, इमौ अन्धौ=नेत्रविहीनौ, पितरौ पालय । यद्यपि मातुः गान्धार्या नेत्रे आस्तां तथापि पत्युरान्ध्येन गान्धार्यापि पातिव्रत्यरक्षणार्थं नेत्रे वस्त्रेण आच्छन्ने अकारिषताम्, अत उच्यते–पितरावन्धाविति । शार्दूलविक्रीडितं छन्द. ॥ ५ ॥

प्रतिनिवृत्य=परावृत्य सङ्ग्रामं त्यक्त्वेत्यर्थः ।

---

समक्ष वे द्रोणाचार्य और भीष्म मार डाल गए । सब लोगों के नेत्र के सामने कर्णपुत्र-वृषसेन की हत्या करते हुए अर्जुन से संसार कम्पित हो गया मेरे पुत्रों के संहार से यह शत्रु केवल तुम्हारे लिये अवशिष्ट-प्रतिज्ञ है [ अर्थात् शत्रु ने अपनी सम्पूर्ण प्रतिज्ञायें पूर्ण कर लीं । केवल तुम्हारे विषय में की गई प्रतिज्ञा अवशिष्ट है ] शत्रुविषयक अभिमान का परित्याग करो और अपने इन नेत्रविहीन माता-पिता का पालन करो ॥ ५ ॥

**दुर्योधन**—युद्ध से विमुख होकर मुझे क्या करना होगा ?

**गान्धारी**—जो तुम्हारे पिता और विदुर कहें ।

**संजय**—महाराज ! ऐसा करना चाहिए ।

दुर्योधन—संजय, अद्याप्युपदेष्टव्यमस्ति।

संजय—देव, यावत्प्राणिति तावदुपदेष्टव्यभूमिर्विजिगीषुः प्रज्ञावताम्।

दुर्योधन—(सक्रोधम्।) शृणुमस्तावद्भवत एव प्रज्ञावतोऽस्मान्प्रति प्रतिरूपमुपदेशम्।

धृतराष्ट्रः—वत्स युक्तवादिनि संजये किमत्र क्रोधेन। यदि प्रकृतिमापद्यसे तदहमेव भवन्तं ब्रवीमि। श्रूयताम्।

दुर्योधन—कथयतु तातः।

धृतराष्ट्र—वत्स, किं विस्तरेण। संधत्तां भवानिदानीमपि युधिष्ठिरमीप्सितपणबन्धेन।

दुर्योधन—तात, तनयस्नेहवैक्लव्यादम्बा बालिशत्वेन संजयश्च काममेवं ब्रवीतु। युष्माकमप्येवं व्यामोहः। अथ वा प्रभवति पुत्रनाश-

---

प्रज्ञावताम्, उपदेष्टव्यभूमिः, विजिगीषुरित्यन्वयः। प्रज्ञावतामिति तव्यप्रत्यययोगे 'कृत्यानां कर्तरि वे'ति कर्तरि षष्ठी।

प्रतिरूपं=योग्यम्। अनुरूपमित्यपि क्वचित्पाठः।

संधत्तां=सन्धिं कुरुताम्, इदं युधिष्ठिरमित्यनेनान्वेति। ईप्सितपणबन्धेन=अभिलषितमूल्यनिबन्धनेन इन्द्रप्रस्थादिपञ्चग्रामदानेन, अर्धराज्यप्रदानेन वेत्यर्थः।

तनयस्नेहवैक्लव्यात्=पुत्रस्नेहव्याकुलत्वात्, अस्य ब्रवीत्वित्यनेनान्वयः। बालि-

---

दुर्योधन—संजय! क्या अब भी उपदेश देना शेष रह गया है?

संजय—महाराज! विजयाभिलाषी जबतक जीवित है तबतक बुद्धिमानों के उपदेश का पात्र है।

दुर्योधन—अच्छा, आप जैसे ही प्रज्ञाशील व्यक्ति का अपने लोगों के प्रति अनुकूल-उपदेश सुनूँ।

धृतराष्ट्र—संजय का कहना उचित ही होता है। इसमें क्रोध से क्या प्रयोजन? यदि क्रोध छोड़कर शान्त हो जाओ तो मैं ही तुमसे कहता हूँ। सुनो?

दुर्योधन—कहिए, पिताजी!

धृतराष्ट्र—पुत्र! विस्तार से क्या प्रयोजन? अब भी तुम युधिष्ठिराभिलषित सन्धि-नियम पर सन्धि कर लो।

दुर्योधन—पिताजी! पुत्रप्रेम की विकलता से माता और मूर्खता के कारण संजय भले इस प्रकार उपदेश दें। आप को भी इस प्रकार का भ्रम! अथवा पुत्रनाश से उत्पन्न होने

जन्मा हृदयज्वरः । अन्यच्च । तात, अस्खलितभ्रातृशतोऽहं यदा तदाऽनवधारितवासुदेवसामोपन्यासः, संप्रति हि दृष्टपितामहाचार्यानुजराजचक्रविपत्तिः स्वशरीरमात्रस्नेहादुदात्तपुरुषव्रीडावहमसुखावसानं च कथमिव करिष्यति दुर्योधनः सह पाण्डवैः सन्धिम् । अन्यच्च । नयवेदिन्संजय,

हीयमानाः किल रिपोर्नृपाः संदधते परान् ।
दुःशासने हतेऽहीनाः सानुजाः पाण्डवाः कथम् ॥ ६ ॥

शत्वेन = मूर्खतया 'बालिशस्तु शिशौ मूर्खे' इति मेदिनी । व्यामोहः = वैचित्यम् । अस्खलितभ्रातृशतः = अस्खलितम् अविनष्टं भ्रातृशतं यस्य सः, अवधीरितवासुदेवसामोपन्यासः = अवधीरितः तिरस्कृतः वासुदेवसामोपन्यासः कृष्णकृतशान्तिस्थापनं येन सः, आसमिति क्रियापदशेष. । उदात्तपुरुषव्रीडावह = महापुरुषलज्जाकरम्, 'उदात्तो दातृमहतोर्हृद्ये च स्वरभिद्यपी'ति हैमः । असुखावसानम् = असुखम् दुःखम् अवसाने अन्ते यस्य तम् ।

अन्वयः—रिपोः, हीयमानाः, नृपाः, परान्, संदधते, किल, सानुजाः, (रिपोः) अहीनाः, पाण्डवाः, दुःशासने, हते, कथम्, ( सन्दधते ) ॥ ६ ॥

सम्प्रति सन्धिः सम्भवत्यपि नेत्याह—हीयमानाः किलेति ।

रिपोः = शत्रोः, हीयमानाः = क्षीयमाणाः, नृपाः, किल परान् = शत्रून्, सन्दधते = सन्धिं कुर्वते, किल, सानुजाः 'अत एव रिपोः, अहीनाः, पाण्डवाः, दुःशासने, हते, हीन, माम्, कथ सन्दधते ? पाण्डवानां सबलत्वान्मम निर्बलत्वान्नीतिविरुद्धः सन्धि. कथं स्यादिति भावः । अत्र काव्यलिङ्गमलङ्कारः । अनुष्टुप् छन्दः ॥ ६ ॥

वाला हृदयज्वर होता ही है । और भी पिताजी ? जब मैं सौ भाइयों से था उस समय तो वासुदेव [ कृष्ण ] के शान्ति के उपदेश पर मेरा ध्यान नहीं गया, अब इस समय पितामह [ भीष्म ], आचार्य्य [ द्रोण ], कनिष्ठ भ्राता तथा राजन्यमण्डल की विपत्तियों को देखकर अपने केवल शरीर के स्नेह से उदार पुरुषों के लिए लज्जाजनक तथा दुःखान्त सन्धि को पाण्डवों के साथ दुर्योधन किस प्रकार करेगा ? और भी नीतिविशारद सजय !

शत्रु की अपेक्षा न्यूनशक्तिवाले राजा लोग शत्रुओं से सन्धि करते हैं । दुश्शासन के वधोपरान्त पाण्डव अपने भाइयों के साथ हैं उनमें किसी तरह की न्यूनता नहीं है फिर किस प्रकार वे सन्धि कर सकते हैं । [ अर्थात् इस समय मेरे कुटुम्बियों का संहार हो गया है अत मेरी शक्ति न्यून है पाण्डवों के भाइयों में से किसी का मरण नहीं हुआ है अतः उनकी शक्ति पूरी है फिर युधिष्ठिर मेरी सन्धि को किस प्रकार स्वीकार कर सकते हैं ? ] ॥ ६ ॥

धृतराष्ट्र—वत्स, एवं गतेऽपि मत्प्रार्थनया न किंचिन्न करोति युधिष्ठिरः। अन्यच्च सर्वमेवापकृतं नानुमन्यते।

दुर्योधनः—कथमिव।

धृतराष्ट्र—वत्स, श्रूयतां प्रतिज्ञा युधिष्ठिरस्य। नाहमेकस्यापि भ्रातुर्विपत्तौ प्राणान् धारयामीति। बहुच्छलछ्वात्सङ्ग्रामस्यानुजनाशमाशङ्कमानो यदैव भवते रोचते तदैवासौ सज्जः संधातुम्।

संजय—एवमिदम्।

गान्धारी—जाद उपपत्तिजुत्तं पडिवज्जस्स पिदुणो वअणम्। (जात, उपपत्तियुक्तं प्रतिपद्यस्व पितुर्वचनम्।)

दुर्योधन—तात, अम्ब, संजय,

एकेनापि विनाऽनुजेन मरणं पार्थः प्रतिज्ञातवा-

न किञ्चिन्नेति—नद्वयेन करणस्य निश्चयः सूच्यते। अपकृतम्=अपकारम्।

विपत्तौ=मरणे, सज्जः=सन्नद्धः, सन्धातुं=सन्धि कर्तुम्।

उपपत्तियुक्त=युक्तिसहितम्, पितुः, वचनम् प्रतिपद्यस्व=जानीहीत्यन्वयः।

अन्वय—पार्थः, एकेन, अपि, अनुजेन, विना, मरणम्, प्रतिज्ञातवान्, दुर्योधनः, भ्रातृणाम्, शते (अपि) निहते, जीवितुम्, विषहते, दुःशासनशोणिताशनम्, अरिम्, गदाकोटिना, भिन्नम्, तम्, भीमम्, दिक्षु, न, विक्षिपामि, कृपणः, अहम्, सन्धिम्, विदध्याम् ॥ ७ ॥

एव स्थिते न मया सन्धिः कार्य इत्याह—एकेनापीति।

धृतराष्ट्र—इस प्रकार की अवस्था में प्राप्त होने पर भी मेरी प्रार्थना से युधिष्ठिर कुछ नहीं करेंगे ऐसा नहीं किन्तु अवश्य मेरी बात मानेंगे। दूसरी बात यह है कि युधिष्ठिर किए अपकारों पर ध्यान नहीं देते।

दुर्योधन—किस प्रकार से?

धृतराष्ट्र—पुत्र युधिष्ठिर की प्रतिज्ञा सुनो—'मैं एक भी भ्राता के ऊपर संकट पड़ने पर जीवित नहीं रह सकूँगा, युद्ध में छल और कपटों की बहुलता रहती है अतः भ्राताओं के नाश की आशङ्का से यह युधिष्ठिर जभी तुम्हें अच्छा लगे तभी सन्धि के लिये उद्यत है।

संजय—है तो ऐसा ही।

गान्धारी—पुत्र! युक्तियुक्त पिता की वचन को स्वीकार कर लो।

दुर्योधन—पिता, माता और संजय!

एक भी कनिष्ठ भ्राता की मृत्यु हुए विना ही युधिष्ठिर ने मरण की प्रतिज्ञा की है

भ्रातॄणां निहते शते विषहते दुर्योधनो जीवितुम् ।
तं दुःशासनशोणिताशनमरिं भिन्नं गदाकोटिना
भीमं दिक्षु न विक्षिपामि कृपणः संधिं विदध्यामहम् ॥ ७ ॥

गान्धारी—हा जाद दुस्सासण, हा मदङ्कदुल्ललिद, हा जुअराअ अस्सुदपुव्वा क्खु कस्स वि लोए ईदिसी विपत्ती । हा वीरसदप्पसविणी हंद गन्धारी, दुक्खसदं प्पसूदा ण उण सुदसदम् । ( हा जात दुःशासन, हा युवराज, अश्रुतपूर्वा खलु कस्यापि लोक ईदृशी विपत्तिः । हा वीरशतप्रसविनि हन्त गान्धारि, दुःखशतं प्रसूतासि न पुनः सुतशतम् ।

( सर्वे रुदन्ति । )

संजयः—( बाष्पमुत्सृज्य । ) तात, अम्ब, प्रतिबोधयितुं महाराजमिमां

---

पार्थः=पृथापुत्रो युधिष्ठिरः, एकेन, अपि, अनुजेन=भ्रात्रा, विना, एकस्य भ्रातुर्मरण इत्यर्थः । मरणम्=स्वमृत्युम्, प्रतिज्ञातवान् । युधिष्ठिरस्यैवं प्रतिज्ञाऽऽसीद् यदेकस्यापि भ्रातुर्मरणेऽहं न प्राणान् धारयिष्यामीति । दुर्योधनः, भ्रातॄणाम्, शते, ( अपि ) निहते, जीवितुम्, विषहते=शक्नोति समर्थोऽस्तीत्यर्थः । अनुचितमिदमिति भावः । दुःशासनशोणिताशनम्=दुःशासनरुधिरपायिनम्, अरिम्, गदाकोटिना=गदाग्रेण, भिन्नम्=विदीर्णम्, तम्=आततायिनम्, भीमम्, दिक्षु=दिशासु, न, विक्षिपामि, किन्तु विक्षिपाम्येव । कृपणः=कदर्यः, ( सन् ), अहम्, सन्धिम्, विदध्याम्=कुर्याम्, न कुर्यामिति भावः । भीमविनाश एव श्रेयान् न पुनः सन्धिरिति भावः । अत्र यमक शब्दालङ्कारः । शार्दूलविक्रीडितं छन्दः ॥ ७ ॥

ईदृशी=जीवत इव दुःशासनस्य वक्षसो रुधिरपानरूपा ।

महाराजं=दुर्योधनम्, प्रतिबोधयितुम्=आश्वासयितुम्, इमाम् भूमिं=युद्ध-

---

और सौ भ्राताओं के मृत्यु के मुख में चले जाने पर भी दुर्योधन जीवित रहना चाहता है । दुश्शासन के रक्त पीने वाले उस शत्रु भीम को दिग्पालों के लिए [ यदि ] मैं बलि नहीं बनाता [ तो फिर ] बेचारा बनकर सन्धि करूँगा [ अर्थात भीम के वध से मेरा मनोरथ सिद्ध होगा नकि सन्धि करने से ] ॥ ७ ॥

गान्धारी—हाय बेटा दुश्शासन, हाय मेरी गोदी के लाल, हाय युवराज ! ससार में इस प्रकार की विपत्ति किसी भी व्यक्ति पर आज तक नहीं सुनी गई । हाय सौ वीरों को जन्माने वाली गान्धारी तुम्हें धिक्कार है । तूने सौ तरह की विपत्तियों को उत्पन्न किया नकि सौ पुत्रों को । ( सब रोते हैं )

संजय—( आँसू पोछता हुआ । ) पिता जी और माता जी ! आप लोग महाराज को

भूयिं युवामागतौ । तदात्माऽपि तावत्संस्तभ्यताम् ।

धृतराष्ट्रः—वत्स दुर्योधन, एवं विमुखेषु भागधेयेषु त्वयि चामुञ्चति सहजं मानबन्धमरिषु त्वदेकशेषजीवितालम्बनेयं तपस्विनी गान्धारी कम-वलम्बतां शरणमहं च ।

दुर्योधन.—श्रूयतां यत्प्रतिपत्तुमिदानीं प्राप्तकालम् ।

कलितभुवना भुक्तैश्वर्यास्तिरस्कृतविद्विषः-
प्रणतशिरसां राज्ञां चूडासहस्रकृतार्चनाः ।

---

श्वासम् . युवां = गान्धारीधृतराष्ट्रौ आगतौ । संस्तभ्यतां = स्थिरीक्रियताम् अवल-म्ब्यताम्, प्रतिबोध्यमानस्याग्रे स्वयमेव यदि धैर्य्यच्युतः स्यात्तदा प्रतिबोध्यमानो जनोऽतीव विह्वलः स्यादतः साम्प्रत युवयोर्विलापो न युक्त इति भावः ।

विमुखेषु=विपरीतेषु प्रतिकूलेष्वित्यर्थः । भागधेयेषु = भाग्येषु ( सत्सु ) अरिषु= शत्रुषु, मानबन्धम् = अहङ्कारग्रन्थिम्, अमुञ्चति, च त्वयि, त्वदेकशेषजीवितावल-म्बना = त्वम् कः शेषः अवशिष्टः जीवितावलम्बनम् प्राणाधारः यस्याः सा । शरणम् = रक्षितारम् 'शरणं गृहरक्षित्रोः' इत्यमर. ।

अन्वय.—कलितभुवनाः, भुक्तैश्वर्य्याः, तिरस्कृतविद्विषः, प्रणतशिरसाम्, राज्ञाम्, चूडासहस्रकृतार्चनाः, अरीन्, अभिमुखम्, घ्नन्तः, सङ्ख्ये, शतम्, आत्मजाः, हताः, अम्बया, सहितः, तातः, सगरेण, ऊढाम्, धुरम्, वहतु ॥ ८ ॥

धैर्य्यमेव शरणमित्याह—कलितभुवनाइति । कलितभुवनाः=आयत्तीकृतं भुवन लोकः यैः ते, भुक्तैश्वर्य्याः = प्राप्तैश्वर्य्यभोगाः, तिरस्कृतविद्विष = अवमानित-शत्रवः, प्रणतशिरसाम् = नतमस्तकानाम्, राज्ञाम्, चूडासहस्रकृतार्चनाः=चूडा-

---

आश्वासित करने के लिए यहा पर आये हैं अत पहले अपने को तो आश्वासन दीजिए ।

धृतराष्ट्र—पुत्र दुर्य्योधन ! इस प्रकार से विधाता के वाम होने पर और तुम्हारे शत्रु-विषयक स्वाभाविक अभिमान के परित्याग न करने पर तपस्विनी गान्धारी, जिसके लिए केवल तुम्हीं एक जीवनाधार बच गए हो, किसका आधार ले और मैं भी किसकी शरण में जाऊँ ?

दुर्योधन—सुनिये जो करने का समय उपस्थित है:—

[ आप के ] शतसख्याकपुत्र, जिन्होंने भूमण्डल का शासन किया है; सम्पत्तियों का उपभोग कर लिया है और शत्रुओं को तृण समान भी नहीं समझा है, नतमस्तक राजाओं के सहस्रों मस्तकों से पूजित होते हुए और सम्मुख आए हुए शत्रुओं का सहार करते हुए

अभिमुखमरीन्संख्ये घ्नन्तो हताः शतमात्मजा
वहतु सगरेणोढां तातो धुरं सहितोऽम्बया ॥ ८ ॥

विपर्यये त्वस्याधिपतेरुल्लङ्घितः क्षात्रधर्मः स्यात् ।

( नेपथ्ये महान्कलकल । )

गान्धारी—( आकर्ण्य । सभयम् । ) जाद, कहिं एदं हाहाकारमिस्सं तूररसिदं सुणीअदि । ( जात, कुत्रैतत् हाहाकारमिश्रं तूर्यरसितं श्रूयते । )]

संजय—अम्ब, भूमिरियमेवंविधानां भीरुजनत्रासजननी महानिनादानाम् ।

---

सहस्रैः शिखासहस्रैः कृतम् अर्चन येपाम् ते, अरीन् = शत्रून्, अभिमुखम् = सम्मुखम्, घ्नन्तः = हिंसन्तः, सङ्ख्ये = रणे, शतम् आत्मजा. = पुत्राः, हताः, अत एतादृशकृतकृत्यपुत्रमरणे न धैर्य्यत्यागः कार्य इति भावः । तत्र दृष्टान्तमुद्रया धैर्य्येण राज्यभारग्रहणं कार्यमित्याह—वहतु सगरेणेति । अम्बया, सहितः, तातः = पिता, सगरेण = सगरनामकसूर्यवंशीयनृपेण, ऊढाम्, धुरम् = भारम्, वहतु । यथा सगरनामकनृपः कपिलक्रोधेन षष्टिसहस्रपुत्राणां विनाशेऽपि धैर्य्यमालम्ब्य चिर राज्यं चकार तथैव तातो राज्य करोत्विति भाव । अत्र निदर्शनालङ्कारः । हरिणी छन्दः ॥८॥

रसितम् = शब्दः ।

एवंविधानाम् = हाहाकारादिमिश्राणाम्, महानिनादानाम्, भीरुजनत्रास-

---

युद्ध में समाप्त हो गए हे । [ अव ] पिता जी [ आप ] माता जी के साथ सगर के द्वारा वहन किए हुए भार को वहन करें अर्थात् जिसप्रकार पृथ्वीमण्डल का शासन करते हुए, विविध प्रकार के ऐश्वर्यों का उपभोग करते हुए, शत्रुओं को पराजित करते हुये और राजन्यवर्ग से पूजित होते हुए सगर के साठ हजार पुत्र कपिल की शापज्वालारूपी युद्ध में विदग्ध होकर समाप्त हो गये । उपरान्त राजा सगर ने ही पृथ्वी के शासन का भार उठाया था वही भार अव उठावें आपके पुत्रों में और सगर के पुत्रों में कोई भेद नहीं, वल और पुरुषार्थ में कोई भी किसी से न्यून नहीं हैं वस न्यूनता यही है कि सगर के साठ हजार पुत्र थे आप के सौ ही पुत्र हैं ॥ ८ ॥

इसके विपरीत करने से राजा के क्षत्रियधर्म की मर्यादा नहीं रह जायगी ।

**गान्धारी**—( सुनकर भयभीत होती हुई ) पुत्र ! यह हाहाकार [ त्राहि त्राहि की पुकार के साथ रणभेरी का नाद कहा से सुनाई पढ रहा है ।

**संजय**—माताजी, यह तो भीरुलोगोंको भय उत्पन्न करने वाले इस प्रकार के भीषण निर्घोषों का स्थान ही है ।

धृतराष्ट्र'—वत्स संजय, ज्ञायतामतिभैरवः खलु विस्तारी हाहारवः। कारणेनास्य महता भवितव्यम्।

दुर्योधन'—तात प्रसीद। पराङ्मुखं खलु दैवमस्माकम्। यावदपरमपि किञ्चिदत्याहितं न श्रावयति तावदेवाज्ञापय मां सङ्ग्रामावतरणाय।

गान्धारी—जाद, मुहुत्तअं दाव मं मन्दभाइणीं समस्सासिहि। (जात, मुहूर्तकं तावन्मां मन्दभाग्यां समाश्वासय।)

धृतराष्ट्र'—वत्स, यद्यपि भवान्समराय कृतनिश्चयस्तथापि रहः परघातोपायश्चिन्त्यताम्।

दुर्योधनः—

प्रत्यक्षं हतबान्धवा मम परे हन्तुं न योग्या रहः

---

जननी=भीतजनोद्वेगोत्पादिका, इयम्, भूमिरित्यन्वयः। क्वचित्तु अभूमिरियमेवं विधानां भीरुजनानामिति पाठः। तत्र अभूमिः=अस्थानम्।

कारणेनेति-महत्कारणमस्य भवेदित्यर्थः। भवितव्यमिति भावे तव्यप्रत्ययः।

पराङ्मुखम्=विपरीतम् अनिष्टकारकमित्यर्थः। अत्याहितम्=महाभीतिः अनर्थमित्यर्थः। 'अत्याहित महाभीति'रित्यमरः।

रहः प्रतिघातोपाय.=एकान्ते विनाशोपायः छद्मना हन्यतामित्यर्थः।

अन्वय—मम, प्रत्यक्षम्, हतबान्धवाः, परे, रहः, हन्तुम्, योग्याः, न, इह, रणे, यत्, कृतम्, (कर्म) तैः, प्रकाश्यम्, न (भवति) तेन, कृतेन, किं वा, (हे) मातः, अहम्, भवतीसुतक्षयकरः, एकः, अरयः, कियन्तः, केवलम्, दैवम्, साम्यम्, एतु, अधुना, मेदिनी, निष्पाण्डवा, (भविष्यति)॥ ९॥

वीरजनयोग्योऽयं विचारो नेत्याह—प्रत्यक्षमिति।

---

धृतराष्ट्र—बेटा सजय! अत्यन्त प्रचण्ड तथा शीघ्रता से बढ़ते चले आते हुए हाहाकार का पता लगाओ। इसमें कोई प्रधान कारण अवश्य होगा।

दुर्योधन—पिताजी, क्षमा कीजिए। विधाता हम लोगों के विपरीत अवश्य है। जबतक और कोई दूसरी विपत्ति नहीं श्रुतिगोचर होती तबतक ही मुझे युद्ध में उतरने के लिए आज्ञा प्रदान कीजिए।

गान्धारी—क्षण मात्र तो मुझ अभागिनी को आश्वासित करो?

धृतराष्ट्र—पुत्र! यद्यपि तुमने युद्ध के लिए विचार दृढ़ कर लिया है तथापि गुप्त रूप से शत्रुविनाश का उपाय सोचते रहो।

दुर्योधन—मेरे कुटुम्ब का वध प्रत्यक्ष रूप से किया गया है अतः अप्रत्यक्ष रूप से

किं वा तेन कृतेन तैरिह कृतं यन्न प्रकाश्यं रणे ।

गान्धारी—जाद, एआइ तुमम् । को दे सहाअत्तणं करिस्सदि ।
( जात, एकाकी त्वम् । कस्ते साहाय्यं करिष्यति । )

दुर्योधन·—

एकोऽहं भवतीसुतक्षयकरो मातः कियन्तोऽरयः
साम्यं केवलमेतु दैवमधुना निष्पाण्डवा मेदिनी ॥ ९ ॥

( नेपथ्ये । कलकलानन्तरम् । )

भो भो योधा·, निवेदयन्तु भवन्त· कौरवेश्वराय, इदं महत्कदनं

मम, प्रत्यक्षम्—समक्षम्, हतवान्धवा =हता वान्धवा यैः ते, परे=शत्रवः, रहः=विविक्ते, हन्तुम्, योग्याः, न, प्रत्यक्षमपकारकर्तुः प्रत्यक्षमेवापकारः कर्तव्य इति नीतिः । इह=जगति, रणे, यत्, कृतम्, ( कर्म ) तै·=शत्रुभिः, प्रकाश्यम= ज्ञाप्यम् ख्यापनीयम् न, भवतीति शेषः । तेन, कृतेन, कर्मणा, किं वा, न किमपी-त्यर्थ· । तदेव कर्म करणीयं यच्छत्रुभिरपि प्रशसनीय भवेदिति भावः । तत्र वचनमध्य एव गान्धारी आह—जातेति । सहायकाभावादेवं न करणीयमिति भावः । पुनर्दुर्यो-धनस्तत्राह—एकोऽहमिति । ( हे ) मात· । अहम्, भवतीसुतक्षयकर·, पुत्रविनाशे हेतुत्वादिति भाव· । अत एव एकः=असहायः तथा च असहायोऽहं किमपि कर्तुं न शक्नोमि तथापि भाग्यमेव सहायक स्यादित्युच्यते-साम्यमिति । जगतीत्रयक्षयकर इति पाठस्तु भ्रान्तिमतः, साम्यं केवलमित्यादेरसङ्गत्वापत्तेः, नहि लोकत्रयक्षये समर्थ· दैवमपेक्षेत स्वयमेव तस्य वलवत्त्वादिति वयम् । अरयः=शत्रवः, कियन्तः, केवलम्, दैवम्=भाग्यम्, साम्यम्=समताम्, एतु=प्राप्नोतु, अधुना, मेदिनी= पृथ्वी, निष्पाण्डवा=पाण्डवरहिता, भविष्यतीति शेषः । मत्कर्तृकपाण्डवहननादिति भावः । शार्दूलविक्रीडितं छन्दः ॥ ९ ॥

कदनम्=भीषणम्, भयावहमित्यर्थः । 'कदनं भीषणे पापे' इति विश्वः । अभि-

शत्रुओं का वध करने के लिए मेरा रथ समर्थ नहीं है । उनकी भाँति [ शत्रुओं की भाँति ] सङ्ग्राम में प्रत्यक्षरूप से जो कार्य नहीं किया तो उस कार्य के करने से क्या प्रयोजन ? ।

**गान्धारी**—पुत्र ! तुम निस्सहाय हो कौन तुम्हारी सहायता करेगा ?

**दुर्योधन**—माताजी ! आपके पुत्रों का विनाश कराने वाला मैं एक हूँ विपक्षी [ शत्रु ] कितने हैं । [ अर्थात् अधिक हैं ] इस समय केवल विधाता दोनों के समान हो जाँय तो बस, वसुन्धरा को पाण्डवों से शून्य समझना चाहिए ॥ ९ ॥

( नेपथ्य में कलकलध्वनि के पश्चात् )

अरे अरे शूरवीरों ! आपलोग कौरवनरेश से निवेदन कर दीजिए कि यह महान् अनर्थ

प्रवृत्तम् । अलमप्रियश्रवणपराङ्मुखतया । यतः कालानुरूपं प्रतिविधातव्यमिदानीम् । तथा हि ।

त्यक्तप्राजनरश्मिरङ्कितततनुः पार्थाङ्कितैर्मार्गणै-
 र्वाहैः स्यन्दनवर्त्मनां परिचयादाकृष्यमाणः शनैः ।
वार्तामङ्गपतेर्विलोचनजलैरावेदयन्पृच्छतां
 शून्येनैव रथेन याति शिविरं शल्यः कुरूञ्छल्ययन् ॥ १० ॥

---

प्रियश्रवणपराङ्मुखतया—कर्णवधश्रवणविमुखतया, अलम् = व्यर्थम् ।

अन्वय —पार्थाङ्कितैः, मार्गणैः, अङ्कितततनुः, त्यक्तप्राजनरश्मिः, स्यन्दनवर्त्मनाम्, परिचयात्, वाहैः, शनैः आकृष्यमाणः, अङ्गपतेः, वार्ताम्, पृच्छताम्, (जनानाम्) विलोचनजलैः, आवेदयन्, कुरून्, शल्ययन्, शून्येन, एव, रथेन, शल्यः, शिबिरम्; याति ॥ १० ॥

अस्पष्टोक्त्या कर्णवधमाह—त्यक्तप्राजनेति ।

पार्थाङ्कितैः = अर्जुननामचिह्नितैः, मार्गणैः = 'शरैः, कलम्बमार्गणशराः, इत्यमरः । अङ्कितततनुः = चिह्नितशरीरः, बहुभि. क्रियमाणे युद्धे कस्येमे शरा इति संशयनिवारणार्थं योद्धा स्वशरे स्वनामाङ्कन करोतीति युद्धरीति । त्यक्तप्राजनरश्मिः = त्यक्तौ प्राजनरश्मी वृषभप्रेरकदण्डप्रग्रहौ येन स., तथापि स्यन्दनवर्त्मनाम्=रथमार्गाणाम्, परिचयात्, वाहैः = अश्वैः, शनैः, आकृष्यमाणः = नीयमानः, यद्यपि शल्योऽश्वान्न सञ्चालयति तथापि अश्व. येन मार्गेण गच्छति सस्कारवशात्तेनैव मार्गेणाप्रेर्यमाणोऽप्यागच्छति । स्वभावात्तेनैव मार्गेणागच्छन्तीत्याशय. । अङ्गपतेः = कर्णस्य, वार्ताम् = वृत्तान्तम्, पृच्छताम्, (जनानाम्) विलोचनजलैः = अश्रुभि, आवेदयन्=ज्ञापयन् कर्णो मृत इत्यश्रुभिरेव कथयन्निति भावः । कुरून् = दुर्योधनादीन्, शल्ययन् = शङ्कुजन्यदुःखमिव दुःखं प्रापयन्, शून्येन = कर्णरहितेन, एव, रथेन, शल्यः = साम्प्रतिक. कर्णसारथिः, शिविरम् = सैन्यनिवासस्थानम्, याति । अत्र यमकमलङ्कारः । शार्दूलविक्रीडित छन्दः ॥ १० ॥

---

हो गया । अहित सम्वादों के सुनने में उपेक्षा करने की आवश्यकता नहीं क्योंकि समयानुसार अब उपाय तो करना ही होगा । क्योंकि —

शल्यने [ घोडे के ] कोडे और रास [ लगाम ] को छोड दिया है । अर्जुन-नामाङ्कित शरों से उसका धनुष चिह्नित हो गया है । वह घोड़ों के द्वारा रथके मार्गों का परिचय होने के कारण धीरे धीरे खींचा जा रहा है । वह समाचार को बतलाता हुआ तथा कौरवों के हृदय में काँटे चुभोता हुआ अकेला ही रथ पर बैठकर सेनाशिविर को जारहा है ॥ १० ॥

दुर्योधनः—( श्रुत्वा । साशङ्कम् । ) आः, केनेदमविस्पष्टमशनिपातदारुणमुद्घोषितम् । कः कोऽत्र भोः ।

( प्रविश्य संभ्रान्त । )

सूत —हा, हताः स्मः । ( इत्यात्मानं पातयति । )

दुर्योधनः—अयि, कथय ।

धृतराष्ट्रसंजयौ—कथ्यतां कथ्यताम् ।

सूतः—आयुष्मन् , किमन्यत् ।

शल्येन यथा शल्येन मूर्च्छितः प्रविशता जनौघोऽयम् ।
शून्य कर्णस्य रथं मनोरथमिवाधिरूढेन ॥ ११ ॥

---

अशनिपातदारुणम् = वज्रनिपातवद्भयावहम् , 'दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे' इति विश्वः : उद्घोषितम् = शब्दितम् ।

अन्वय — शल्येन, प्रविशता, यथा, जनौघः, मूर्च्छितः ( भवति ) ( तथा ) मनोरथम् इव, शून्यम् , कर्णस्य, रथम् , अधिरूढेन, शल्येन, अयम् , जनौघः, मूर्च्छित , ( अस्ति ) ॥ ११ ॥

शल्येनेति । शल्येन = शङ्कुनामकास्त्रविशेषेण 'बर्छी' इति ख्यातेन, प्रविशता । जनौघोऽयमित्यादिः । यथा, जनौघ मूर्च्छितः, भवतीति शेषः । तथा मनोरथम् , इव, शून्यम् , कर्णस्य रथम् , अधिरूढेन = आरूढेन, शल्येन = शल्यनामकनृपेण सारथीभूतेन, अयम् , जनौघः = मदीयसैन्यम् , मूर्च्छितः, अस्तीतिशेषः । यमकं पूर्णोपमा चालङ्कारः । आर्या छन्दः ॥ ११ ॥

---

दुर्योधन—( सुनकर शङ्का के साथ ) अरे ! यह वज्रपात सदृश दुस्सह उद्घोष अव्यक्त रूपसे किसने किया है ? कौन है , कोई यहाँ पर है ?

( प्रवेश करके व्याकुलाहट के साथ )

सूत—हाय ! हम लोग मर गए !' ( यह कह कर अपने को गिरा देता है )

दुर्योधन—अरे ! कहो ? कहो ?

धृतराष्ट्र और संजय—कहो ? कहो ?

सूत—चिरञ्जीविन् ! दूसरा क्या • ?

जिस प्रकार प्रविष्ट होने वाले वाणों के नोक से जनसमूह मूर्च्छित हो जाता है उसी प्रकार मनोरथ की भाँति शून्य कर्ण के रथ पर बैठकर प्रवेश करते हुए शल्य ने जनसमूह को मूर्च्छित कर दिया है अर्थात शल्य को अकेला कर्ण के रथ पर बैठ क र आते हुए देखकर लोग कर्ण के मृत्यु की शङ्का करके व्याकुल हो रहे हैं ॥ ११ ॥

दुर्योधनः—हा वयस्य कर्ण ( इति मोहमुपगतः । )

गान्धारी—जाद, समस्सस समस्सस । (जात, समाश्वसिहि । समाश्वसिहि ।)

संजयः—समाश्वसितु देवः ।

धृतराष्ट्रः—भोः कष्टं कष्टम् ।

भीष्मे द्रोणे च निहते य आसीदवलम्बनम् ।
वत्सस्य च सुहृच्छूरो राधेयः सोऽप्ययं गतः ॥ १२ ॥

वत्स, समाश्वसिहि समाश्वसिहि । ननु भो हतविधे,

अन्धोऽनुभूतशतपुत्रविपत्तिदुःखः
शोच्यां दशामुपगतः सह भार्ययाऽहम् ।

---

अन्वय.—भीष्मे, द्रोणे, च, निहते, यः, वत्सस्य, सुहृत्, शूरः, च, अवलम्बनम्, आसीत्, सः, राधेयः, अप्ययम्, गतः ॥ १२ ॥

भीष्म इति । भीष्मे, द्रोणे, च, निहते, एतादृशवीरयोर्निपातेऽपि आसीदाशा यत् कर्णो विजेता स्यात्सोऽपि नास्तीत्याह—य आसीदिति । यः, वत्सस्य = पुत्रस्य, सुहृत् शूरः, च राधेयः = कर्णः, अवलम्बनम् = आश्रयः आसीत्, सः = कर्णः, अप्ययम् = विनाशम्, गतः । अनुष्टुप् छन्दः ॥ १२ ॥

हतविधे = दुर्दैव, 'विधिर्विधाने दैवेऽपि, इत्यमरः ।

अन्वय —अनुभूतशतपुत्रविपत्तिदुःखः, अन्धः, अहम्, भार्यया, सह, शोच्याम्, दशाम्, उपगतः, अशोपितसुहृद्गुरुबन्धुवर्गः, अस्मिन्, दुर्योधने, अपि, भवता, हि, निराशः, कृतः ॥ १३ ॥

अन्धोऽनुभूतेति । अनुभूतशतपुत्रविपत्तिदुःखः = अनुभूत शतपुत्राणां विपत्तिदुःखं विनाशजन्यशोको येन सः, भार्यया = स्त्रिया गान्धार्या, सह, अन्धः अहम्, शोच्याम् = शोचनीयाम्, दशाम् उपगतः = प्राप्तः । तथापि तव सन्तोषो न जातो

---

दुर्योधन—हाय ! मित्र कर्ण !! ( ऐसा कहकर मूर्च्छित हो जाता है )

गान्धारी—बेटा ! धैर्य धारण करो, धैर्य धारण करो ।

संजय—महाराज ! धैर्य रखिए, धैर्य रखिए ।

धृतराष्ट्र—विपत्ति ! विपत्ति !!

भीष्म और द्रोण के मारे जाने के पश्चात् मेरे पुत्र का परममित्र, वीरकर्ण जो सहायक था वह भी अब समाप्त हो गया ॥ १२ ॥

पुत्र ! धैर्य धारण करो ; धैर्य धारण करो । अरे क्रूर विधाता !

तुमने मुझ अन्धे को, जो सौ पुत्रों के नाश से दुःखित है तथा धर्मपत्नी के साथ

अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे
दुर्योधनेऽपि हि कृतो भवता निराशः ॥ १३ ॥

वत्स दुर्योधन, समाश्वसिहि । समाश्वासय तपस्विनीं मातरं च ।

दुर्योधनः—( लब्धसंज्ञः । )

अयि कर्ण कर्णसुखदां प्रयच्छ मे
गिरमुद्गिरन्निव मुदं मयि स्थिराम् ।
सतताऽवियुक्तमकृताऽप्रियं प्रियं
वृषसेनवत्सल ! विहाय यासि माम् ॥ १४ ॥

हे हतविधे इत्याह—अस्मिन्निति । अशेषितसुहृद्गुरुबन्धुवर्गे = अशेषितः अनवशिष्टः सुहृद्गुरुबन्धूनां वर्गः समुदायः यस्य तस्मिन् सर्वेषां विनाशादिति भावः । अस्मिन्, दुर्योधनेऽपि, भवता = हतविधिना, हि = निश्चयेन निराशः = आशारहितः अनाश्रयः, कृतः । अत्र काव्यलिङ्गमलङ्कारः । वसन्ततिलका छन्दः ॥ १३ ॥

लब्धसंज्ञः = प्राप्तचैतन्य विगतमूर्च्छ इत्यर्थः ।

अन्वय —अयि, कर्ण, मयि, स्थिराम्, मुदम्, उद्गिरन्, इव, कर्णसुखदाम्, गिरम् मे प्रयच्छ, ( हे ) प्रिय, वृषसेवत्सल, सततावियुक्तम्, अकृताप्रियम्, माम्, विहाय, यासि ॥ १४ ॥

अयि, कर्ण मे = मह्यम्, गिरम् = वाणीम्, प्रयच्छ = देहि, कीदृशीं गिरमित्याह—कर्णसुखदाम् = श्रवणप्रीतिजनिकाम्, क इव, मयि = दुर्योधने, स्थिराम्, मुदम् = प्रीतिम्, उद्गिरन् = उद्वमन्, हे, प्रिय = मित्र, सततावियुक्तम् = सततम् अवियुक्तम् सर्वदा, एकत्र स्थितम् । एतेन मम त्यागस्तवानुचित इति ध्वनितम् । एकत्र स्थितावपि कृतानिष्टोऽहमित्यपि नेत्याह—अकृताप्रियमिति । अकृताप्रियम् = असम्पादितानिष्टम्, तथाचै तादृशमित्रस्य परित्यागे स्वयमेव सम्बोधनद्वारा बीजमाह—वृषसेनवत्सलेति । यतस्त्वं वृषसेने स्निग्धः वृषसेनस्तु स्वर्गतोऽतस्त्वमपि तत्रैव

दयनीय दशा को प्राप्त हुआ है, मित्र, गुरु, और कुटुम्बियों के वर्ग के समाप्त हो जाने पर [ अवशिष्ट ] इस दुर्योधन के विषय में हताश कर दिया है ॥ १३ ॥

बेटा दुर्योधन ! धैर्य रक्खो, और तपस्विनी माता को धैर्य प्रदान करो !

**दुर्योधन**—( चेतना को प्राप्त होकर )

अयि कर्ण ! चिरस्थायी आनन्द की वर्षा करते हुए मुझे श्रुतिमधुर उत्तर दो । सर्वदा मुझ से भिन्न न रहने वाले तथा अहित न करने वाले ऐ वृषसेनप्रिय ! मेरा परित्याग कर क्यों जारहे हो ? अर्थात् सर्वदा मेरे साथ रहकर मधुर-भाषण करते हुए मेरे उपकार में लीन रहा करते थे अब पुत्र के स्नेह के कारण मुझे छोडकर क्यों जा रहे हो ? ॥ १४ ॥

( पुनर्मोहमुपगत. । सर्वे समाश्वासयन्ति । )

दुर्योधन.—

मम प्राणाधिके तस्मिन्नङ्गानामधिपे हते ।
उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात ! का कथा ? ॥ १५ ॥

अपि च ।

शोचामि शोच्यमपि शत्रुहतं न वत्सं
दुःशासन तमधुना न च बन्धुवर्गम् ।

---

गच्छसीति भावः। माम् = एतादृश दुर्योधनम् विहाय = त्यक्त्वा, यासि। अत्र प्रथमे यमक द्वितीये उपमा चतुर्थे पदार्थगतकाव्यलिङ्गमलङ्कारः। मञ्जुभाषिणी छन्दः॥

अन्वय —मम, प्राणाधिके, तस्मिन्, अङ्गानाम्, अधिपे हते ( सति ) अहम्, उच्छ्वसन्, अपि, लज्जे, ( हे ) तात, आश्वासे, का कथा ॥ १५ ॥

कर्णाभावेऽहं जीवामीत्यपि महदाश्चर्यमित्याह—ममेति।

मम, प्राणाधिके = प्राणेभ्योऽपि श्रेष्ठे, तस्मिन्, अङ्गानाम् = अङ्गदेशानाम्, 'अङ्गं गात्रे प्रतीकोपाययो. पुम्भूम्नि नीवृति, इति मेदिनी। नीवृत् देशः तदुक्तममरे· 'नीवृज्जनपदो देशः।' अधिपे, हते ( सति ) अहम्, उच्छ्वसन् = श्वास गृह्णन्, अपि, लज्जे ( तथा च ) हे तात आश्वासे = धैर्यधारणे, का, कथा = चर्चा, आश्वासस्तु नैव सम्भवतीत्याशयः। अनुष्टुप् छन्दः ॥ १५ ॥

अन्वय —शोच्यम्, अपि शत्रुहतम्, वत्सम्, दुःशासनम्, न शोचामि, अधुना नच, तम्, बन्धुवर्गम्, ( शोचामि ) येन, कर्णे, अतिःदुश्रवम्, असाधु, कृतम्, तस्य, कुलस्य, निधनम्, समरे, कर्ता, अस्मि, ॥ १६ ॥

कर्णघातिन' कुल विनाशयिष्यामीत्याह—शोचामीति।

शोच्यम् = अवश्यशोचनीयम्, अपि, अनुजत्वादवश्यशोचनीयत्वात्। शत्रुहतम्, वत्सम् = अनुजम्, दु.शासनम्, न, शोचामि, अधुना, नच, बन्धुवर्गम्,

---

( यह कहकर फिर चेतनारहित हो जाता है और सब लोग धैर्य प्रदान करते हैं )

दुर्योधन—मेरे प्राणों से बढकर उस अङ्गनरेश [ कर्ण ] के मर जाने पर जीवित रहने म भी मुझे लज्जा मालूम पड़ती है धैर्य की वात तो दूर रही ॥ १५ ॥

और भी —

इस समय न तो शोक करने के योग्य, शत्रु के द्वारा मारे गए, प्रिय दुश्शासन का शोक और न अपने बन्धु तथा गुरुवर्गों का शोक करता हूँ किन्तु जिसने कर्ण के विषय में

येनातिदुःश्रवमसाधु कृतं तु कर्णे
कर्ताऽस्मि तस्य निधन समरे कुलस्य ॥ १६ ॥

गान्धारी—जाद, सिढिलेहि दाव क्खणमेत्तं बाप्पमोक्खम् ।
( जात, शिथिलय तावत्क्षणमात्रं वाष्पमोक्षम् । )

धृतराष्ट्र—वत्स, क्षणमात्रं परिमार्जयाश्रूणि ।

दुर्योधन.—

मामुद्दिश्य त्यजन्प्राणान् केनचिन्न निवारितः ।
तत्कृते त्यजतो बाष्पं किं मे दीनस्य वार्यते ॥ १७ ॥

सूत, केनैतदसंभावनीयमस्मत्कुलान्तकरं कर्म कृतं स्यात ।

---

शोचामि, इत्यनेनान्वय· । येन कर्त्रा, कर्णे, अतिदु·श्रवम् = अश्रवणार्हम्, असाधु= अनुचितम् हननमित्यर्थः । कृतम्, तस्य, कुलस्य = वंशस्य, निधनं = हननम् विनाशमित्यर्थः । समरे, कर्ता, कृधातोस्तृन् प्रत्ययः अतो 'न लोकाव्यये'ति षष्ठीनिषेधाद् द्वितीया । अस्मि, पाण्डवद्वयमन्तरा किमपि न करिष्यामीति भावः । वसन्ततिलका छन्दः ॥ १६ ॥

अन्वय —माम्, उद्दिश्य, प्राणान्, त्यजन्, ( यः, ) केनचित्, न, निवारितः, तत्कृते, वाष्पम्, त्यजतः, दीनस्य, मे, किम्, वार्यते ॥ १७ ॥

मामिति । माम् = दुर्योधनम्, उद्दिश्य = अभिलक्ष्यीकृत्य, प्राणान्, त्यजन्, य इति शेष· । केनचित्, न, निवारितः, तत्कृते = तस्य कर्णस्यार्थम्, वाष्पम् = अश्रु, त्यजत, दीनस्य = दुर्गतस्य, मे = मम किम् = कथम्, वार्यते त्वयेतिशेषः । अनुष्टुप छन्दः ॥ १७ ॥

असम्भावनीयम् = कर्णवधरूपम्, अस्मत्कुलान्तकरम् = कौरववंशविनाशकम्,

---

अनहित आचरण, जो कानों के लिए अत्यन्त दु खद है, किया है सङ्ग्राम में उसके कुल का विनाश करनेवाला हूँ अर्थात् कर्ण के वध करनेवाले के कुल में किसी को जीवित न छोड़ूँगा ॥ १६ ॥

गान्धारी—पुत्र ! क्षण मात्र के लिये अश्रुपात को अवकाश दे दो ।

धृतराष्ट्र—पुत्र ! क्षण मात्र के लिए आँसुओं को पोंछ लो ।

दुर्योधन—मेरे लिये प्राणोत्सर्ग करते हुए [ कर्ण को ] किसी ने निषेध नहीं किया । उसके लिए [ कर्ण के लिए ] अश्रुपात करते हुए मुझ बेचारे को क्यों निवारण किया जाता है ? ॥ १७ ॥

ऐ सूत ! मेरे कुल की समाप्ति करने वाला यह कार्य, जिसकी कभी सम्भावना नहीं की जाती थी, किसने किया होगा ?

सूत.—आयुष्मन्, एवं किल जनः कथयति ।

भूमौ निमग्नचक्रश्चक्रायुधसारथेः शरैस्तस्य ।
निहतः किलेन्द्रसूनोरस्मत्सेनाकृतान्तस्य

दुर्योधनः—

कर्णाननेन्दुस्मरणात्क्षुभितः शोकसागरः ।
वाडवेनेव शिखिना पीयते क्रोधजेन मे ॥ १६ ॥

तात, अम्ब प्रसीदतम् ।

---

यदि कर्णो हतस्तदा तद्वियोगस्यासह्यत्वादहमपि न जीवितुं शक्नोमि अथवा कर्णहन्तारं हन्तु महासङ्ग्रामप्रवृत्तत्वान्ममापि प्राणसंशय इति भावः ।

अन्वय —चक्रायुधसारथेः, अस्मत्सेनाकृतान्तस्य, तस्य, इन्द्रसूनोः, शरैः, भूमौ, निमग्नचक्र ( कर्णः ) निहतः, किल, ॥ १८ ॥

अर्जुनः कर्ण हतवानित्याह—भूमाविति । चक्रायुधसारथेः=चक्रम् आयुधम् यस्य स सारथि यस्य, अस्मत्सेनाकृतान्तस्य=अस्मत्सैन्यस्य कृतान्त. यमराज. तस्य, तस्य=प्रसिद्धस्य, इन्द्रसूनोः=अर्जुनस्य, शरैः, भूमौ, निमग्नचक्रः=निमग्नं चक्रं रथाङ्ग यस्य सः 'चक्र' कोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः, इति मेदिनी । कर्णः, इति शेष. । निहतः, किल । अर्जुनस्तस्य हन्तेति भावः । कर्णस्याभिशाप आसीद् यदासन्नमरणे तव रथाङ्ग भूमौ निमग्न स्यादिति भूमौ चक्र निमग्नम् । आर्या छन्द. ॥

अन्वय —कर्णाननेन्दुस्मरणात्, क्षुभितः, शोकसागरः, वाडवेन, इव मे, क्रोधजेन, शिखिना, पीयते ॥ १९ ॥

कर्णेति । कर्णाननेन्दुस्मरणात्=कर्णमुखचन्द्रस्मृतेः, क्षुभितः=उद्वेल्लितः, शोकसागरः इव, मे=मम, क्रोधजेन, वाडवेन=वडवानलेन इव शिखिना=अग्निना, पीयते=शोष्यते, अत्रोपमालङ्कारः । अनुष्टुप् छन्दः ॥ १९ ॥

---

सूत—महाराज ! लोग तो इस प्रकार कहते हैं—

भूमि के भीतर रथ के चाके [ पहिया ] के धँस जाने पर मेरी सेना के लिये अन्तक [ यम ] इन्द्रपुत्र अर्जुन के, जिनके सारथी चक्ररूपशस्त्रधारी भगवान् वासुदेव हैं, वाणों से मारा गया ॥ १८ ॥

दुर्योधन—कर्ण के मुखचन्द्र का स्मरण करके शोकसमुद्र विक्षुभित हो उठा है । मेरे क्रोध से उत्पन्न ज्वाला वाडवाग्नि की भाँति पान कर रही है ॥ १९ ॥

पिताजी और माता जी ! आप लोग क्षमा करें ।

ज्वलनः शोकजन्मा मामयं दहति दुःसहः ।
समानायां विपत्तौ मे वरं संशयितो रणः ॥ २० ॥

धृतराष्ट्रः—( दुर्योधनं परिष्वज्य रुदन् । )

भवति तनय लक्ष्मीः साहसेष्वीदृशेषु
द्रवति हृदयमेतद्भीमगुत्प्रेक्ष्य भीमम् ।

---

अन्वय·—दुःसहः, शोकजन्मा, अयम्, ज्वलन·, माम्, दहति, ( एवं ) समानायाम्, विपत्तौ, मे, संशयितः, रणः, वरम् ॥ २० ॥

ज्वलन इति । दुःसहः, शोकजन्मा = शोकाजन्म यस्य सः, अयम्, ज्वलनः = अग्निः, माम्, दहति = भस्मीकरोति, ( एवं सति ) समानायाम् = तुल्यायाम्, यद्दि सङ्ग्राममपि न करिष्यामि तदापि दाहान्मम मृत्युः स्यादेवातः सङ्ग्रामकरणाकरणयोस्तुल्यत्वम् । विपत्तौ, मे, संशयितः = प्राणसंशयस्थानम्, रणः = समरः, वरम् = श्रेष्ठः । रणगमनं युक्तमस्माकं कदाचिज्जयोऽपि स्यादितिभावः । अनुष्टुप् छन्दः ॥२०॥

अन्वय —(हे) तनय, ईदृशेषु, साहसेषु, लक्ष्मी· भवति, ( परम् ) भीमम्, भीमम्, उत्प्रेक्ष्य, एतत्, हृदयम्, द्रवति, (हे) मानशौण्ड, ते, चेष्टितम्, अनिकृतिनिपुणम्, अरीणाम्, सङ्गरम्, छलबहुलम्, ( अतः ) हा, हतः, अस्मि ॥ २१ ॥

त्वं निश्छलः पाण्डवश्छलीति कथ तव विजय· स्यादित्याह—भवतीति । तनय= हे पुत्र ! ईदृशेषु = सहायकाभावेऽपि युद्धगमनरूपेषु, साहसेषु, लक्ष्मीः, भवति । सत्यं संशयः साहसेष्विति पाठे साहसेषु = युद्धगमनरूपेषु सत्यम्, संशयः = जयाजयविषयकसन्देहः, भवति, पूर्वपाठे परमित्यध्याहारः । उत्तरपाठे संशये हेतुमाह—द्रवतीति । भीमम् भीषणम् भीमम्=भीमसेनम्, उत्प्रेक्ष्य=विज्ञाय, एतत्, हृदयम्, द्रवति = भयाच्छिथिलीभवति, हे मानशौण्ड = मानमत्त 'शौण्डो मत्ते च विख्याते' इति विश्वः । ते = तव, चेष्टितम् = व्यापारः, अनिकृतिनिपुणम् =

---

शोक से उत्पन्न असह्य यह शोकाग्नि मुझे भस्म कर रहा है यदि दोनों प्रकार की विपत्तियाँ [ युद्ध में मृत्यु पाना, शोकाग्नि में भस्म होना ] एक ही प्रकार की हैं तो संशयग्रस्त युद्ध श्रेयस्कर होगा । अर्थात् शोक की ज्वाला से जलना ही पड़ेगा । युद्ध में तो मृत्यु निश्चित नहीं है कदाचित् मैं विजयी बन जाऊँ तो मृत्यु से बच जाऊँगा ऐसी अवस्था में शोक की ज्वाला में जलने की अपेक्षा युद्ध में जाना मेरे लिये अच्छा होगा ॥२०॥

धृतराष्ट्र—दुर्योधन का आलिङ्गन करके रोते हैं ।

पुत्र ! इस प्रकार के उत्साह से लक्ष्मी की प्राप्ति [ अवश्य ] होती है ; [ परन्तु ] इस भयङ्कर भीम को देखकर मेरा हृदय विदीर्ण हो रहा है । ऐ मानियों में अग्रगण्य ! तुम्हारा

अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड
छलबहुलमरीणां सङ्गरं हा हतोऽस्मि ॥ २१ ॥

गान्धारी—जाद, तेण एव्व सुदसदकदन्तेण विओदलेण समं समरं मग्गसि । ( जात, तेनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गयसे । )

दुर्योधनः—तिष्ठतु तावद् वृकोदरः ।

पापेन येन हृदयस्य मनोरथो मे
सर्वाङ्गचन्दनरसो नयनामलेन्दुः ।
पुत्रस्तवाम्ब तव तात नयैकशिष्यः

---

निकृतौ क्षेपे निपुणम् निकृतिनिपुणम् न निकृतिनिपुणम् अनिकृतिनिपुणम् क्षेपाकुशलम्, छलरहितमित्यर्थः । अरीणाम्, सङ्गरम् = सङ्ग्रामम्, छलबहुलम् = बहुस्खलितम्, युद्धमर्य्यादारहितमित्यर्थः । 'अथ स्खलित छलमित्यमरः । ( अतः ) हा = दुःखम् 'हा विषादे च शोके च कुत्साद्दुःखार्थयोरपि' इति मेदिनी । हतः, अस्मि, पाण्डवचुकं द्रोणभीष्मयोश्छलेन हतत्वात् छलबहुलम् । अतस्तव जयोऽसम्भव इति युद्धगमन न वरमितिभावः । मालिनी छन्दः ॥ २१ ॥

वृकोदरेण = भीमेन, समरम्, मार्गयसे = अन्वेषयसि ।

अन्वयः—येन, पापेन, मे, हृदयस्य, मनोरथः, सर्वाङ्गचन्दनरसः, नयनामलेन्दुः, ( हे ) अम्ब, तव, पुत्रः, ( हे ) तात, तव, नयैकशिष्यः, कर्णः, हतः, तत्र, शराः, सपदि, पतन्तु ॥ २२ ॥

साम्प्रतमर्जुन एव हन्तव्य इत्याह—पापेनेति । येन, पापेन = पापिना, भूमौ निमग्नचक्रस्य कर्णस्य, दयादितिभावः । मे = मम, हृदयस्य, मनोरथः, सर्वाङ्गचन्दनरसः = सर्वशरीरानन्दजनकत्वाच्चन्दनरसतुल्यः, नयनामलेन्दुः = नेत्रानन्दजनकत्वात्स्वच्छचन्द्रतुल्यः, हे अम्ब = मातः, तव, पुत्रः, अतिप्रियत्वात्पुत्रतुल्यः, हे तात, तव

---

चेष्टित (युद्ध) छलछिद्रों से रहित होता है और शत्रुओं का साग्रामिक व्यापार कूटनीतिपूर्ण रहता है । हाय मेरा सर्वनाश हो गया ॥ २१ ॥

गान्धारी—पुत्र ! क्या मेरे सौ कुमारों के लिए यमराज भीमसेन से युद्ध का अवसर खोज रहे हो ।

दुर्योधन—भीम बैठा रहे ।

जिस दुरात्मा ने मेरे मनोऽभिलाप, सम्पूर्ण शरीरके लिए चन्दन पङ्क, और नेत्रों के लिये विशद चन्द्र के सदृश कर्ण को, जो हे माताजी ! तुम्हारा पुत्र और हे पिताजी ! नीति

कर्णो हतः सपदि तत्र शराः पतन्तु ॥ २२ ॥

सूत, अलमिदानीं कालातिपातेन । सज्जं मे रथमुपाहर । भयं चेत्पाण्डवेभ्यस्तिष्ठ । गदामात्रसहाय एव समरभुवमवतरामि ।

सूतः—अलमन्यथा संभावितेन । अयमहमागत एव । (इति निष्क्रान्तः ।)

धृतराष्ट्रः—वत्स दुर्योधन, यदि स्थिर एवास्मान्दग्धुमयं ते व्यवसायस्तत्सन्निहितेषु वीरेषु सेनापतिः कश्चिदभिषिच्यताम् ।

दुर्योधनः—नन्वभिषिक्त एव ।

गान्धारी—जाद, कदरो उण सो जस्सिं आसं ओलम्बिस्सम् । ( जात, कतर पुन स यस्मिन्नाशामवलम्बिष्ये । )

---

नयैकशिष्यः = नये नीतौ एकशिष्यः प्रधानच्छात्रः, कर्णः, हतः, तत्र = अर्जुने, शराः, सपदि = शीघ्रम् , पतन्तु । सम्प्रति भीमसेनं विहायार्जुनमेव हनिष्यामीति भावः । अत्र रूपकमलङ्कारः । वसन्ततिलका छन्दः ॥ २२ ॥

कालातिपातेन=समययापनेन समयस्य व्यर्थविनाशनेनेत्यर्थः । उपाहर=आनय । गदामात्रसहाय. = गदामात्रं सहायः साहाय्यकर्ता यस्य सः ।

अन्यथा = पाण्डवेभ्यः भयं चेदिति, सम्भावितेन = सम्भावनया भावे क्तः । अभिषिच्यताम् = नियुज्यताम् ।

---

शास्त्र में आप का शिष्य था, मारा है शीघ्र ही उसपर वाणवृष्टि हो अर्थात् कर्ण के वध करने वाले पर शीघ्र ही प्रहार करूगा ॥ २२ ॥

सूत ! अब समय व्यतीत करना नहीं चाहिए। मेरा रथ तय्यार कर लाओ। यदि पाण्डुपुत्रों से डर लगती हो तो रहने दो। केवल गदा को सहायक बनाकर युद्धस्थल में जा रहा हू।

**सूत**—प्रतिकूल विचार छोड दीजिए। यह मैं आ ही पहुँचा (यह कहकर चला जाता है)

**धृतराष्ट्र**—पुत्र दुर्योधन ! यह तुम्हारा विचार यदि हमलोगों को सतप्त करने के लिए निश्चय हो चुका हो तो समीपवर्ती योद्धाओंमें से किसी को सेनानायक पद पर अभिषिक्त कर दो [ अर्थात् सेनापति बनालो ]

**दुर्योधन**—अभिषिक्त कर लिया हू।

**गान्धारी**—पुत्र ! वह कौन है जिसपर अपनी आशाको अवलम्बित करूँ अर्थात् जिसके आश्रित रहू ?

धृतराष्ट्र—किं वा शल्य उत वाऽश्वत्थामा ।

संजय—हा कष्टम् ।

गते भीष्मे हते द्रोणे कर्णे च विनिपातिते ।
आशा बलवती राजञ्छल्यो जेष्यति पाण्डवान् ॥ २३ ॥

दुर्योधन—किं वा शल्येनोत वाऽश्वत्थाम्ना ।

कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा ।

---

शल्यः=मद्रपतिः, अश्वत्थामा=द्रोणपुत्रः । उतशब्दो विकल्पे 'आहो उताहो किमुत विकल्पे' इत्यमरः ।

अन्वय—भीष्मे, गते, द्रोणे, हते, कर्णे, च, विनिपातिते । (हे) राजन्, शल्यः, पाण्डवान्, जेष्यति, आशा, बलवती, (भवति) ॥ २३ ॥

एतादृशेषु वीरेषु सेनापतिषु सत्सु यदि विजयो न जातः तदा शल्येन विजयस्याशा व्यर्थेत्याह—गते भीष्म इति । भीष्मे, गते=शरशय्यां प्राप्ते, द्रोणे हते, कर्णे च विनिपातिते=हठाद् व्यापादिते (सति) हे राजन् शल्यः पाण्डवान्, जेष्यति, न जेष्यतीतिभावः । आशा=तृष्णा, बलवती, भवतीति शेषः । केवलमाशैव न तु जयः स्यादितिभावः, अनुष्टुप् छन्दः ॥ २३ ॥

अन्वय—कर्णालिङ्गनदायी, वा, पार्थप्राणहरः, अपि, वा, अयम्, आत्मा अनिवारितसम्पातैः, अश्रुवारिभिः, (अभिषिक्तः) ॥ २४ ॥

स्वयमेवाभिषिक्त इत्याह—कर्णालिङ्गनेति । कर्णालिङ्गनदायी=कर्णालिङ्गनं राधासुतपरिष्वजं दातुं शीलमस्य, स्वर्गतं कर्णं मृत्वा आलिङ्गयिष्यामीत्यर्थः । मृतः स्यामिति यावत् । वा=अथवा, पार्थप्राणहरः=अर्जुनस्य विनाशकः, वा, अयम्=

---

धृतराष्ट्र—शल्य को अथवा अश्वत्थामा को [सेनापति अभिषिक्त किए हो] ?

संजय—हाय ! दुःख !!

भीष्म के संहार होनेपर, द्रोणाचार्य के वध होने पर तथा कर्ण की जीवन-यात्रा समाप्त होने पर शल्य पाण्डवों पर विजयी होगा । महाराज ! [क्या कहें] आशा अतीव प्रबल होती है । अभिप्राय यह है—भीष्म पितामह ऐसे वीर जो संसार अद्वितीय थे । और द्रोणाचार्य के समान भी कोई दूसरा वीर नहीं था । वही दशा कर्ण की भी समझिये । अब ये सब वीर इस संग्राम में तलवार के घाट उतारे गए तो फिर क्या आशा की जाय कि शल्य पाण्डवों को युद्ध में जीतेगा ? केवल आशा बलवती है जो कभी नहीं मरती ॥२३॥

दुर्योधन—शल्य अथवा अश्वत्थामा से क्या प्रयोजन ?

या तो मैं कर्ण का आलिङ्गन करूंगा या अर्जुन के प्राण का हरणकर्ता बनूंगा । निरन्तर

अनिवारितसंपातैरयमात्माऽश्रुवारिभिः ॥ २४ ॥

( नेपथ्ये कलकलं कृत्वा । )

भो भोः कौरवबलप्रधानयोधाः, अलमस्मानवलोक्य भयादितो गन्तुम् । कथयन्तु भवन्तः कस्मिन्नुद्देशे सुयोधनस्तिष्ठतीति ।

( सर्वे ससंभ्रममाकर्णयन्ति । )

( प्रविश्य संभ्रान्त । )

सूत.—आयुष्मन्,

प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।

सर्वे—कश्च कश्च ।

---

मदीयः, आत्मा, अनिवारितसम्पातैः = अनवरुद्धधाराभिः, अश्रुवारिभिः=अश्रु नेत्राम्बु एव वारीणि तैः, अभिषिक्त इति पूर्वोक्तस्यानुकर्षः, तथा च यथाऽभिषेकः जलेन भवति तथैव जलस्थानीयाश्रुभिर्मम सैनापत्येऽभिषेको जात इति भावः। अत्र रूपकम् । अनुष्टुप् छन्दः ॥ २४ ॥

बलम्—सैन्यम्, सुयोधनः = दुर्योधनः ।

अन्वय —इतस्ततः, त्वाम्, पृच्छन्तौ, एकरथारूढौ, प्राप्तौ, सः, कर्णारि स च, वृककर्मा, क्रूर., वृकोदर ॥ २५ ॥

प्राप्ताविति । इतस्ततः = यत्र कुत्र, त्वां पृच्छन्तौ = कस्मिन्नुद्देशे सुयोधनस्तिष्ठतीति त्वद्विषयकप्रश्नं कुर्वन्तौ, एकरथारूढौ-एकरथोपविष्टौ, प्राप्तौ, तौ द्वौ कौ इति

---

धारापात से गिरने वाले अश्रुजलों से स्वय मैंने इस सेनापति का अभिषेक कर लिया है ॥

( नेपथ्य में कोलाहल करते हुए )

अरे अरे ! कौरव सैन्य के प्रधान वीरो, हम लोगों को देखकर भय के कारण इधर उधर पलायन की कोई आवश्यकता नहीं । आप लोग बतलाइए-किस स्थान पर दुर्योधन वर्तमान है ?

( सभी व्याकुल होकर सुनते हैं )

( प्रवेश कर व्याकुलाहट के साथ )

**सूत**—चिरञ्जीविन् !

एक रथ पर बैठ कर महाराज को पूछते हुए पहुँच गए ।

**सब लोग**—कौन, कौन ?

सूतः—

स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः ॥ २५ ॥

गान्धारी—( सभयम् । ) जाद, किं एत्थ पडिपज्जिदव्वं ? ( जात, किमत्र प्रतिपत्तव्यम् ? )

दुर्योधनः—ननु सन्निहितैवेयं गदा ।

गान्धारी—हा हदम्हि मन्दभाइणी । ( हा हतास्मि मन्दभागिनी । )

दुर्योधनः—अम्ब, अलमिदानीं कार्पण्येन । संजय, रथमारोप्य पितरौ शिबिरं प्रातष्ठस्व । समागतोऽस्माकं शोकापनोदी जनः ।

धृतराष्ट्रः—वत्स, क्षणमेकं प्रतीक्षस्व यावदनयोर्भावमुपलभे ।

दुर्योधनः—तात, किमनेनोपलब्धेन ।

( ततः प्रविशतो भीमार्जुनौ । )

---

पृच्छन्ति—कश्च कश्चेति । ततश्च सारथिराह—स कर्णारिरिति । स, कर्णारिः= अर्जुनः, स च, वृककर्मा=वृकः, हुण्डार इति ख्यातः । तद्वत्कर्म हननादिरूपं यस्य सः, ( अत एव ) क्रूरः, वृकोदरः=भीमः । अनुष्टुप् छन्दः ॥ २५ ॥

कार्पण्येन=कदर्यतया । शोकापनोदीति—एतस्य विनाशने मम शोकक्षयः स्यादिति भावः ।

भावम्—अभिप्रायम् । उपलभे=जानामि ।

---

सूत—

वह कर्ण का शत्रु, दुरात्मा हुण्टार के समान कार्य करने वाला भीम ॥ २५ ॥

गान्धारी—( भयभीत होती हुई ) बेटा ! इसका क्या प्रतिकार करना चाहिए ?

दुर्योधन—यह गदा तो समीप में है ही ।

गान्धारी—हाय ! मैं अभागिनी मरी ।

दुर्योधन—इस समय भीरुता की आवश्यकता नहीं । संजय ! माता और पिताजी को रथ पर बैठाकर शिविर में पहुँचा दो । हम लोगों के शोक का अपहरण करने वाला व्यक्ति उपस्थित हो गया ।

धृतराष्ट्र—बेटा ! क्षणभर के लिये प्रतीक्षा करो तब तक मैं इन दोनों के मनोगत भाव को समझता हूँ ।

दुर्योधन—पिता जी ! इसके समझने से क्या लाभ ?

( अनन्तर भीम और अर्जुन का प्रवेश )

भीम—भो भोः सुयोधनानुजीविनः, किमिति सम्भ्रमादयथायथं चरन्ति भवन्तः । कथयत तावदिदमावयोरागमनं स्वामिनस्तस्य कुरुपतेः । अलमावयोः शङ्कया ।

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनमरुत्पाण्डवा यस्य दासाः ।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥२६॥

अन्वयः—द्यूतच्छलानाम्, कर्ता, जतुमयशरणोद्दीपनः, कृष्णाकेशोत्तरीयव्यपनयनमरुत्, अभिमानी, यस्य, पाण्डवाः, दासाः, सः, दुःशासनादेः, अनुजशतस्य, गुरुः, अङ्गराजस्य, मित्रम्, राजा, असौ, दुर्योधनः, क्व, आस्ते, (यूयम्) कथयत, रुषा, द्रष्टुम्, न, अभ्यागतौ, स्वः, ॥ २६ ॥

अन्येषां शङ्काऽभावे कारणमाह—कर्ता द्यूतेति । द्यूतच्छलानां=द्यूतम् अक्षैः क्रीडा तदेव छलानि तेषाम्, कर्ता, जतुमयशरणोद्दीपनः=लाक्षामयगृहप्रज्वालनहेतुः, लाक्षागृहे वसतां पाण्डवानां दाहार्थं तद्गृहं पुरोचनद्वारा दुर्योधनः प्रजज्वाल । अभिमानी=अहङ्कारी, कृष्णाकेशोत्तरीयव्यपनयनमरुत्=द्रौपदीकेशाम्बरपृथक्करणेन मरुत् वायुरिव, यस्य, पाण्डवाः, दासाः सः, दुःशासनादेः, अनुजशतस्य, गुरुः=श्रेष्ठः । एतेन यस्य साहाय्येन बीभत्समाचरितं स तु विनष्ट इति सूचितम् । अङ्गराजस्य=कर्णस्य, मित्रम्, राजा=नृपाभिमानी असौ, दुर्योधनः क्व, आस्ते कथयत, यूयमिति शेषः । अस्य कर्मवाक्यं पूर्वोक्तमास्त क्ष्यन्तम् । रुषा=क्रोधेन, (तम्) द्रष्टुम्, न, अभ्यागतौ=सम्प्राप्तौ स्वः=विद्यावहे अस्-धातोर्लटि वसि, श्नसोरल्लोपः, इत्यकारस्य लोपः । आवामिति शेषः । इह छलनामकं नाटकाङ्गम् । 'प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलनाच्छलम् ।' इतिदर्पणकारवचनात् । स्रग्धरा छन्दः ॥ २६ ॥

भीम—अरे अरे सुयोधन के अनुचरो ! भय से क्यों खडबडा रहे हो अपने स्वामी कुरुराज तक हम लोगों के आने के इस संदेश को पहुँचा दो । हम लोगों के विषय में किसी प्रकार का सन्देह न करो ।

जुआरूपी कपटों का विधाता, लाक्षानिर्मित भवन का दाह कर्ता वह अहङ्कारी राजा दुर्योधन, जो द्रौपदी के केश और वस्त्रों के अपहरण करने में वायु के समान है, पाण्डव लोग जिसके सेवक हैं, दुश्शासन प्रभृति सौ भाइयों में ज्येष्ठ भ्राता है और कर्ण का परम मित्र है, कहा है ? बतलाओ । क्रोध से नहीं, किन्तु केवल उससे मिलने के लिए हम दोनों आए हुए हैं ॥ २६ ॥

धृतराष्ट्र—संजय, दारुणः खल्वपक्षेपः पापस्य ।

संजयः—तात, कर्मणा कृतनिःशेषविप्रियाः सम्प्रति वाचा व्यवस्यन्ति ।

दुर्योधन—सूत, कथय गत्वोभयो'रयं तिष्ठती'ति ।

सूत—यथाऽऽज्ञापयति देवः । ( तावुपसृत्य । ) ननु भो वृकोदरार्जुनौ, एष महाराजस्तातेनाऽम्बया च सह न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।

अर्जुनः—आर्य, प्रसीद । न युक्त पुत्रशोकोपपीडितौ पितरौ पुनरस्मद्दर्शनेन भृशमुद्वेजयितुम् । तद्गच्छावः ।

भीम—मूढ, अनुल्लङ्घनीयः, सदाचारः । न युक्तमनभिवाद्य गुरून् गन्तुम् ( उपसृत्य । ) सजय, पित्रोर्नमस्कृतिं श्रावय । अथवा तिष्ठ । स्वयं

---

दारुण.=भीषणम्, उपक्षेपः=फलम् । अथवा भयप्रदर्शनम् । पूर्वपक्षे पापस्यार्थः, अघः, उत्तरपक्षे पापिनः, भीमस्येत्यर्थः ।

कर्मणा=क्रियया, कृतनिःशेषविप्रियाः=कृताः निःशेषविप्रियाः सकलापकाराः यैः ते, सम्प्रति, वाचा=वाङ्मात्रेण व्यवस्यन्ति=कीर्तयन्ति । तथा च पूर्वमपकारं कृत्वा सम्प्रति कथयति दारुण इति अथवा भीमः पूर्वं दुःशासनादीन् हत्वा साम्प्रतं वाचा दुःखाकरोतीत्यर्थः ।

उभयोः=भीमार्जुनयो', अय=दुर्योधन. !

न्यग्रोधच्छायाया—वटच्छायायाम् ।

सदाचारः=शिष्टव्यवहारः, गुरुजनस्य प्रणामादिरूपस्तदाह—न युक्तमिति ।

---

**धृतराष्ट्र**—सजय ! इस दुरात्मा का दोषारोप तो असह्य है ।

**सजय**—पिता जी, कार्य से तो अहित सीमा तक पहुँचा चुके हैं अब बचन से भी अहित करने की चेष्टा कर रहे हैं ।

**दुर्योधन**—दोनों से जाकर कह दो—'यह बैठे हुए हैं'

**सूत**—महाराज की जो आज्ञा । ( पहले समीप जाकर ) अयि भो भीमसेन और धनञ्जय ! यह महाराज पिता और माता के साथ वट ( बरगद ) की छाया में बैठे हुए हैं ।

**अर्जुन**—आर्य ! क्षमा कीजिए । पुत्रशोक से सन्तप्त माता और पिताजी [ गान्धारी और धृतराष्ट्र ] को अपनी आकृति दिखला कर अत्यन्त व्यग्र करना उचित नहीं । अतः [ यहा से ] चल दें ।

**भीम**—मूर्ख ! सदाचारका उल्लङ्घन नहीं करना चाहिए ! गुरुजनोंको प्रणाम किए बिना जाना उचित नहीं । ( समीप जाकर ) सजय ! जाकर माता और पिताजी को हम

विश्राव्य नामकर्मणी वन्दनीया गुरवः ।

( इति रथादवतरतः )

अर्जुनः—( उपगम्य । ) तात; अम्ब,

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ॥ २७ ॥

भीमः—

चूर्णिताशेषकौरव्यः क्षीबो दुःशासनाऽसृजा ।

---

अन्वय —यत्र, ते, सुतैः, सकलरिपुजयाशा, बद्धा, यस्य, गर्वेण, लोकः, तृणमिव, परिभूतः, तस्य, राधासुतस्य, रणशिरसि, निहन्ता, अयम् , मध्यमः, पाण्डवः, वाम् , पितरौ, प्रणमति ॥ २७ ॥

सकलेति । यत्र=कर्णे, ते=तव, सुतैः, सकलरिपुजयाशा=निखिलशत्रूणां जयाशा जयस्य तृष्णा, बद्धा=स्थापिता, यस्य, गर्वेण, लोकः=जगत्, तृणमिव, परिभूतः=तिरस्कृतः, तस्य, राधासुतस्य—कर्णस्य, रणशिरसि=रणः शिर इव तस्मिन्, निहन्ता=विनाशयिता, अयम् , मध्यमः, पाण्डवः=पाण्डुपुत्रः, अर्जुनः वाम्=युवाम् , पितरौ=मातापितृसदृशौ, 'पिता मात्रा' इत्येकशेषः । प्रणमति= नमस्करोति । मालिनी छन्दः ॥ २७ ॥

अन्वयः—चूर्णिताशेषकौरव्यः, दुःशासनाऽसृजा, क्षीबः, सुयोधनस्य, ऊर्वोः, भङ्क्ता, अयम् , भीमः, शिरसा, अञ्चति ॥ २८ ॥

तव पुत्रस्य विनाशकोऽहं प्रणमामीत्याह—चूर्णितेति । चूर्णिताशेषकौरव्यः=

---

दोनों को नमस्कार सुना दीजिए । अथवा रहिए स्वयं नाम और कर्म सुनाकर गुरुजनों का अभिवादन करना चाहिए ।

( यह कहकर रथ से उतर पड़ते हैं )

अर्जुन—( समीप जाकर ) पिता जी और माता जी !

आपके पुत्र जिसके आधार पर समग्र शत्रुओं पर विजय प्राप्त करने की आशा लगाए हुए थे और जिसके अहङ्कार से संसार तिनके के सदृश तिरस्कृत हुआ उसी रथकार के पुत्र का संग्राम के बीच दमनकारी यह मँझला पाण्डव अर्जुन आप गुरुजनों को प्रणाम करता है ॥

भीम—सम्पूर्ण कौरवों का मर्दनकारी, दुश्शासन के रक्तपान से मत्त यह भीम, जो

भङ्क्त्वा सुयोधनस्योर्वोर्भीमोऽयं शिरसाऽञ्चति ॥ २८ ॥

धृतराष्ट्र—दुरात्मन्वृकोदर, न खल्विदं भवतैव केवलं सपत्नानामपकृतम्। यावत्क्षत्रं तावत्समरविजयिनो जिता हताश्च वीराः। तत्किमेवं विकत्थनाभिरस्मानुद्वेजयसि।

भीम—तात, अलं मन्युना।

कृष्णा केशेषु कृष्टा तव सदसि पुरः पाण्डवानां नृपैर्यैः
सर्वे ते क्रोधवह्नौ कृशशलभकुलावज्ञया येन दग्धाः।

चूर्णिता अशेषकौरव्या येन सः, दुःशासनाऽसृजा = दुःशासनवक्षोरुधिरेण, क्षीवः = मत्तः, सुयोधनस्य, ऊर्वोः = सक्थ्नोः, भङ्क्त्वा = त्रोटक., अयम्, भीम., शिरसा, अञ्चति = पूजयति, प्रणमतीत्यर्थः, अनुष्टुप् छन्दः ॥ २८ ॥

सपत्नानां = शत्रूणाम्। वीराः = समरविजयिनः जिताः हताश्च, भवन्तीति शेषः। विकत्थनाभिः = प्रशंसाभिः। मन्युना = क्रोधेन।

अन्वय—पाण्डवानाम्, पुरः, तव, सदसि, यैः, नृपैः, केशेषु, कृष्णा, कृष्टा, ते, सर्वे, येन, क्रोधवह्नौ, कृशशलभकुलावज्ञया, दग्धाः, खलु, एतस्मात्, अहम्, श्रावये, भुजबलश्लाघया, न, नापि, दर्पात्, (श्रावये) तात, पुत्रैः पौत्रैः, च, कृते, अतिगुरुणि, कर्मणि, स्वमेव, साक्षी ॥ २९ ॥

सहलः पापस्य फलमेतदिति बोधनायोक्तं ननु दर्पादित्याह—कृष्णा केशेष्विति। पाण्डवानाम्, पुरः = अग्रे, एतेन बलवतः स्वामिनोऽग्र 'वधूकर्षणमतीव क्रोधहेतु'रिति ध्वनितम्। एकान्ते साधारणमनुष्यसमक्षकचाकर्षणमनर्थकरं किं पुनाराजसभायामित्याह—तव सदसीति। तव = राज्ञः सदसि = सभायाम्, यैः। कर्तृभिरनुमन्तृभिर्द्रष्टृभिर्वा। नृपैः। ननु साधारणमनुष्यैः। केशेषु = केशावच्छेदेन, कृष्णा = पाण्डववधूः, न तु साधारणस्त्री कृष्टा ते, सर्वे, येन = पापाचरणरूपहेतुना, क्रोधवह्नौ,

सुयोधन के जंघों को भग्न करने वाला है, शिर झुकाकर नमन करता है ॥ २८ ॥

**धृतराष्ट्र—**दुष्ट भीम! यह शत्रुओं का अपकार केवल तुमने ही नहीं किया है किन्तु जब से क्षत्रिय हैं तब से कितने ही युद्ध में विजय प्राप्त करने वाले योद्धा बने और नाश को प्राप्त हो गए। तो फिर क्यों इस प्रकार से गाल बजाकर हम लोगों को व्यथित कर रहे हो?

**भीम—**पिता जी! बस, क्रोध न कीजिए।

जिन राजाओं के द्वारा आप [ धृतराष्ट्र ] की सभा में पाण्डवों की गृहिणी पाञ्चाली [ द्रौपदी ] केश ग्रहण करके आकृष्ट की गई है, जिस कारण वे सब क्षुद्र टिड्डियों के कुल की तरह अनायास ही क्रोधाग्नि में भस्म हो गए हैं। इसी लिए मैं आपको सुनाता हूँ न

एतस्माच्छ्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पा-
त्पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात साक्षी त्वमेव ॥ २९ ॥

दुर्योधन—अरे रे मरुत्तनय, किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमात्मकर्म श्लाघसे ? अपि च ।

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
अस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा

कृशशलभकुलावज्ञया = क्षुद्रपतङ्गकुलतुल्यापमानेन दग्धाः, खलु = निश्चयेन, एतस्मात् = इतो हेतोः, अहम्, श्रावये, भुजबलश्लाघया न, नापि, दर्पात् तात = पितृव्य, पुत्रैः, पौत्रैः, च, कृते, अतिगुरुणि, कर्मणि त्वमेव, साक्षी = साक्षाद् द्रष्टा । न कपोलकल्पितं कथयामीति भावः । स्रग्धराछन्दः ॥ २९ ॥

अन्वय—मम, भुवनपते, आज्ञया, भूपतीनाम्, प्रत्यक्षम्, द्यूतदासी, तव, पशोः, तव, च तस्य, राज्ञः, तयोः, वा भार्या, केशेषु कृष्टा, अस्मिन्, वैरानुबन्धे, ये, नरेन्द्राः, हताः, तैः, किम्, अपकृतम्, वद, बाह्वोः, वीर्यातिरेकद्रविणगुरुमदम्, माम्, अजित्वा, एव, दर्पः ॥ ३० ॥

निरपराधिना तेषा हननाद्गर्वो वृथा तवेत्याह—कृष्टेति । मम, भुवनपतेः = पृथ्वीशस्य, एतेनाज्ञापालकत्वं तेषां धर्म इति ध्वनितम् । आज्ञया, भूपतीनाम्, प्रत्यक्षम्, द्यूतदासी = द्यूते निर्जितत्वाद् दासीतुल्या । अत एवापमानयोग्या । तव = अर्जुनस्य, पशोः = पशुतुल्यस्य, तव = भीमस्य, च, भीमार्जुनयोः सम्बोध्यत्वात् तवद्वयस्य प्रयोगः । तस्य, राज्ञः = युधिष्ठिरस्य, तयोः = नकुलसहदेवयोः वा भार्या, केशेषु, कृष्टा, अस्मिन् = आकर्षणरूपे, वैरानुबन्धे = वैरजनके ये, नरेन्द्राः, हताः, तैः किम्, अपकृतम्, वद = कथय । अपकर्ता त्वहमेवेति भावः । बाह्वोः = भुजयोः,

तो बाहुबल की प्रशंसा से और न अभिमान के कारण सुनाता हूं । पुत्र पौत्रों के द्वारा किए गए भीषण तथा दुष्कर कार्य के साक्षी पिता जी ! आप ही तो हैं ॥ २९ ॥

दुर्योधन—अरे रे ! वायुकुमार, क्यों जराजीर्ण महाराज [ पिता जी ] के समक्ष इस प्रकार से अपने कुत्सित कर्म की प्रशंसा कर रहे हो ? और भी —

भीम और अर्जुन तथा मूर्ख उस राजा युधिष्ठिर, नकुल, सहदेव और राजन्यमण्डलों के देखते हुए जुए में सेविका बनाई हुई तुम्हारी भार्या द्रौपदी केश पकड कर विश्व के अधिपति मेरी आज्ञा से आकृष्ट की गई । इस शत्रुता के सम्बन्ध में [ तुम्हीं लोग ] बतलाओ उन राजाओं ने क्या अपराध किया था, जिनका संहार हुआ है ? भुजाओं के पराक्रमाति-

बाह्वोर्वीर्यातिरेकद्रविणगुरुमदं मामजित्वैव दर्पः ॥ ३० ॥

( भीमः क्रोधं नाटयति । )

अर्जुन—आर्य, प्रसीद । किमत्र क्रोधेन ।

अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥ ३१ ॥

भीमः—अरे रे भरतकुलकलङ्क,

अत्रैव किं न विशसेयमहं भवन्तं

---

वीर्यातिरेकद्रविणम् = पराक्रमाधिक्यमेव द्रविणं धनं तेन गुरुः अधिकः मदः यस्य तम् , 'अतिरिक्तः समधिकः' इत्यमरः। माम् = दुर्योधनम् अजित्वैव = जयमप्राप्यैव, दर्पः = अहङ्कारः साम्प्रतं तेऽहङ्कारो न युक्त इति भावः। स्रग्धरा छन्दः ॥ ३० ॥

अन्वय —हतभ्रातृशत , दुःखी, एषः, वाचा, अप्रियाणि, करोति, (यतः) कर्मणा, न शक्तः, ( अतः ) अस्य, प्रलापैः, का व्यथा ॥ ३१ ॥

अस्य वचनात् क्रोधो न कार्य इत्याह—अप्रियाणीति ।

हतभ्रातृशतः = हताः भ्रातृशतं यस्य सः, अतएव, दुःखी, एषः = दुर्योधनः, वाचा, अप्रियाणि = अपकारान् , करोति, परुषवचनं वक्तीत्यर्थः। यतः कर्मणा न, शक्तः = समर्थः ( अतएव ) अस्य, प्रलापैः = विरुद्धवचनैः, का, व्यथा = दुःखम् । एतद्वचनेन दुःखं न कर्तव्यमतएव ते क्रोधो न युक्त इति भावः, अनुष्टुप् छन्दः ॥३१॥

अन्वय —(हे) कटुप्रलापिन् , ते, मद्गदाग्रनिर्भिद्यमानरणितास्थनि, शरीरे, विघ्नम् , यदि, गुरुः, न, कुरुते, तदा, दुःशासनानुगमनाय, अहम् , भवन्तम् , अत्रैव, किंन, विशसेयम् ॥ ३२ ॥

अत्रैवेति । अहम् , भवन्तम्=दुर्योधनम् , अत्रैव=समरप्राङ्गणाद् बहिरेव अथवा।

---

क्षयरूपद्रव्य के कारण महान् अहङ्कारशाली मुझ [ दुर्योधन ] पर विजय पाए बिना ही तुम्हें गर्व हो रहा है ॥ ३० ॥

[ भीम क्रोध की अभिव्यञ्जना करता है ]

अर्जुन—आर्य ! क्षमा कीजिए । इस पर क्रोध करने से क्या लाभ ?

यह वचन से ही अहित करता है कर्म से अहित करने में समर्थ नहीं है । सौ भाइयों के विनाश से व्यथित इस दुर्योधन के बडबडाने से कष्ट ही क्या है ? ॥ ३१ ॥

भीम—अरे अरे ! भरतवंश के कलङ्क !

ऐ क्रूरभाषिन् [ दुर्योधन ] दुश्शासन का अनुसरण करने के लिए यहीं पर तुम्हें क्यों

दुःशासनानुगमनाय कटुप्रलापिन् ! ।
विघ्नं गुरुर्न कुरुते यदि मद्गदाग्र-
निर्भिद्यमानरणितास्थनि ते शरीरे ॥ ३२ ॥

अन्यच्च मूढ,

शोकं स्त्रीवन्नयनसलिलैर्यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविघटने यच्च साक्षीकृतोऽसि ।
आसीदेतत्तव कुनृपतेः कारणं जीवितस्य
युद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥ ३३ ॥

गुरुजनसविध एव दुःशासनानुगमनाय, किं न, विशसेयम्=हन्याम्, हन्यामेवेत्यर्थः । कदा हन्यामित्याह—विघ्नमिति । हे कटुप्रलापिन् !, ते=तव मद्गदाग्रनिर्भिद्यमानरणितास्थनि=मदीयगदाग्रेण निर्भिद्यमानानि अतएव रणितानि शब्दितानि अस्थीनि यस्मिन्, तस्मिन् शरीरे, विघ्नम्, यदि, गुरुः । न, कुरुते । मा यदि गुरुर्निवरुन्ध्यादित्यर्थः । वसन्ततिलका छन्दः ॥ ३२ ॥

अन्वय—स्त्रीवत्, नयनसलिलैः, शोकम्, यत्, परित्याजितः, असि, यच्च, भ्रातुः दुःशासनस्य, वक्षःस्थलविघटने, साक्षीकृतः, असि, युष्मत्कुलकमलिनीकुञ्जरे, भीमसेने, युद्धे क्रुद्धे ( सति ) एतत्, कुनृपतेः, जीवितस्य, तव, कारणा, आसीत् ॥३३॥

शोकमिति । स्त्रीवत्, नयनसलिलैः=नेत्रजलैः, शोकम्, यत्, परित्याजितः, असि, यथा स्त्री रुदित्वा शोकमपनुदति तथैव त्वामप्यकार्षमित्यर्थः । यच्च भ्रातुः=दुःशासनस्य, वक्षःस्थलविघटने=उरोविदारणे, साक्षीकृतः, असि, युष्मत्कुलकमलिनीकुञ्जरे=युष्मत्कुल कमलिनी इव तत्र कुञ्जर इव तस्मिन्, भीमसेने, क्रुद्धे, ( सति ) एतत्=पूर्वोक्तद्वयम्, कुनृपतेः=कुत्सितभूपतेः, जीवितस्य, तव कारणा=

न समाप्त कर दूँ यदि तात [ धृतराष्ट्र ] मेरे घूसों से चराचराहट के साथ टूटता हुई हड्डियों से युक्त शरीर के विषय में विघ्न न डालते । [ अर्थात् मैं घूसों के प्रहार से शरीर की हड्डियों को तोडकर यहीं मार डालता ] ॥ ३२ ॥

और भी मूर्ख ! :—

स्त्रियों की भाँति नेत्रों से अश्रुपात के द्वारा तुम्हारे सन्ताप को दूर भगाया । और दुश्शासन का हृदय विदीर्ण करते समय तुम्हें दिखा दिया हूँ ये ही दो कारण हैं जिससे, तुम्हारे कुल कमल के लिए हाथी भीमसेन के कुपित होने पर तुम्हारे सदृश दुष्ट शासक जीवित है अर्थात् तुम्हें तो मैं प्रथम ही में समाप्त कर देता । परन्तु स्त्रियों की तरह रुलाकर और तुम्हारे देखते हुए तुम्हारे कनिष्ट भ्राता दुश्शासन का हृदय विदीर्ण कर तुम्हें व्यथित करना था ॥ ३३ ॥

दुर्योधन—दुरात्मन्, भरतकुलापसद, पाण्डवपशो, नाहं भवानिव विकत्थनाप्रगल्भः। किन्तु—

द्रक्ष्यन्ति नचिरात्सुप्तं बान्धवास्त्वां रणाङ्गणे।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणम्॥ ३४॥

भीम—(विहस्य।) यद्येवं नाश्रद्धेयो भवान्। तथापि प्रत्यासन्नमेव कथयामि।

पीनाभ्यां मद्भुजाभ्यां भ्रमितगुरुगदाघातसञ्चूर्णितोरोः।

---

तीव्रवेदना, आसीत्। त्वत्कुलविनाशकमदीयक्रोधेन त्वयि तीव्रवेदनाऽप्रापिते साम्प्रतं वधस्य समय आगतः, पूर्वं वधे तु तव तीव्रवेदनाऽनुभवो न स्यादिति भावः। मन्दाक्रान्ता छन्दः॥ ३३॥

विकत्थनाप्रगल्भः = स्वप्रशंसायां धृष्टः।

अन्वयः—बान्धवाः, रणाङ्गणे, मद्गदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणम्, (अत एव) सुप्तम्, त्वाम्, नचिरात्, द्रक्ष्यन्ति॥ ३४॥

द्रक्ष्यन्तीति। पाण्डवाः, रणाङ्गणे = समरप्राङ्गणे, मद्गदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणम् = मद्गदया भिन्नानां वक्षोऽस्थ्नां या वेणिका प्रवाहः रुधिरधारा सैव भीमम् भयावहम् भूषणम् अलङ्कारः यस्य तम्, 'वेणी तु केशवेशे स्यात्प्रवाहेऽपि निगद्यते' इति धरणिः। ततः स्वार्थे कप्रत्यये ह्रस्वत्वे च वेणिकेति निष्पन्नम्। अतएव सुप्तम् = मृतम्, त्वाम् = भीमम्, नचिरात् = शीघ्रम्, निषेधार्थकनशब्देन सुप्सुपेति समासः। द्रक्ष्यन्ति = अवलोकिष्यन्ते। अनुष्टुप् छन्दः॥ ३४॥

प्रत्यासन्नम् = अतिसमीपम्।

अन्वयः—श्वः, प्रभाते, पश्यताम्, नृणाम्, (अग्रे) पीनाभ्याम्, मद्भुजाभ्याम्, भ्रमितगुरुगदाघातसञ्चूर्णितोरोः, क्रूरस्य, तव, शिरसि, पादम्, आधाय, त्वन्मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेन, स्त्यानेन, आर्द्रेण, च, आनखाग्रम् अङ्कः, स्वयम्, (अहम्) भीमम्, भूषणम्, अनुभविता, अस्मि॥ ३५॥

श्वस्तव जघनत्रोटनं करिष्यामीति प्रतिजानाति भीमः—पीनाभ्यामिति। श्वः=

---

दुर्योधन—दुष्ट, भरतवंश में नीच, पाण्डवपशु, तुम्हारी तरह मैं डींग नहीं मारता। किन्तु—

शीघ्र ही तुम्हारे कुटुम्बवाले समरभूमि के बीच मेरी गदा से भेदन की गई पसलियों की लुगदीरूप भयानक आभूषण से विभूषित तुम्हें देखेंगे॥ ३४॥

भीम—यदि इस प्रकार कह रहे हो तो फिर [ऊरुभङ्ग होना] समीप ही है कहता हूँ—

कल प्रभातकाल होते ही अपने स्थूल भुजदण्डों से घुमाई हुई विशाल गदा के प्रहार

क्रूरस्याधाय पादं तव शिरसि नृणां पश्यतां श्वः प्रभाते ।
त्वन्मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेनाऽऽनखाग्रं
स्त्यानेनार्द्रेण चाक्तः स्वयमनुभविता भूषणं भीममस्मि ॥ ३५ ॥

( नेपथ्ये । )

भो भो भीमार्जुनौ, एष खलु निहताशेषारातिचक्राक्रान्तपरशुरामाभिरामयशाः प्रतापतापितदिङ्मण्डलः स्थापितस्वजनः श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाज्ञापयति ।

उभौ—किमाज्ञापयत्यार्यः ।

( पुनर्नेपथ्ये । )

---

आगामिदिने, 'अनागतेऽह्नि श्वः' इत्यमरः । प्रभाते, पश्यताम् , नृणाम् , अग्र इति शेषः । पीनाभ्याम् = परिपुष्टाभ्याम् , मद्भुजाभ्याम् , भ्रमितगुरुगदाघातसञ्चूर्णितोरोः = घूर्णितबृहद्गदाघातेन चूर्णितौ ऊरू जघने यस्य तस्य, क्रूरस्य, तव, शिरसि, पादम् = चरणम् आधाय = धृत्वा, त्वन्मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेन = त्वं मुख्य यस्य तच्च भ्रातृचक्रम् तस्योद्दलनेन गलत् असृक् तदेव चन्दनम् तेन, पुनः कीदृशेन स्त्यानेन = घनीभूतेन, आर्द्रेण = क्लिन्नेन, च, अक्तः = व्याप्तः, स्वयम् , (अहम्) भीमम्=भयावहम् , भूषणम्=अनुभविता, अस्मि । स्रग्धरा छन्दः ॥

निहताशेषारातिचक्राक्रान्तपरशुरामाभिरामयशाः=निहतानि यानि अशेषारातिचक्राणि सकलशत्रुसमूहाः तैः आक्रान्तम् परशुरामाभिरामयशः यस्य सः, यथा परशुरामेण सकलाः क्षत्रियारयो निहताः तथैव युधिष्ठिरेणापि शत्रवो निहता इति तत्तुल्ययशा युधिष्ठिर इति भावः ।

---

से भग्नजङ्घ दुष्ट दुरात्मा के शिर पर चरण रखकर तथा जिन भ्रातृवर्ग के ज्येष्ठ तुम हो उनके संहार करने पर बहते हुए रक्तरूपी गाढे और गीले चन्दन से नख से शिर तक लिप्त होकर मैं स्वय भीषण आभूषण धारण कर लूँगा ॥ ३५ ॥

( नेपथ्य में )

अये अये भीमसेन और अर्जुन ! यह देवतारूप अजातशत्रु श्रीमान् युधिष्ठिर, जो सम्पूर्ण शत्रुसमूह का संहार करके परशुराम के शुभ यश को जीत लिये हैं तथा अपने प्रताप से दिशाओं को सन्तप्त कर दिए हैं, आज्ञा दे रहे हैं ?

दोनों—[ भीम और अर्जुन ]—श्रीमान् क्या आज्ञा दे रहे हैं ?

( फिर नेपथ्य में )

कुर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारा-
नश्रून्मिश्रं कथंचिद्ददतु जलममी बान्धवा बान्धवेभ्यः ।
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान्गृध्रकङ्कै-
रस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥ ३६ ॥

उभौ—यदाज्ञापयत्यार्यः । ( इति निष्क्रान्तौ । )

( नेपथ्ये । )

अरे रे गाण्डीवाकर्षणबाहुशालिन्, अर्जुन, अर्जुन, केदानीं गम्यते ?

---

अन्वय —आप्ताः, जनाः, रणशिरसि, हतानाम्, देहभारान्, वह्निसात्, कुर्वन्तु, अमी, बान्धवाः, बान्धवेभ्यः, अश्रून्मिश्रम्, जलम्, ददतु, हतनरगहने, गृध्रकङ्कैः, खण्डितान्, ज्ञातिदेहान्, मार्गन्ताम्, अयम्, भास्वान्, रिपुभिः सह, अस्तम्, प्रयातः, ( अतः ) बलानि, संह्रियन्ताम् ॥ ३६ ॥

कुर्वन्त्वाप्ता इति । आप्ता.=स्वीयाः, जनाः=बान्धवाः, रणशिरसि, हतानाम्, देहभारान्=शरीरसङ्घान्, वह्निसात्=कार्त्स्न्येन वह्निदेयान् 'विभाषा साति कार्त्स्न्ये' इति साति प्रत्ययः । कुर्वन्तु, बान्धवाः, अमी बान्धवेभ्यः ( मृतेभ्यः ) अश्रून्मिश्रम्=अश्रुभिरुन्मिश्रम् मिलितम्, जलम्, कथञ्चित् ददतु 'अदभ्यस्तादि'ति झस्यात्, हतनरगहने=हतनरा एव गहनं वनम् तस्मिन्, गृध्रकङ्कैः=मांसभक्षकपक्षिविशेषैः खण्डितान्, ज्ञातिदेहान्=बान्धवशरीराणि, मार्गन्ताम्=गवेषन्ताम्, अयम्, भास्वान्=सूर्यः, रिपुभिः, सह, अस्तम्, प्रयातः, सूर्यास्तमिव शत्रोरपि अस्तमभूदिति भावः । अत इत्यध्याहारः । बलानि=सैन्यानि, संह्रियन्ताम् । अत्र सहोक्तिरलङ्कारः । स्रग्धरा छन्दः ॥ ३६ ॥

गाण्डीवाकर्षणबाहुशालिन्=गाण्डीवाकर्षणे यौ बाहू ताभ्यां शालते तत्सम्बो-

---

कुटुम्बी जन सग्राम में प्राणविसर्जन करने वाले लोगों के शरीरों के समूह को अग्नि से जला डालें [ अर्थात् दाह-क्रिया सम्पादन कर डालें ], ये बान्धव अपने गोत्रवालों के लिए अश्रुपात करते हुए तिलाञ्जलि प्रदान करें ; मरे हुए योद्धाओं के लोथ से गहन इस रणस्थली में गीध तथा कङ्कों के द्वारा खण्डित शरीर वाले अपने जातियों का अन्वेषण करें, और अब यह सहस्रांशु [ सूर्य ] शत्रुओं के साथ ही अस्ताचल अवलम्बन कर रहे हैं अत. अपनी सेनाओं को [ आप लोग ] एकत्रित करलें ॥ ३६ ॥

**दोनों**—अच्छा महाराज की जो आज्ञा । ( चल पड़ते हैं )

( नेपथ्य में )

अरे भो ! गाण्डीव को आकृष्ट करने वाले भुजाओं से युक्त अर्जुन ! अर्जुन !! अब

कर्णक्रोधेन युष्मद्विजयि धनुरिदं त्यक्तमेतान्यहानि
प्रौढं विक्रान्तमासीद्वन इव भवता शूरशून्ये रणेऽस्मिन् ।
स्पर्शं स्मृत्वोत्तमाङ्गे पितुरनवजितन्यस्तहेतेरुपेतः
कल्पाग्निः पाण्डवानां द्रुपदसुतचमूघस्मरो द्रौणिरस्मि ॥ ३७ ॥

धृतराष्ट्र—( आकर्ण्य सहर्षम् । ) वत्स दुर्योधन, द्रोणवधपरिभवोद्दीपित-

---

धने अथवा गाण्डीवाकर्षणौ यौ बाहू नन्द्यादित्वात्कर्तरि ल्युप्रत्ययः ।

अन्वय —एतानि, अहानि, युष्मद्विजयि, इदम्, धनुः, त्यक्तम् ( अतएव ) शूर-शून्ये, वने, इव, अस्मिन्, रणे, विक्रान्तम्, प्रौढम्, आसीत्, अनवजितन्यस्तहेतेः, पितुः, उत्तमाङ्गे, स्पर्शम्, स्मृत्वा, पाण्डवानाम्, कल्पाग्निः, द्रुपदसुतचमूघस्मरः, द्रौणिः, अस्मि, उपेतः ॥ ३७ ॥

कर्णक्रोधेन त्यक्तधन्वाऽश्वत्थामा, आह—कर्णक्रोधेनेति । एतानि = मत्पितुर्मर-णानन्तर कर्णमरणपर्यन्तम्, अहानि=दिनानि 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया, युष्मद्विजयि = पाण्डवस्य जेतृ, एतेन मद्धनुषोऽभावादेव साम्प्रतं त्वं विजयीति ध्वनितम् । इदम्, धनुः, कर्णक्रोधेन 'मूढ दुःखितस्याश्रुपात' इत्यादिपरुषवचनेन कर्णोपरि सञ्जातक्रोधोऽश्वत्थामा प्रतिज्ञातवान् जीविते कर्णे नाहं शस्त्रं ग्रहीष्यामी-ति भावः । त्यक्तम्, ( अतएव ) शूरशून्ये = वीररहिते ममाभावादिति भावः । वने इव अस्मिन्, रणे भवतः = पाण्डवस्य, विक्रान्तम् = विक्रमः, भावे क्तः । प्रौढम्, आसीत् । अनवजितन्यस्तहेतेः = अनवजिता अपराजिता न्यस्ता शोकेन त्यक्ता हेतिः अस्त्रं येन तस्य, पितुः = द्रोणस्य, उत्तमाङ्गे = शिरसि, स्पर्शम्, स्मृत्वा, पाण्ड-वानाम्, कल्पाग्निः = प्रलयकालिकाग्नितुल्यः, द्रुपदसुतचमूघस्मरः = धृष्टद्युम्नसैन्य-भक्षकः, घस्मर इति घसधातोः 'सृघस्यदः क्मरच्' इति क्मरच् प्रत्ययः, द्रौणिः=द्रोण-पुत्रः अस्मि = अहम् । उपेतः = आगतः । पितृहननप्रतिक्रियां साम्प्रतं करिष्यामीति भावः । स्रग्धरा छन्दः ॥ ३७ ॥

---

कहाँ जा रहे हो ?

इतने दिनतक कर्णपर कोप करने के कारण तुम लोगों पर विजय प्राप्त करने वाले इस धनुष को मैंने छोड रक्खा था । जङ्गल की भाँति वीरविहीन इस समराङ्गण में तमने अतुल पराक्रम प्रदर्शित किया है । विजित न होकर शस्त्र परित्याग कर देने वाले पिता के शिर के स्पर्श को स्मरण करके पाण्डवों के लिए प्रलयाग्नि के सदृश और द्रुपद के पुत्र [धृष्टद्युम्न] के लिए अन्तक [ काल ] द्रोणतनय [ अश्वत्थामा ] मैं आ ही पहुँचा ॥ ३७ ॥

धृतराष्ट्र—( सुनकर प्रसन्नतापूर्वक ) पुत्र दुर्योधन, पिता से भी अधिक पराक्रम-

क्रोधपावकः पितुरपि समधिकबलः शिक्षावानमरोपमश्चायमश्वत्थामा प्राप्तः। तत्प्रत्युपगमनेन तावदयं सम्भाव्यतां वीरः।

गान्धारी—जाद, पच्चुग्गच्छ एदं महाभाअम्। (जात, प्रत्युद्गच्छैनं महाभागम्।)

दुर्योधनः—तात, अम्ब, किमनेनाङ्गराजवधाशंसिना वृथायौवनशस्त्रबलस्मरेण ?।

धृतराष्ट्रः—वत्स, न खल्वस्मिन्काले पराक्रमवतामेवंविधानां वाङ्मात्रेणापि विरागमुत्पादयितुमर्हसि।

(प्रविश्य।)

अश्वत्थामा—विजयतां कौरवाधिपतिः।

दुर्योधनः—(उत्थाय) गुरुपुत्र, इत आस्यताम्। (इत्युपवेशयति।)

अश्वत्थामा—राजन्दुर्योधन,

---

क्रोधपावकः=क्रोधः पावकः अग्निरिव, अमरोपमः=देवतुल्यः, प्रत्युपगमनेन=प्रत्युत्थानादिना सम्भाव्यताम्=विधीयताम्, पूज्यतामिति यावत्।

विरागम्=औदासीन्यम्। आस्यताम्=उपविश्यताम्।

अन्वय.—कर्णेन, यत्, कर्णसुखम्, तत्, बहु, उक्त्वा, सङ्गरेषु, यत्, विहितम्, तत्, त्वया, विदितम्, अधुना, अभ्यर्मित्रम्, अधिज्यधनुः, एषः, द्रौणिः, आपतितः, (अतः) (हे) नृप, प्रतिकारचिन्ताम्, त्यज॥ ३८॥

---

सम्पन्न, धनुर्वेद-विशारद, देवता-सदृश यह अश्वत्थामा, जिसका क्रोधाग्नि द्रोणाचार्य के वधरूप अपमान से प्रचण्डरूप धारण कर लिया है, आ गया है।

गान्धारी—पुत्र! इन महाभाग का स्वागत करो।

दुर्योधन—पिता तथा माताजी! अङ्गनरेश [कर्ण] के वध की कामना करने वाले था व्यर्थ ही यौवन और शस्त्रबल का गर्व रखने वाले इस [अश्वत्थामा] से क्या प्रयोजन ?

धृतराष्ट्र—पुत्र! ऐसे समय में इस प्रकार के पराक्रमियों की विरक्ति वचन मात्र से भी नहीं होने देना चाहिए।

(प्रविष्ट होकर)

अश्वत्थामा—कौरवनरेश की विजय हो।

दुर्योधन—(उठकर) गुरुकुमार, यहाँ बैठ जाइए। (बैठाता है)

अश्वत्थामा—(सजल नेत्रों से) महाराज दुर्योधन!

कर्णेन कर्णसुभगं बहु यत्तदुक्त्वा
यत्सङ्गरेषु विहितं विदितं त्वया तत् ।
द्रौणिस्त्वधिज्यधनुरापतितोऽभ्यमित्र-
मेषोऽधुना त्यज नृप ! प्रतिकारचिन्ताम् ॥ ३८ ॥

दुर्योधन —( साभ्यसूयम् । ) आचार्यपुत्र,

अवसानेऽङ्गराजस्य योद्धव्यं भवता किल ।
ममाप्यन्तं प्रतीक्षस्व कः कर्णः कः सुयोधनः ॥ ३९ ॥

अश्वत्थामा—( स्वगतम् । ) कथमद्यापि स एव कर्णपक्षपातः, अस्मासु

कर्णेति । कर्णेन = राधासुतेन, यत्, कर्णसुभगम् = श्रवणसुखदम्, तत्=पूर्वोक्तं, बहु, उक्त्वा, सङ्गरेषु = सङ्ग्रामेषु, यत्, विहितम्, तत्, त्वया, विदितम् । यदुक्तं तत्कर्णसुखदमात्र कार्यस्याकरणादिति भावः । अधुना, अभ्यमित्रम् = अमित्रं शत्रुम् अभि 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावसमासः । शत्रुमभिमुखीकृत्येत्यर्थः । अधिज्यधनुः = ज्याम् मौर्वीम् अधिगत प्राप्तम् अधिज्यम् अधिज्यं धनुः यस्य सः, एष', द्रौणिः = अश्वत्थामा, आपतित. = आगतः । ( अतः ) हे नृप, प्रतिकारचिन्ताम् = वैरनिर्यातनचिन्ताम्, अनुजवधप्रतिक्रियामित्यर्थ. । त्यज । साम्प्रतं पाण्डववधेन वैरनिर्यातन करिष्यामीति भावः । वसन्ततिलका छन्द. ॥ ३८ ॥

अन्वय —अङ्गराजस्य, अवसाने, भवता, योद्धव्यम्, किल, ( तदा ) मम, अपि, अन्तम्, प्रतीक्षस्व, कः, कर्ण., कः, सुयोधनः ॥ ३९ ॥

कर्णमरणानन्तरं सज्जयार्थं तव युद्ध वृथैवेत्याह-अवसान इति । अङ्गराजस्य = कर्णस्य, अवसाने=अन्ते विनाश इत्यर्थ, भवता, योद्धव्यम्, किल, किलशब्दोऽरुचौ एतेन युद्धेऽरुचि. सूच्यते 'वार्तायामरुचौ किल' इति त्रिकाण्डशेषः । ( तदा ) ममापि, अन्तम् = विनाशम्, प्रतीक्षस्व, कस्मात्—कः, कर्णः, कः, सुयोधनः, उभयो. कर्णसुयोधनयोः न कोऽपि भेद इत्यर्थः । अनुष्टुप् छन्दः ॥ ३९ ॥

कर्ण ने श्रुतिमधुर अनेक प्रकार की वातें कहकर रणक्षेत्र में जो कुछ किया है उसे तो आप जानते ही हैं । यह द्रोणतनय अब धनुष की प्रत्यञ्चा चढ़ाकर तथा शत्रुओं को लक्ष्य करके आ गया है । हे राजन् ! प्रतिशोध [ बदला ] करने की चिन्ता को छोड़ दीजिए ॥

दुर्योधन—( व्यङ्ग के साथ ) आचार्यपुत्र,

कर्ण के विनाश होने पर आप युद्ध के लिए खड़े हुए हैं । मेरे विनाश की भी प्रतीक्षा कीजिए । कौन कर्ण और कौन सुयोधन है ? अर्थात् कर्ण में और मुझ में कोई भेद नहीं ॥

अश्वत्थामा—( मन ही मन ) क्यों आज भी कर्ण का पक्षपात और हमलोगों का

च परिभवः । ( प्रकाशम् । ) राजन्कौरवेश्वर, एवं भवतु । (इति निष्क्रान्त ।)

धृतराष्ट्र —वत्स, क एष ते व्यामोहो यदस्मिन्नपि काले एवंविधस्य महाभागस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि ।

दुर्योधनः—किमस्याऽप्रियमनृतं च मयोक्तम् ? किं वा नेद क्रोधस्थानम् ? पश्य ।

अकलितमहिमानं क्षत्रियैरात्तचापैःसमरशिरसि युष्मद्भाग्यदोषाद्विपन्नम् ।
परिवदति समक्षं मित्रमङ्गाधिराजं मम खलु कथयास्मिन्को विशेषोऽर्जुने वा ॥

परिभव' = अनादरः ।

एवंविधस्य = पितुरपि समधिकवलस्य, वाक्पारुष्येण = कर्कशवचनेन, अपरागम् = असन्तोषम् ।

अनृतम् = मिथ्या ।

अन्वय —आत्तचापै', क्षत्रियैः, अकलितमहिमानम् , रणशिरसि, युष्मद्भाग्य दोषात् , विपन्नम् , मित्रम् , अङ्गराजम् , मम, समक्षम् , परिवदति, कथय, खलु, अस्मिन् , अर्जुने, वा क', विशेषः ॥ ४० ॥

क्रोधस्य युक्तत्वमेवाह—अकलितमहिमानमिति । आत्तचापैः = गृहीतधन्वभिः, क्षत्रियैः, अकलितमहिमानम् = अकलितः अविज्ञातः, महिमा पराक्रम. यस्य तम् , वीरक्षत्रियैरपि तस्य पराक्रमपारं न प्राप्तमित्यर्थ'। समरशिरसि रणशिरसि, युष्मद्भाग्यदोषात् , नतु पराक्रमहानादित्यर्थ. । विपन्नम्=मृतम् , मित्रम् , एतेन निन्दाश्रवणा योग्यत्वसूचितम् , अङ्गाधिराजम्=अङ्गदेशाधिपम् , कर्णमित्यर्थः, एतेन महतो निन्दा न कार्येति सूचितम् , मम, समक्षम् = प्रत्यक्षम्, एतेन क्रोधस्यावश्यभावित्वमिति सूचितम् । परिवदति = निन्दति, कथय, खलु = निश्चयेन, कथनक्रियाया. कर्म- अस्मिन्नित्यादिवाक्यम् । अस्मिन्=कर्णनिन्दके, अर्जुने=कर्णघातके, वा, कः, विशेष'=

अपमान ? ( प्रकटरूप से ) राजन् कुरुराज ! ऐसा ही हो ( चला जाता है )

धृतराष्ट्र—बेटा, यह तुम्हें कैसा भ्रम हो गया है कि ऐसे समय में भी इस प्रकार के सज्जन व्यक्ति अश्वत्थामाको कटु वाक्य कहकर तुम क्रुद्ध कर रहे हो ।

दुर्योधन–क्या मैंने इनको अप्रिय और असत्य कहा है ? क्या यह क्रोधकी बात नहीं है ?

धनुर्धर क्षत्रिय वीर जिस के सामर्थ्य को नहीं समझ सकते थे उस मेरे मित्र अङ्गराज [ कर्ण ] की—जो समरभूमि में आपलोगों के दुर्भाग्य के कारण विपद्ग्रस्त हो गए हैं—गर्हा [ निन्दा ] मेरे नेत्रों के सामने कर रहा है, आप ही कहिए—इसमें और अर्जुन में क्या विशेषता है ? अर्थात् कर्ण मेरा मित्र है अर्जुन कर्ण का शत्रु है यह भी कर्ण से शत्रुता का व्यवहार करता है तो यह भी मेरे शत्रु अर्जुन के ही श्रेणी में हुआ ॥ ४० ॥

धृतराष्ट्रः—वत्स, तवापि कोऽत्र दोषः । अवसानमिदानीं भरतकुलस्य । संजय, किमिदानीं करोमि मन्दभाग्यः ? ( विचिन्त्य । ) भवत्वेवं तावत् । संजय, मद्वचनाद् ब्रूहि भारद्वाजमश्वत्थामानम् ।

स्मरति न भवान्पीतं स्तन्यं विभज्य सहामुना
मम च मृदितं क्षौमं बाल्ये त्वदङ्गविवर्तनैः ।
अनुजनिधनस्फीताच्छोकादतिप्रणयाच्च य-
द्वचनविकृतिष्वस्य क्रोधो मुधा क्रियते त्वया ॥ ४१ ॥

संजय—यदाज्ञापयति तातः । ( इत्युत्तिष्ठति । )

धृतराष्ट्र—अपि चेदमन्यत्त्वया वक्तव्यम् ।

---

भेदः न कोऽपि विशेष इत्यर्थः । एवसति मम क्रोधो युक्त एवेति भावः । मालिनीछन्दः ॥

अवसानम् = अन्तम् । मम कुल विनङ्क्ष्यत्येवेत्यर्थः ।

अन्वय.—अमुना, सह, विभज्य, स्तन्यम् , पीतम् , बाल्ये, त्वदङ्गविवर्तनैः, मम, क्षौमम् , मृदितम् , च, भवान् , न, स्मरति; अनुजनिधनस्फीतात् , शोकात् , (कर्णे) अतिप्रणयात् , च, यत् , अस्य, वचनविकृतिषु, क्रोधः, त्वया, क्रियते, (तत् ) मुधा ॥

स्मरतीति । अमुना = दुर्योधनेन, सह, विभज्य = समभाग कृत्वा, स्तन्यम् = गान्धारीस्तनजन्यदुग्धम् , पीतम् , त्वयेति शेषः, बाल्ये = क्रोडस्थापनयोग्यावस्थायाम् , त्वदङ्गविवर्तनैः = अङ्गलिप्तद्रव्यविशेषैः, मम, क्षौमम् = दुकूलम् , पट्टवस्त्रमित्यर्थः । मृदितम् = मलिनीकृतम् , च, भवान् , न, स्मरति । दुर्योधनतुल्यस्त्वमावयोरतस्त्वयाऽप्यावां रक्षणीयौ क्रोध मुक्त्वा योद्धव्य चेति भावः । क्रोधत्यागकारणमेवाह—अनुजेति । अनुजनिधनस्फीतात् = भ्रातृमृत्युप्रक्षालितात् , शोकात् , अतिप्रणयात् , कर्णे इति शेषः । च, यत् , अस्य दुर्योधनस्य, वचनविकृतिषु = वाक्य-

---

धृतराष्ट्र—पुत्र, तुम्हारा भी इसमें क्या अपराध ? अब भरतवंश का अन्तिम समय है । संजय ! मैं अभागा अब क्या करूं ? ( सोचकर ) अच्छा ऐसा ही हो । संजय, मेरी ओर से भारद्वाज अश्वत्थामा से निवेदन कर दीजिए—

'क्यों क्या आपको स्मरण है—'इस दुर्योधन के साथ विभक्त कर अपने क्षीर पान किया है' और शैशवकाल में लोट लोट कर आपने मेरे रेशमी वस्त्रों को मर्दित कर दिया है ।' अपने छोटे भाइयों के संहार से उत्पन्न प्रबल शोक के कारण अथवा प्रेमाधिक्यता से इसके [ दुर्योधन ] अप्रिय वचनों पर आप व्यर्थ ही क्रोध कर रहे हैं ॥ ४१ ॥

संजय—पिताजी की जो आज्ञा । ( खड़ा हो जाते हैं )

धृतराष्ट्र—और भी यह दूसरी प्रार्थना कह देना :—

यन्मोचितस्तव पिता वितथेन शस्त्रं यत्तादृशः परिभवः स तथाविधोऽभूत् ।
एतद्विचिन्त्य बलमात्मनि पौरुषं च दुर्योधनोक्तमपहाय विधास्यतीति ॥४२॥

संजयः—यदाज्ञापयति तातः । ( इति निष्क्रान्तः । )

दुर्योधन—सूत, साङ्ग्रामिकं मे रथमुपकल्पय ।

सूत—यदाज्ञापयत्यायुष्मान् । ( इति निष्क्रान्तः । )

धृतराष्ट्र—गान्धारि, इतो वय मद्राधिपतेः शल्यस्य शिबिरमेव गच्छावः । वत्स, त्वमप्येवं कुरु । ( इति परिक्रम्य निष्क्रान्ताः सर्वे । )

इति पञ्चमोऽङ्कः ।

---

विकारेषु, ( सतीषु ) क्रोधः, त्वया, क्रियते, तदिति शेषः । मुधा = व्यर्थम्, तद्व्यर्थं क्रियत इत्यर्थः । हरिणी छन्दः ॥ ४१ ॥

अन्वय—यत्, तव, पिता, वितथेन, शस्त्रम्, मोचितः, यत्, तादृशः, सः, तथाविधः, परिभवः, अभूत्, एतत्, विचिन्त्य, दुर्योधनोक्तम्, अपहाय, आत्मनि, बलम्, पौरुषम्, विधास्यति ॥ ४२ ॥

अपकार स्मृत्वा योद्धव्यमित्याह—यदिति । यत्, तव = अश्वत्थाम्नः, पिता, वितथेन = अनृतवचसा प्रयोजककर्त्रा शस्त्रम्, मोचितः, ण्यन्तान्मुचधातोः प्रयोज्ये कर्मणि क्तप्रत्ययः । यत्, तादृशः = कदाप्यपरिभूतस्य, द्रोणस्येत्यर्थः । तथाविधः = धृष्टद्युम्नकृतमस्तकस्पर्शादिरूपः, सः = प्रसिद्धः, परिभवः = अनादरः, अभूत् । एतद् = पूर्वोक्तम्, विचिन्त्य = अनुस्मृत्य, दुर्योधनोक्तम् = अवसानेऽङ्गराजस्येत्यादि, अपहाय = त्यक्त्वा, आत्मनि बलम् = सामर्थ्यम्, पौरुषम् = तेजः, विधास्यति । पराक्रमो विधेय इति भावः ॥ ४२ ॥

एवम् = मद्राधिपतेः शिबिरगमनम् ।

इति प्रबोधिनीव्याख्यायां पञ्चमोऽङ्कः ।

---

'असत्यभाषण करके आपके पिता से शस्त्रपरित्याग कराया और वह केशकर्षण रूप परिभव तथा और भी अनेक प्रकार का जो अनादर किया गया है उनका स्मरण करके तथा दुर्योधन के वचनों पर ध्यान न दे करके अपने बल और पुरुषार्थ से कार्य सम्पादन करना ॥

संजय—जो पिताजी की आज्ञा । ( चल देते हैं )

दुर्योधन—सूत ! युद्धोपयुक्त मेरे रथ को तैयार कर दो ।

सूत—महाराज की जो आज्ञा । ( चला जाता है )

धृतराष्ट्र—गान्धारि ! यहां से हम लोग मद्रदेश के राजा शल्य के शिविर को ही चलें । बेटा ! तुम भी यही करो । ( घूमघाम कर सब चले जाते हैं )

पञ्चम अङ्क समाप्त ।

# अथ षष्ठोऽङ्कः ।

( ततः प्रविशत्यासनस्थो युधिष्ठिरो द्रौपदी चेटी पुरुषश्च । )

युधिष्ठिरः—( विचिन्त्य निःश्वस्य च । )

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते

कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।

---

मिथ्याभूतं निखिलभुवनं निश्चयेनोपलभ्य,

प्राप्ताऽलभ्या परमपदवी योगिगम्याऽञ्जसैव ।

पित्रा येन प्रथितयशसा शत्रुचक्रस्य चक्र

तं वन्देऽहं प्रणतशिरसा राघव रामतुल्यम् ॥ १ ॥

अन्वय—भीष्ममहोदधौ, तीर्णे, द्रोणानले, निर्वृते, कर्णाशीविषभोगिनि, प्रशमिते, शल्ये, दिवम्, याते, च, जये, स्वल्पावशेषे, ( सति ) प्रियसाहसेन, भीमेन, रभसात्, वाचा, अमी, सर्वे, वयम्, जीवितसंशयम्, समारोपिताः ॥ १ ॥

सर्वस्मिन् सम्पन्ने केवलं भीमवाङ्मात्रेण प्राणसंशयो जात इत्याह–तीर्णे इति । भीष्ममहोदधौ=भीष्मः गाङ्गेय एव महोदधिः समुद्रः तस्मिन्, तीर्णे=पारं गते, शरशय्यां प्रापिते सतीत्यर्थः । द्रोणानले=द्रोण एवानलः अग्निः तस्मिन्, कथमपि= अश्वत्थामा हत इतिच्छलद्वाराऽस्त्रत्याजनेन, निर्वृते=निःशेषेण शान्ते स्वर्गं प्राप्ते सतीत्यर्थः । कर्णाशीविषभोगिनि=आशिषि अहिदंष्ट्रायां विषमस्य स आशीविषः, पृषोदरादित्वाद्दीर्घसलोपौ स चासौ भोगः शरीरम् तदस्त्यस्येति आशीविषभोगी कर्ण एवाशीविषभोगी, "आशीर्हिताशंसाहिदंष्ट्रयो" रित्यमरः । 'भोगः सुखे धने पुंसि शरीरफणयोर्मतः' इति मेदिनी । प्रशमिते=विनाशिते, शल्ये=मद्राधिपतौ, दिवम्=

---

( अनन्तर युधिष्ठिर सिंहासन पर सुशोभित हो रहे हैं। द्रौपदी, चेटी और पुरुषका प्रवेश)

**युधिष्ठिर**—( सोचकर तथा दीर्घ श्वास लेकर [ आह भर कर ] )

भीष्म पितामहरूपी समुद्र पार कर गए। द्रोणाचार्य्यरूपी आग भी बुझ गई। कर्णरूपी उत्कण विषयुक्त महासर्प शान्त हो चुका। शल्य भी स्वर्लोक का अतिथि बन गया। अतएव विजयलाभ अत्यन्त सन्निकट रह गया है [ तो भी ] साहसप्रेमी भीमसेन ने प्रतिज्ञा से हम सब लोगों के जीवन को संकटापन्न कर दिया है। तात्पर्य्य यह है कि भीमसेन ने प्रतिज्ञा किया था, 'आज ही मैं दुर्योधन को समाप्त कर डालूँगा और यदि कार्य पूरा न कर सका तो प्राण परित्याग कर दूँगा' ऐसी परिस्थिति में दुर्योधन का पता नहीं था। भीम किस प्रकार अपनी प्रतिज्ञा की पूर्ति करते अन्ततो गत्वा उन्हें प्राण छोड़ना ही पड़ता। युधिष्ठिर की प्रतिज्ञा थी कि एक भाई यदि मेरा मारा गया तो मैं भी जीवित नहीं रहूँगा।

भीमेन प्रियसाहसेन रभसात्स्वल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥ १ ॥

द्रौपदी—( सबाष्पम् । ) महाराज, पञ्चालिए त्ति किं ण भणिदम् ? ( महाराज, पाञ्चाल्येति किं न भणितम् ।

युधिष्ठिरः—कृष्णे, ननु मया । ( पुरुषमवलोक्य । ) बुधक,

पुरुषः—देव, आज्ञापय ।

युधिष्ठिरः—उच्यतां सहदेवः—'क्रुद्धस्य वृकोदरस्यापर्युषितां प्रतिज्ञामुपलभ्य प्रनष्टस्य मानिनः कौरवराजस्य पदवीमन्वेष्टुमतिनिपुणमतयस्तेषु तेषु

स्वर्गम्, याते, च, सति, प्रियसाहसेन=प्रियः साहसो यस्य तेन, भीमेन, जये, अल्पावशेषे, सति, रभसात्=वेगात्, 'रभसो वेगहर्षयो'रिति विश्वः । वाचा=प्रतिज्ञारूपया अमी, वयम्=पाण्डवाः, सर्वे, जीवितसंशयम्=प्राणसंशयं यथा स्यात्तथा, समारोपिताः=गमिताः, प्रापिता इत्यर्थः । भीमकृताया 'अद्य दुर्योधनं हनिष्यामी'ति प्रतिज्ञायाः पूर्त्यभावे, 'अहनने स्वयं मरिष्यामो'ति द्वितीयप्रतिज्ञापूर्त्यर्थं भीमो मरिष्यति, तथाच वयमपि सर्वे मरिष्याम इति भावः । शार्दूलविक्रीडितं छन्दः ॥ १ ॥

पाञ्चाल्येति—पाञ्चाल्या जीवितसंशयं समारोपिता इति किन्न भणितमित्यन्वयः । मत्केशाम्बराकर्षणोत्पन्नक्रोधेनैव भीमेन तादृशप्रतिज्ञाकरणात्प्राणसंशयेऽहमेव कारणमतः उक्तं पाञ्चाल्येतीति भावः ।

प्रयोजकत्वेन यदि त्वयोक्तं पाञ्चाल्येति तदा सर्वानर्थहेतुद्यूतस्य मयैव करणादहमेव प्राणसंशये कारणमिति युधिष्ठिर आह—ननु मयेति । मया जीवितसंशयं समारोपिता इत्यन्वयः ।

अपर्युषिताम्=न परदिनसम्पादनीयाम्, प्रतिज्ञाम्=दुर्योधनोरुभङ्गमद्यैव करिष्यामीतिरूपाम्, उपलभ्य=ज्ञात्वा, प्रनष्टस्य=अदर्शनं गतस्य, निलीनस्येत्यर्थः । पदवीम्=स्थानम्, अतिनिपुणमतयः=अतिनिपुणाः विवेकिन्यः मतयः ज्ञानानि

अतः भीम के मरने पर युधिष्ठिर भी मर जाते और उनके मरने पर शेष पाण्डव भी समाप्त हो जाते इसी लिए उन लोगों का जीवन संकट में पड़ा हुआ था ॥ १ ॥

द्रौपदी—( सजल नेत्रों से ) महाराज ! पाञ्चाली [ द्रौपदी ] का नाम क्यों नहीं लिया ? अर्थात् द्रौपदी ने ही सब के जीवन को संकट में डाल दिया है यह क्यों नहीं कहते ?

युधिष्ठिर—मैंने ही ·· · ( एक पुरुष को देखकर ) बुधक !

पुरुष—महाराज ! क्या आज्ञा है ?

युधिष्ठिर—सहदेव से कह दो—'क्रोध के आवेश में होकर 'आज ही दुर्योधन का वध कर डालूँगा अन्यथा स्वयं प्राण परित्याग कर दूंगा' इस प्रकार की भीमसेन की प्रतिज्ञा

स्थानेषु परमार्थाभिज्ञाश्चराः सुसचिवाश्च भक्तिमन्तः पटुपटहरवव्यक्तघोषणाः सुयोधनपदसंचारवेदिनः प्रतिश्रुतधनपूजाप्रत्युपक्रियाश्चरन्तु समन्तात्समन्तपञ्चकम् । अपि च ।

पङ्के वा सैकते वा सुनिभृतपदवीवेदिनो यान्तु दाशाः
कच्छेषु क्षुण्णवीरुन्निचयपरिचया बल्लवाः संचरन्तु ।

येषाम् , सुसचिवाः = उत्तममन्त्रिणः, भक्तिमन्तः = स्वामिसेवातत्पराः, पटुपटहरवव्यक्तघोषणाः = पटुर्यो पटहरवः, ढक्काशब्दः तेन व्यक्ता घोषणा येषां ते, सुयोधनपदसञ्चारवेदिनः = सुयोधनस्य यः पदसञ्चारः गमनम् तस्य वेत्तारः, प्रतिश्रुतधनपूजाप्रत्युपक्रिया = प्रतिश्रुता अङ्गीकृता धनपूजाप्रत्युपक्रियाः यैः ते, समन्तपञ्चकम् = देशविशेषम् , समन्तात् = सर्वतः, चरन्तु ।

अन्वयः—सुनिभृतपदवीवेदिनः , दाशाः, पङ्के, वा, सैकते, वा, यान्तु, क्षुण्णवीरुन्निचयपरिचयाः, वल्लवाः कच्छेषु, सञ्चरन्तु, श्वपचपुरविदः, नागव्याघ्राटवीषु, ( सञ्चरन्तु ) ये, च, रन्ध्रेषु, अभिज्ञाः, वा, सिद्धव्यञ्जनाः, ते, च, चाराः, प्रतिमुनिनिलयम् , चरन्तु ॥ २ ॥

के चाराः कुत्र कुत्र सञ्चरन्तु, इत्युपदिशति—पङ्के वेति । सुनिभृतपदवीवेदिनः = गुप्तस्थानज्ञायिनः, दाशाः = धीवराः, मत्स्यघातकाः इत्यर्थः । पङ्के = पङ्किलप्रदेशे, वा, सैकते = वालुकामयतटे, वा, यान्तु, धीवराणामेव तत्र कुशलत्वादिति भावः । क्षुण्णवीरुन्निचयपरिचयाः = क्षुण्णः विदलितो यो वीरुन्निचयः प्रतानिलतासङ्घः । शाखापत्रसंचयवती लता प्रतानिनी सैव वीरुध्-शब्देनोच्यते; तस्य परिचयः ज्ञानं येषां ते, वल्लवाः = गोपाः 'गोपे गोपालगोसंख्यगोधुगाभीरवल्लवा, इत्यमरः । कच्छेषु = अरण्येषु, सामान्यवनेष्वित्यर्थः । 'कक्षः स्मृतो भुजामूले कक्षोऽरण्ये च वीरुधि' इति धरणिः । सञ्चरन्तु, गोसंचारणोपयोगित्वेन गोपानां तत्राभिज्ञत्वादिति भावः । श्वपच-

सुनकर छिपे हुए अहङ्कारी दुर्योधन के पदचिह्न का अन्वेषण करने के लिए अतीव दक्ष तथा यथार्थ ज्ञानशाली दूत तथा सन्मन्त्री, जो राजभक्त हों, 'सुयोधन के पता देने वाले व्यक्तियों को द्रव्य और प्रतिष्ठा से सत्कार किया जायगा' इस प्रकार की घोषणा स्पष्ट डुग्गी के शब्द से करते हुए समन्तपञ्चक [ पिण्डारा, समरा, रामहृद और कुरुक्षेत्र ] की ओर प्रस्थान करें ।' और भी —

कर्दम [ कीचड ] तथा बालुकापूर्ण प्रदेश पर पडे हुए अव्यक्त भी पदचिह्नों का ज्ञान रखने वाले मल्लाह प्रस्थान करें। नदियों के कछार में वे ग्वाले [ चरवाहे ] भेजे जाँय जिन्हें पददलित होने पर भी उन उन तृणों का पूर्ण परिचय हो। नाग ( हाथी, सर्प ) और व्याघ्रों से युक्त सघन वनों में वे भेजे जायें जिन्हें चाण्डालों के निवासस्थानों

नागव्याघ्राटवीषु श्वपचपुरविदो ये च रन्ध्रेष्वभिज्ञा
ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं ते च चाराश्चरन्तु ॥ २ ॥'

पुरुषः—यथाऽऽज्ञापयति देवः ।

युधिष्ठिरः—तिष्ठ । एवं च वक्तव्यः सहदेवः ।

ज्ञेया रहः शङ्कितमालपन्तः सुप्ता रुगार्ताश्च वने विचेयाः ।

---

पुरविदः=चाण्डालपुरीवेदिनः, नागव्याघ्राटवीषु=हस्तिव्याघ्रप्रधानवनेषु, स्वपरपदविद इति पाठे तु व्याधाः, व्याधाटवीषु, यान्तु स्वपरपदविदः=स्वपरस्थानवेदिनः, सर्वत्र सञ्चरणशीला इत्यर्थः । अस्य रन्ध्रेष्वभिज्ञा इत्यनेनान्वयः । ये च, रन्ध्रेषु=छिद्रेषु परच्छिद्रेष्वित्यर्थः । अभिज्ञाः=कुशलाः, वा=अथवा, ये, सिद्धव्यञ्जनाः=सिद्धस्य मुनेः व्यञ्जनम् चिह्नमिव चिह्नं येषां ते मुनिवेषधारिण इत्यर्थः । ते च, चाराः=चराः 'चरोऽक्षद्यूतभेदे च भौमे चारे, इति मेदिनी । खुपिया इति प्रसिद्धः, आङ्गलभाषायाम् सी० आइ० डी० इति ख्यातः । प्रतिमुनिनिलयम्=प्रतियतिस्थानम् , वीप्सायामव्ययीभावसमासः । चरन्तु=गच्छन्तु तेषां तत्र गमनयोग्यत्वादितिभावः । स्रग्धरा छन्दः ॥ २ ॥

वक्तव्य इति—वक्तव्य इति गौणे कर्मणि तव्यप्रत्ययः ।

अन्वयः—रहः शङ्कितम् , आलपन्तः (ज्ञेयाः) सुप्ताः, रुगार्त्ताः, च, (ज्ञेयाः) वने, विचेयाः, यत्र, मृगाणाम् , त्रासः, वयसाम् , विरावः, नृपाङ्कपादप्रतिमा, च, (ते प्रदेशा विचेया ) ॥ ३ ॥

किं वक्तव्य इति मुख्य कर्माह—ज्ञेया रहः शङ्कितमिति । रहः=विजने, एकान्त इत्यर्थः, रह इत्यव्ययम् । 'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः । रहश्चोपांशु चालिङ्गे' इत्यमरः । शङ्कितम्=साशङ्कं यथा स्यादेवम्, आलपन्तः=परस्परं भाषमाणाः, जना इति शेषः । ज्ञेयाः=ज्ञातव्याः, किमेते दुर्योधनविषयकमालापं कुर्वन्ति उतान्यविषयकमिति ज्ञातव्यमिति भावः । सुप्ताः=शयिताः, रुगार्ताः=रोगपीडिताः, च, ज्ञेया इत्यस्यात्राप्यन्वयः । एषु निद्रारोगव्याजेन दुर्योधनः स्थितो नवेति ज्ञातव्यमित्याशयः । वने=अरण्ये, विचेयाः=अन्वेषणीयाः, अन्वेषणस्थानमेवाह—त्रासो

---

[illegible] का पूर्ण ज्ञान हो । प्रत्येक तपस्वियों के आश्रमों में सिद्ध [illegible] के वेष में [illegible] भ्रमण करें अर्थात् जो जिस तरह के स्थान से पूर्ण परिचित हो उसे [illegible] स्थान में दुर्योधन का पता लगाने के लिए भेजा जाय ॥ २ ॥

पुरुष—[illegible] ।

युधिष्ठिर—ठहरो, सहदेव से इस प्रकार भी कह देना :—

[illegible] वार्तालाप करते हुए लोगों की [illegible] कर लेना ।

त्रासो मृगाणां वयसां विरावो नृपाङ्कपादप्रतिमा च यत्र ॥ ३ ॥

पुरुषः—यदाज्ञापयति देवः । ( इति निष्क्रम्य, पुनः प्रविश्य सहर्षम् । ) देव पाञ्चालकः प्राप्तः ।

युधिष्ठिरः—त्वरितं प्रवेशय ।

पुरुषः—( निष्क्रम्य, पाञ्चालकेन सह प्रविश्य । ) एष देवः । उपसर्पतु पाञ्चालकः ।

पाञ्चालकः—जयतु जयतु देवः । प्रियमावेदयामि महाराजाय देव्यै च ।

युधिष्ठिरः—भद्र पाञ्चालक, कच्चिदासादिता तस्य दुरात्मनः कौरवाधमस्य पदवी ?

---

मृगाणामिति । यत्र = यस्मिन् स्थाने, मृगाणाम् = हरिणानाम्, त्रासः = भयम्, यत्र जनस्तिष्ठति ततो भीताः मृगाः पलायन्तेऽतस्तत्र स जनो दुर्योधनो नवेति ज्ञानार्थं स प्रदेशोऽन्वेषणीय इति भावः । एवमग्रेऽपि । वयसाम् = पक्षिणाम्, विरावः=शब्दः, नृपाङ्कपादप्रतिमा = नृपस्य अङ्कश्चिह्नं चक्रादयः यस्मिन् स नृपाङ्कः स चासौ पादः नृपाङ्कपादः तस्य या प्रतिमा प्रतिकृतिः, च ( यत्र तिष्ठेत्ते प्रदेशा विचेयाः ) । उपजातिश्छन्दः ॥ ३ ॥

वनप्रदेशादागतं पाञ्चालकं दृष्ट्वा तदागमननिवेदनायाह—देव पाञ्चालकः प्राप्त इति। देव=राजन् , पाञ्चालकः=तन्नामकदूतविशेषः। अथवा पञ्चालदेशोत्पन्नः कश्चित्।

त्वरितम् = शीघ्रम्, प्रवेशय, पाञ्चालकमिति शेषः ।

उपसर्पतु = समीपं चलतु ।

प्रियम् = मनोऽभिलषितम्, आवदेयामि = कथयामि, देव्यै = द्रौपद्यै ।

कच्चिदिति—कच्चिच्छब्दः कामप्रवेदने प्रयुज्यते, कामप्रवेदनम् इष्टप्रश्नः । तस्य

---

सोये हुए रागपीडित तथा मदिरापान से उन्मत्त प्राणियों के विषय में अच्छी तरह समझ लेना । हरिणादिकों के भयभीत होने से तथा पक्षियों के कोलाहल से भी अनुमान करना और जहाँ मत्स्यादिक राजचिह्न पदाङ्क में हों वहा भी अन्वेषण कर लेना ॥ ३ ॥

पुरुष—महाराज की आज्ञा शिरोधार्य ( चला जाता है पुनः प्रवेश करके प्रसन्नता के साथ ) महाराज ! पाञ्चालक आ गया ।

युधिष्ठिर—शीघ्र ही बुला लाओ ।

पुरुष—( निकलकर पाञ्चालक के साथ प्रवेश करके ) यह महाराज हैं, पाञ्चालक ! समीप चलिए ।

पाञ्चालक—जय हो महाराज की । महाराज तथा महारानी को सुखसवाद सुनाने जा रहा हूँ ।

युधिष्ठिर—सौम्य पाञ्चालक ! क्यों क्या उस दुरात्मा कौरवनीच का कहीं पता चला ?

पाञ्चालक—न केवलं पदवी। स एव दुरात्मा देवीकेशाम्बराकर्षणमहापातकप्रधानहेतुरुपलब्धः।

युधिष्ठिर—साधु भद्र, प्रियमावेदितम्। अथ दर्शनगोचरं गतः?

पाञ्चालक—देव, समरगोचरं पृच्छ।

द्रौपदी—( सभयम्। ) कहं समरगोअरो वट्टइ मे णाहो ? ( कथं समरगोचरो वर्तते मे नाथ ? )

युधिष्ठिर—( साशङ्कम्। ) सत्यं समरगोचरो मे वत्सः ?

पाञ्चालक—सत्यम्। किमन्यथा वक्ष्यते महाराजाय।

---

दुरात्मनः=दुष्ट आत्मा अन्तःकरणावच्छिन्नं चैतन्यं यस्य तस्य, पदवी=स्थानम्, आसादिता=प्राप्ता।

देवीकेशाम्बराकर्षणमहापातकप्रधानहेतुः=देव्याः द्रौपद्याः यत्केशाम्बराकर्षणं कचवस्त्राकर्षः तदेव महापातकम् महापापः तस्य प्रधानहेतुः। एतस्यैवाज्ञया दुःशासनेन केशवस्त्राकर्षणमकारीत्ययमेव प्रधानहेतुरिति भावः। उपलब्धः=प्राप्तः।

प्रियम्=इष्टम्, आवेदितम्=कथितम्। यदि स न मिलेत्तदा दुर्योधनस्य श्वो जघनं त्रोटयिष्यामीतिपञ्चमाङ्कपञ्चत्रिंशच्छ्लोकोक्तप्रतिज्ञापूर्त्यभावे भीमस्य स्वयं प्राणत्यागेन तद्दुःखासहनादस्माकमपि मृत्युः स्यात्, तच्च नाभूदित्युच्यते प्रियमावेदितमिति। दर्शनगोचरम्=दृष्टिविषयम्, गतः=प्राप्तः, दृष्ट इत्यर्थः।

समरगोचरम्=सङ्ग्रामविषयम् संग्रामनिरूपितविषयता च याचितमण्डनन्यायेन।

---

पाञ्चालक—महाराज, उसके पदका चिह्न ही केवल नहीं प्राप्त हुआ है किन्तु महारानी के केशपाश के स्पर्शमे जनितपाप का जो प्रधान कारण है वही प्राप्त हो गया।

युधिष्ठिर—( प्रसन्नताके साथ पाञ्चालकको हृदय से लगाकर ) साधु सौम्य! साधु। आपने सुखसम्वाद सुनाया है। क्या नेत्र के सामने दिखलाई पडा ?

पाञ्चालक—महाराज, युद्धगोचर पूछिये [ नेत्रगोचर क्या पूछते हैं ? ]

द्रौपदी—( भय के साथ ) क्या मेरे स्वामी युद्ध कर रहे हैं ?

युधिष्ठिर—( सशङ्क भावसे ) सत्य ही क्या मेरा प्रिय अनुज युद्ध कर रहा है ?

पाञ्चालक—सत्य ही है तो क्या महाराज से असत्य भाषण करूँगा ?

युधिष्ठिर —

त्रस्तं विनाऽपि विषयादुरुविक्रमस्य
चेतो विवेकपरिमन्थरतां प्रयाति ।
जानामि चोद्यतगदस्य वृकोदरस्य
सारं रणेषु भुजयोः परिशङ्कितश्च ॥४॥

( द्रौपदीमवलोक्य । ) अयि सुक्षत्रिये,

गुरूणां बन्धूनां क्षितिपतिसहस्रस्य च पुरः
पुराऽभूदस्माकं नृपसदसि योऽय परिभवः ।

अन्वयः—विषयाद्, विनाऽपि, त्रस्तम्, मे, चेत., विवेकपरिमन्थरताम्, प्रयाति, उरुविक्रमस्य, उद्यतगदस्य, च, वृकोदरस्य, सारम्, रणेषु, जानामि, ( तथापि ) परिशङ्कितः, च, ( अस्मि ) ॥ ४ ॥

प्रियत्वादेव भीमस्य विजयः स्यान्नवेत्याशङ्कते चेतो विजयस्तु स्यादेवेत्याह—त्रस्त विनाऽपीति । विषयात् = त्रासहेतोः, विनाऽपि = अन्तरेणापि, त्रस्तम्=उद्विग्नम्, मे चेतः, विवेकपरिमन्थरताम्=भीमविजयनिश्चये मान्द्यम्, प्रयाति = प्राप्नोति, उद्विग्नस्यावधारणकरणेऽसामर्थ्यादिति भाव । उद्वेगश्च स्वजनत्वात् । उरुविक्रमस्य = बहुपराक्रमिण', उद्यतगदस्य = उद्यता उत्थापिता गदा येन स. तस्य, च, वृकोदरस्य, रणेषु = सङ्ग्रामेषु, सारम् = वलम्, 'सारो वले स्थिरांशे चे'त्यमर'। जानामि, तथापि परिशङ्कितः=शङ्काव्याप्तः, भीमस्य विजयः स्यान्नवेति । च अहमिति शेषः । वलज्ञाने न मया शङ्कनीयो भीमविजये इति भावः । क्वचित्, रणेष्वित्यत्र भुजयोरिति पाठ' । भुजयो. = वाह्वोः, सार जानामि तथापि परिशङ्कित इति विरुद्धमिदम् । अत्र शङ्काऽभावकारणस्य सारज्ञानस्य सत्त्वेऽपि शङ्कासत्त्वाद् विशेषोक्तिरलङ्कारः । वसन्ततिलका छन्द' ॥ ४ ॥

अन्वय —(हे) प्रिये, गुरूणाम्, वन्धूनाम्, क्षितिपतिसहस्रस्य, च, पुरः, नृपसदसि, अस्माकम्, य., अयम्, परिभवः, पुरा, अभूत्, तस्य, द्वितयम्, अपि, प्रायः, पारम्, गमयति, अद्य, नः, प्राणानाम्, क्षयः, वा, कुरुपतिपशोः, निधनम् ॥ ५ ॥

गुरूणामिति । (हे) प्रिये = द्रौपदि, गुरूणाम् = द्रोणभीष्मादीनाम्, वन्धूनाम् =

युधिष्ठिर—पराक्रमी पुरुष का मन विना किसी कारण के ही भयभीत हो कर विचार करने में शिथिल पड जाता है । गदा उठाकर तय्यार भीमसेन के भुजवल को युद्ध में मैं अच्छी तरह जानता हूँ तो भी मन अनेक प्रकार के सकल्पविकल्प में गोता लगा रहा है ॥४॥

( द्रौपदी को देखकर ) अयि क्षत्रियप्रवरे ! पूज्यप्रवरों, कुटुम्बियों तथा सहस्रों भूमिपालों के समक्ष राजसभा में पहले जो यह हम लोगों का अपमान हुआ है उसके पार दो ही

प्रिये प्रायस्तस्य द्वितयमपि पारं गमयति

क्षयः प्राणानां नः कुरुपतिपशोर्वाऽद्य निधनम् ॥ ५ ॥

अथवा कृतं सन्देहेन ।

नूनं तेनाऽद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।

वध्यते केशपाशस्ते स चास्याकर्षणक्षमः ॥ ६ ॥

---

दान्धवानाम् , क्षितिपतिसहस्रस्य = सहस्रसंख्याकपृथ्वीपतीनाम् , च, पुरः = अग्रे, एतेन श्रेष्ठजनादीनामग्रे परिभवोऽतीवदुःखजनक इति सूचितम् । नृपसदसि = राजसभायाम् , न तु साधारणस्थान इत्यर्थः । अस्माकम् , नतु एकस्य, यः, अयम् = सर्वजनवेद्यः, परिभव = स्त्रीकेशवस्त्राकर्षणरूपानादर', पुरा = प्राक् द्यूते पराजयोत्तरकाले, अभूत् । तस्य द्वितयम् = उभयम् , अपि, अपिरत्र एवार्थे । द्वितयमेवेत्यर्थः । प्रायः=बाहुल्येन, पारम् = अन्तम , प्रतिक्रियामिति यावत् । गमयति=प्रापयिष्यति, क्रियाकारकमुभयमित्याह—क्षय' प्राणानामिति । अद्य, नः = अस्माकम् , प्राणानाम्, क्षयः = विनाश. । अस्माकं मरणमित्यर्थः । वा = अथवा, कुरुपतिपशोः = कुरुपतिः दुर्योधनः पशुरिव तस्य, निधनम्=विनाशः, मरणमित्यर्थ. । अद्य भीमेन दुर्योधनस्य विनाश. स्यादथवा भीमो द्वितीयप्रतिज्ञापूर्त्यर्थं स्वयमेव मरिष्यति तथा च तदभावे वयमपि प्राणान् त्यक्ष्याम इति भावः । क्षयः प्राणानां न इत्युत्तरं कुरुपतिनिधनस्य कथनात्तस्यैव मरण स्यान्नचास्माकमिति ध्वनितम् । अत्र भूतपूर्वस्य परिभवस्य अयमिति प्रत्यक्षविषयबोधकशब्देन निर्देशाद्भाविकमलङ्कारः । शिखरिणी छन्द. ॥५॥

यत्कुरुपतिमरणं ध्वनितं तदेव शब्देनाह—अथवा कृतमिति ।

अन्वय —प्रतिज्ञाभङ्गभीरुणा, तेन, अद्य, ते, केशपाश , अस्य, आकर्षणक्षमः, स च, नूनम्, वध्यते ॥ ६ ॥

नूनमिति । प्रतिज्ञाभङ्गभीरुणा=तव केशपाशस्याबन्धने दुर्योधनस्यावधे च तस्य प्रतिज्ञाभङ्गः स्यादतस्तस्माद्भीरु' तेन, वीरेण, ते = तव, केशपाशः = कचकलापः, अस्य = केशपाशस्य, आकर्षणक्षमः = आकर्षणे प्रभु', कारणमित्यर्थ. । सः=दुर्योधनः, च, अद्य, नूनम् = निश्चयम् इद क्रियाविशेषणम् । वध्यते = सयम्यते, अथ च हन्यते । वध्यत इति बन्धनार्थकबन्धधातो., हिंसार्थकवधधातोश्च निष्पाद्य तन्त्रेण

---

जातें हमलोगों को पहुंचा सकती है—हम लोगों के प्राणों का अवसान या पशुतुल्य [ जडमति ] कौरवनरेश [ सुयोधन ] का आज ही मरण ॥ ५ ॥

अथवा शङ्का का अवसर ही क्या ?

आज निश्चय है कि प्रतिज्ञा के खण्डित होने में कायर वह वीर [ भीमसेन ] तुम्हारे इस केशकलाप को और इसके आकृष्ट करने में समर्थ [ दुर्योधन ] को भी बाँधेगा ॥ ६ ॥

पाञ्चालक, कथय कथय, कथमुपलब्धः स दुरात्मा कस्मिन्नुद्देशे किं वाऽधुना प्रवृत्तमिति ।

द्रौपदी—भद्द, कहेहि, कहेहि । ( भद्र, कथय, कथय । )

पाञ्चालकः—शृणोतु देवो देवी च । अस्तीह देवेन हते मद्राधिपतौ शल्ये गान्धारराजकुलशलभे सहदेवशस्त्रानलप्रविष्टे सेनापतिनिधननिराक्रन्दविरलयोधोज्झितासु समरभूमिषु रिपुबलपराजयोद्धतवल्गितविचित्रपराक्रमासादितविमुखारातिचक्रासु धृष्टद्युम्नाधिष्ठितासु च युष्मत्सेनासु

निर्देशः । तव केशबन्धनं दुर्योधनवधश्च स्यादिति भावः । अत्र द्वयोः प्रस्तुतयोर्बध्यत इति क्रियायामन्वयात् तुल्ययोगिताऽलङ्कारः तथा हेतोः पदार्थगतत्वेन काव्यलिङ्गञ्च । अनुष्टुप् छन्दः ।

उपलब्धः=प्राप्तः, उद्देशे=स्थाने, प्रवृत्तम्=आरब्धम्, इति इदं कथयेत्यस्य कर्म ।

देव=युधिष्ठिरः, देवी=द्रौपदी, च शृणोत्वित्यस्य प्रत्येकमन्वयः । किं शृणोतु इत्याह—अस्तीहेति । इह=भवदुक्तप्रश्नविषये, अस्ति, इदमिति शेष. । तस्यार्थः वक्ष्यमाणं वाक्यम् । मद्राधिपतौ=मद्रदेशराजे, शल्ये, हते, ( सति ) गान्धारराजकुलशलभे=गान्धारदेशस्य यो राजा तस्य यत्कुलम् तदेव शलभः पतङ्गः अग्निमभिमुखीकृत्य पतनेच्छुः जन्तुविशेषः तस्मिन्, सहदेवशस्त्रानलप्रविष्टे=सहदेवस्य शस्त्रम् अनलः अग्नि. तत्र प्रविष्टे ( सति ) दुर्योधनमातुलशकुनौ सहदेवेन हते सतीत्यर्थः । सेनापतिनिधननिराक्रन्दविरलयोधोज्झितासु=सेनापतेः शल्यस्य निधनेन मरणेन ये निराक्रन्दविरलयोधाः निस्तब्धस्वल्पभटाः तैः उज्झितासु त्यक्तासु, समरभूमिषु=सङ्ग्रामस्थानेषु, रिपुबलपराजयोद्धतवल्गितविचित्रपराक्रमासादितविमुखारातिचक्रासु=रिपुबलपराजयेन उद्धतम् अयथायोग्यम् यत् वल्गितम् गतिविशेष. तच्च, विचित्रपराक्रमश्च, ताभ्याम् आसादितम् आक्रान्तम् विमुखारातिचक्रम् पराङ्मुखशत्रुसमूहः याभिः ( कर्त्रीभिः ) तासु, अस्य, युष्मत्सेनासु, इत्यत्रान्वयः । धृष्टद्युम्नाधिष्ठितासु=द्रुपदपुत्राधिकृतासु, युष्मत्सेनासु, कृपकृतवर्माश्वत्थामसु, प्रनष्टेषु=अदर्शनं गतेषु, पलायितेष्विति यावत् । कुमारवृकोदरस्य,

पाञ्चालक ! कहो कहो किस प्रकार और किस स्थान पर वह पापमति [ दुर्योधन ] पाया गया और अब क्या कर रहा है ?

द्रौपदी—सौम्य ! कहिए, कहिए ।

पाञ्चालक—सुनिए महाराज और महारानी ! आपके द्वारा मद्रनरेश शल्य के वध हो जाने पर, गान्धार के राजकुल में फतिङ्गे के समान शकुनि के सहदेव के शस्त्ररूपी अग्नि

अनष्टेपु कृपकृतवमाश्वत्थामसु तथा दारुणामपर्युषितां प्रतिज्ञामुपलभ्य कुमारवृकोदरस्य न ज्ञायते क्वापि प्रलीनः स दुरात्मा कौरवाधमः।

युधिष्ठिरः—ततस्ततः।

द्रौपदी—अयि, परदो कहेहि। (अयि, परतः कथय।)

पाञ्चालक—अवधत्तां देवो देवी च। ततश्च भगवता वासुदेवेनाधिष्ठितमेकरथमारूढौ कुमारभीमार्जुनौ समन्तात्समन्तपञ्चकं पर्यटितुमारब्धौ तमनासादितवन्तौ च। अनन्तरं दैवमनुशोचति मादृशे भृत्यवर्गे दीर्घमुष्णं च निःश्वसति कुमारे बीभत्सौ जलधरसमयनिशासञ्चारित-

तथादारुणाम् = अद्य दुर्योधनवधाभावे निजवधरूपाम्, प्रतिज्ञाम्, उपलभ्य=ज्ञात्वा स., दुरात्मा = दुष्टान्तःकरणः, कौरवाधमः=कुरुकुलेषु नीचः, क्वापि=कस्मिंश्चित्स्थाने, प्रलीनः = प्रच्छन्नः (इति) न, ज्ञायते इत्यन्वयः।

परतः = अग्रे।

अवधत्ताम् = अवधानं दत्ताम्, सावधानतया शृणोत्वित्यर्थः, देवीदेवौ शृणुतामित्यर्थ। वासुदेवेन=कृष्णेन, अधिष्ठितम् = अध्यासितम्, एकरथम्, आरूढौ=व्याप्तौ समन्तात् = सम्यक्, समन्तपञ्चकम् = देशविशेषम्, पर्यटितुम् = भ्रमितुम् आरब्धौ, तम् = दुर्योधनम्, अनासादितवन्तौ=अप्राप्तवन्तौ, च पर्यटनेनापि न प्राप्तावित्यर्थः। अनन्तरम् = दुर्योधनाप्राप्त्युत्तरकाले, मादृशे = कार्यासमर्थे, भृत्यवर्गे = अनुचरसमुदाये, दैव = भाग्यम्, अनुशोचति=चिन्तयति, शतृप्रत्ययान्तोऽयम्। एवमग्रेऽपि। सति, कुमारे बीभत्सौ=राजपुत्रार्जुने, दीर्घम्, उष्णम् च यथा स्यात्तथा, निःश्वसति= श्वास गृह्णति, श्वासप्रश्वासौ कुर्वति सतीत्यर्थः। वृकोदरे = भीमे, जलधरसमयनिशासंचारिततडित्प्रकरपिङ्गलैः = जलधरसमयस्य वर्षाकालस्य या निशा रात्रिः तस्यां

में प्रवेश करके जल जाने पर; सेनापतियों के मारे जाने पर तथा बचे हुए योद्धाओं के धीरे [चुपके] से समरभूमिका परित्याग कर देने पर जब शत्रुसैन्य के पराजित होनेसे उद्धत चेष्टा तथा प्रशंसनीय पराक्रम के साथ युद्धपराङ्मुख शत्रुसमूहों को बगल से आप की सेनाके वीर पकड रहे थे तथा कृप, कृतवर्मा और अश्वत्थामा कहीं इधर उधर छिपे हुए थे, उस समय दुष्ट तथा कौरवनीच दुर्योधन कुमार भीमसेन की भीषण प्रतिज्ञा को, जो आज ही पूर्ण होने को है, सुनकर नहीं जाना जाता कि कहीं गुप्त रूप से छिपा हुआ है?

**युधिष्ठिर**—तो फिर क्या हुआ?

**द्रौपदी**—अयि! आगे कहो।

**पाञ्चालक**—ध्यान दीजिए महाराज और महारानी! इसके अनन्तर भगवान् वासुदेव

तडित्प्रकरपिङ्गलैः कटाक्षैरादीपयति गदां वृकोदरे यत्किञ्चनकारितामधिक्षिपति विधेर्भगवति नारायणे कश्चित्संविदितः कुमारस्य मारुतेरुज्झितमांसभारः प्रत्यग्रविशसितमृगलोहितचरणनिवसनस्त्वरमाणोऽन्तिकमुपेत्य पुरुषः परुषश्वासग्रस्तार्द्धश्रुतवर्णानुमेयपदया वाचा कथितवान्—'देव कुमार,

याः सञ्चारिताः तडितः तासां प्रकरः विद्युत्समुदाय इत्यर्थः। तद्वत्पिङ्गलैः कपिलैः 'कडार' कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ' इत्यमरः। कटाक्षैः=अपाङ्गदर्शनैः, गदाम्, आदीपयति=ज्वलयति, गदामधिककान्तिमतीं कुर्वति सतीत्यर्थः। विधेः=दैवस्य, यत्किञ्चनकारिताम्=यत्किञ्चन अन्यदेव अन्यदेव तत्कर्तुं शीलमस्य स यत्किञ्चनकारी अयोग्यविधायकः तस्य भावः ताम्, असम्भाव्यकारितामित्यर्थः। अधिक्षिपति=निन्दयति सति। कुमारस्य, मारुतेः=मरुतस्यापत्यं मारुतिः तस्य भीमस्य 'अत इञ्' इतीञ् प्रत्ययः। मरुतशब्दोऽदन्तोऽप्यस्ति 'मरुतः स्पर्शनः प्राणः समीरो मरुत्' इति विक्रमादित्यकोशात्। संविदितः=परिचितः, अथवा संविदित वृत्तान्तज्ञानम्, भावे क्तः तदस्ति अस्येति। 'अर्श आदिभ्य' इत्यच्, विदितवृत्तान्त इत्यर्थः। अस्मिन्पक्षे मारुतेरित्यस्याग्रिमेणान्तिकमित्यनेनान्वयः। उज्झितमांसभारः=उज्झितः त्यक्तः मांसभारः येन सः, भूमौ स्थापितमांसभार इत्यर्थः। प्रत्यग्रविशसितमृगलोहितलोहितचरणनिवसनः=प्रत्यग्र नूतनं विशसितः-मारितो यो मृगः तस्य यल्लोहितं रक्तम् रुधिरमित्यर्थः, तेन लोहितौ रक्तौ चरणनिवसनौ पादवस्त्रे यस्य सः 'लोहितो मङ्गले नदे। वर्णभेदे लोहितं तु कुङ्कुमे रक्तचन्दने। गोशीर्षे रुधिरे युद्धे' इति हैमः। त्वरमाणः=त्वरयाऽऽगच्छन्, कश्चित्, पुरुषः व्याध इत्यर्थः। अन्तिकम्=समीपम्, उपेत्य=आगत्य, परुषश्वासग्रस्तार्द्धश्रुतवर्णानुमेयपदया=परुषो रूक्षो यः श्वासः तेन ग्रस्ताः व्याप्ता अतएव अर्द्धश्रुता अस्पष्टमाकर्णिता ये वर्णा अक्षराणि तैरनुमेयानि ज्ञातव्यानि पदानि यस्यां तया, वाचा=वाण्या, कथितवान्।

के सारथित्व में एक ही रथ पर बैठे हुए कुमार भीमसेन और अर्जुन दोनों समन्तपञ्चक के चारों ओर भ्रमण करने लगे और उसे [ दुर्योधनको ] प्राप्त भी न किए। इसके अनन्तर जब हमारे जैसे दासों का समूह भाग्य को धिक्कार रहा था, कुमार अर्जुन लम्बी और गरम गरम श्वास ले रहे थे, वर्षाकाल की रात्रि में चमकने वाली विजुलिओं के समूहकी भाँति पीले वर्ण के कटाक्षों से कुमार भीमसेन अपनी गदाको प्रकाशित कर रहे थे; और भगवान् नारायण [ श्रीकृष्ण ] भाग्य की स्वेच्छाचारिता की निन्दा कर रहे थे इसी बीच में भीमसेन का परिचित कोई व्याध, जिसका पैर और वस्त्र तुरन्त के निहत किए गये हरिणों के रक्त से रञ्जित हो रहा था, अपने शिर के मासभार को उतार कर, अत्यन्तशीघ्रता से समीप आकर रूक्ष श्वासवेग से लुप्त अत एव आधे ही वर्ण के

अस्मिन्महतोऽस्य सरसस्तीरे द्वे पदपद्धती समवतीर्णप्रतिबिम्बे। तयोरेका स्थलमुत्तीर्णा न द्वितीया। 'परत्र कुमारः प्रमाणम्' इति। ततः ससम्भ्रमं प्रस्थिताः सर्वे वयं तमेव पुरस्कृत्य गत्वा च सरस्तीरं परिज्ञायमानसुयोधनपदलाञ्छनां पदवीमासाद्य भगवता वासुदेवेनोक्तम्–'भो वीर वृकोदर, जानाति किल सुयोधनः सलिलस्तम्भनीं विद्याम्। तन्नून तेन त्वद्भयात्सरसीमेनामधिशयिनेन भवितव्यम्।' एतच्च वचनमुपश्रुत्य बलानुजस्य

किं कथितवानित्याह—देवकुमार इति। [महत., अस्य, सरसः=सरस्याः, अस्मिन्, तीरे=तटे द्वे, पदपद्धती=एकपद्यौ समवतीर्णपदप्रतिबिम्बे=समवतीर्णः स्थितः पदप्रतिबिम्बः चरणप्रतिकृतिः ययोः ते वर्तेते इति शेषः। स्थलम्=जलादुपरिभूमिम्, उत्तीर्णा=प्रत्यागता, न, द्वितीया, द्वौ पुरुषौ जलं प्रति गतौ तयोरेकः पुनः समागतो द्वितीयो नेतिविज्ञायते, दुर्योधनो जले वर्त्तत इति भावः। जलमुत्तीर्णा, इतिपाठे एको जले प्रविवेश द्वितीयो नेतिभावः। परत्र=अग्रे, तत्र दुर्योधनो वर्तते नवेतिविषय इत्यर्थः। कुमारः=भवान् भीमः, एव, प्रमाणम्=प्रमात्मकज्ञानजनकम्। दुर्योधनस्थितिविषयकनिश्चयो भवद्भिरेव कर्तुं शक्यत इति भावः। इति, एतत्पर्यन्त कथितवानित्यस्य कर्म।

ततः=व्याधवचनश्रवणानन्तरम्, ससम्भ्रमम्=सोद्वेगम्, वयम्, सर्वे, प्रस्थिताः, तम्=व्याधम्, एव, पुरस्कृत्य=अग्रे कृत्वा, अस्य, प्रस्थिता इत्यनेनान्वयः। परिज्ञायमानसुयोधनपदलाञ्छिताम्=सुयोधनपदस्य लाञ्छितम् लाञ्छनं भावे क्तप्रत्ययः चक्रपद्मादिचिह्नम् तत्परिज्ञायमान यस्यास् ताम्, चक्रपद्मादिचिह्नयुक्तपदचिह्नितामित्यर्थः। पदवीम्=मार्गम्, आसाद्य=प्राप्य। वासुदेवेन=कृष्णेन, उक्तम्। किमुक्तमित्याह—भो वृकोदरेति। सलिलस्तम्भनीम्=सलिलं स्तम्यतेऽनयेति सलिलस्तम्भनी ताम्। करणे ल्युट् ततः 'टिड्ढाणञि'ति ङीप्। एनाम्, सरसीम्, अधिशयितेन=सुप्तेन, 'अधिशीङ्स्थासां कर्मे'ति सरसीत्यस्य कर्मसंज्ञाऽतो द्वितीया। बलानुजस्य=बलस्य बलभद्रस्य अनुजः कृष्णः तस्य, एतच्च, वचनम्, उपश्रुत्य=

श्रवण से सम्पूर्ण पद का अनुमान कर लेने योग्य वाणी में कहा, 'इस समीपस्थ विशाल सरोवर के तटपर युग्म मनुष्यों के चरणों के उतरने के चिह्न दृष्टिगोचर हो रहे हैं। उनमें से एक पदपद्धति स्थल की ओर आई है परन्तु दूसरी नहीं। इसके आगे कुमार ही समझलें' इसे सुनकर बडी आतुरता से हम सब लोग उसे आगे करके चल दिये वहाँ जाकर झील [ तालाब ] के तट पर, अङ्कित पदचिह्न को, जिसमें सुयोधन के पद के चिह्न स्पष्ट रूप से दृष्टिगोचर हो रहे थे, देखकर भगवान् वासुदेव ने कहा, 'वृकोदर! जलस्तम्भनी विद्या को सुयोधन जानता है अतः उसने तुम्हारे भय से अवश्य इस तालाब का आश्रय लिया होगा'

सकलदिक्प्रपूरितातिरिक्तमुद्भ्रान्तसलिलचारिचक्रं त्रासोद्धतनक्रमालोड्य सरःसलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम्—अरे रे वृथाप्रख्यापितालीकपौरुषाभिमानिन्, पाञ्चालराजतनयाकेशाम्बराकर्षणमहापातकिन्,

जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां

---

आकर्ण्य, इत्यन्वयः । सकलदिक्प्रपूरितेत्यादिविशेषणानि सरःसलिले गर्जने च प्रत्येकमनुयन्ति तथाहि—सरःसलिलपक्षे—सकलदिक्प्रपूरितातिरिक्तम् = सकलानां दिशां यत्प्रपूरितं प्रभरणं तस्माद् अतिरिक्तम् समधिकम्, एतावन्ति तत्र जलानि सन्ति येषां निखिलदिशां पूरणेनापि निःशेषो न स्यात्, एतेनातिगाम्भीर्यं द्योतितम् । गर्जनपक्षे—सकला दिशः प्रपूरिता येन तत् सकलदिक्प्रपूरितं तस्मादतिरिक्तम् अवशिष्टम्, उद्भ्रान्तसकलसलिलचारिचक्रम् = सलिले चरन्तीति सलिलचारिणः मकरादयः तेषां सकलानां चक्रम् समूहः तद् उद्भ्रान्तम् उद्विग्न यस्मिन्, गर्जनपक्षे-येन तत् । 'उद्वेग उद्भ्रमे' इत्यमरः । त्रासोद्धतनक्रम् = त्रासेन भयेनोद्धतः इतस्ततः सञ्चरणशीलः नक्रो यस्मिन् गर्जनपक्षे यस्मात् तत्, सरःसलिलम् = सरोवरजलम् आलोडितम् = सम्यग्विलोडितम्, कुमारवृकोदरेण भैरवम् = भीषणम्, गर्जित्वा = सन्तर्ज्य, अभिहितम् = उक्त च । वृथाप्रख्यापितालीकपौरुषाभिमानिन् = वृथा व्यर्थं प्रख्यापित प्रवेदितम् अलीकम् अनृतम् पौरुष पराक्रमम् अभिमन्यते तरसम्बोधने । धार्तराष्ट्रापसद = धृतराष्ट्रजेषु नीच ॥

अन्वय.—विमले, इन्दोः, कुले, जन्म, व्यपदिशसि, अद्यापि, गदाम्, धत्से, माम्, दुःशासनकोष्णशोणितसुराक्षीवम्, रिपुम्, भाषसे, मधुकैटभद्विषि, हरौ, अपि, दर्पान्धः, उद्धतम्, चेष्टसे, ( हे ) नृपशो, अधुना, मत्त्रासात्, पङ्के, लीयसे ॥ ७ ॥

उत्तमवंशजस्य समरस्यागादिरूपनिन्दितकर्मायुक्तमित्याह—जन्मेन्दोरिति ।

विमले = दोषरहिते, इन्दोः = चन्द्रस्य, कुले = वंशे, जन्म = उत्पत्तिम्, व्यपदिशसि = कथयसि, चन्द्रवंशीयोऽहमिति कथयसि, युद्धभयान्निलीनश्च भवसीत्ययुक्त-

---

बलराम के भ्राता श्रीकृष्ण के इस वाक्य को सुनकर भीमसेन ने उस कासार के जल को आलोडित कर दिया जिससे उसका जल चारों दिशाओं को पूर्ण करके आगे वह चला। सम्पूर्ण जलचर पक्षी विकल हो गये। मगर-घड़ियाल व्यग्र हो उठे। पुनः भीमसेन ने भीषण गर्जन करते हुए कहा, 'अरे रे मिथ्या बल और पराक्रम का अहङ्कार करने वाले तथा द्रौपदी के केश और वस्त्र के आकर्षण करने के कारण महापातकी दुर्योधन !

अपना जन्म विमल चन्द्रवंश में कह रहे हो। अब भी तुम्हारे हाथ में गदा है। दुश्शासन के ईषदुष्ण [ गरम ] रक्त रूपी मदिरा से मत्त मुझे शत्रु कह रहे हो, अहङ्कार

मां दुःशासनकोष्णशोणितसुराक्षीबं रिपुं भाषसे ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मत्त्रासान्नृपशो! विहाय समरं पङ्केऽधुना लीयसे ॥ ७ ॥

अपि च । भो मानान्ध,

पाञ्चाल्या मन्युवह्निः स्फुटमुपशमितप्राय एव प्रसह्य
प्रोन्मुक्तैः केशपाशैर्हतपतिषु मया कौरवान्तःपुरेषु ।

मिति भावः । तत्रापि त्वं गदासहाय इत्याह=धत्से गदामिति । अद्यापि=इदानीं-अपि, गदाम्=शस्त्रविशेषम्, धत्से=धारयसि, अस्तु गदा, रिपोरभावात्कथं योद्ध-स्यमित्यत आह—मामिति । माम्=भीमम्, दुःशासनकोष्णशोणितसुराक्षीवम्=दुःशासनस्य यत्कोष्ण मन्दोष्णं शोणित तदेव सुरा मद्यं तेन क्षीव मत्तम्, रिपुम्=शत्रुम्, भाषसे=ब्रवीषि । शान्तोऽहं कथं योत्स्य इत्यत आह—दर्पान्ध इति । मधु-कैटभद्विषि=मधुकैटभासुरशत्रौ, हरौ=कृष्णे, अपि, दर्पान्धः=उन्मत्तः, सन् , उद्ध-तम्=उच्छृङ्खलं यथा स्यादेवम्, चेष्टसे=व्यापारं करोषि, यः खल्वेतादृशबलवति कृष्णेऽप्युद्धतः स कथ युद्धाद्विरतो भवेदिति भावः । हे नृपशो=नरेषु पशुतुल्य । अधुना, मत्त्रासात्=मत्तो भयात् , समरम्, विहाय=त्यक्त्वा, पङ्के=कर्दमे, लीयसे=प्रच्छन्नो भवसि । अत्र तर्जनोद्वेजनाभ्यां द्युतिर्नाम सन्ध्यङ्गं तदुक्तं दर्पणे—

'तर्जनोद्वेजने प्रोक्ता द्युतिरिति ।' अत्रेन्दुकुलजन्मरूपोत्तमस्य पङ्कनिलयनरूपा-धमस्य च सघटनावशाद्विषमालङ्कारः । शार्दूलविक्रीडितं छन्दः ॥ ७ ॥

अन्वय—मया, प्रसह्य, हतपतिषु, कौरवान्तःपुरेषु, ( सत्सु ) ( अत एव, ) प्रोन्मुक्तैः, केशपाशैः, पाञ्चाल्याः, क्रोधवह्निः, उपशमितप्रायः, एव, त्वया, भ्रातुः, दुःशासनस्य, उरसः, स्रवत्, असृक्, ( मया ) पीयमानम्, निरीक्ष्य, क्रोधात्, भीमसेने, किम्, विहितम्, यत्, असमये, त्वया, अभिमानः, अस्तः ॥ ८ ॥

कौरवहननान्मम क्रोधस्तु शान्तः, अहङ्कारिणस्तव क्रोधः कथमसमये शान्त इत्याह—पाञ्चाल्या इति । मया=भीमेन, प्रसह्य=हठात् , हतपतिषु=हताः पतयो येषां तेषु, कौरवान्तःपुरेषु=कौरवाणाम् अन्तःपुराणि भूभुजां स्त्र्यगाराणि तेषु, धृतराष्ट्र-पुत्रवधूषु वैधव्य प्राप्तासु सतीष्वित्यर्थः । अत एव प्रोन्मुक्तैः=अबद्धैः, केशपाशैः=कच-

से अन्धे मधु और कैटभके शत्रु विष्णु के अवतार भगवान् वासुदेव के विषय में असभ्यता का व्यवहार करते हो । ऐ नराधम ! मुझ से भयभीत होकर तथा युद्ध से पराङ्मुख होकर अब कीचड में आकर छिपे हो ॥ ७ ॥

और भी ऐ मानान्ध ! कौरवरमणियों के पतिदेवों का मेरे द्वारा विनाश हो जानेपर केशकलापों के खोल देने के कारण कृष्णा का क्रोधाग्नि प्रायः ठंढा पड चुका है । तुम्हारे

भ्रातुर्दुःशासनस्य स्रवदसृगुरसः पीयमानं निरीक्ष्य
क्रोधात्किं भीमसेने विहितमसमये यत्त्वयाऽस्तोऽभिमानः ॥८॥

द्रौपदी—णाह, अवणीदो मे मण्णू जइ पुणो वि सुलहं दंसणं भविस्सदि। ( नाथ, अपनीतो मे मन्युर्यदि पुनरपि सुलभं दर्शनं भविष्यति । )

युधिष्ठिर—कृष्णे, नामङ्गलानि व्याहर्तुमर्हस्यस्मिन्काले । भद्र, ततस्ततः ।

समूहैः मृतभर्तृकाणां केशबन्धनस्य निषिद्धत्वादिति भावः । पाञ्चाल्याः=द्रौपद्याः क्रोधवह्नि =अग्नितुल्यक्रोधः, उपशमितप्राय.=शान्ततुल्यः 'प्रायो बाहुल्यतुल्ययोः' इति विश्वः । प्राय,पदप्रयोगात्तव वध एव केवलमवशिष्ट इति सूचितम् । एवेति—एवेत्यवधारणे । त्वया=दुर्योधनेन, भ्रातुः, दुःशासनस्य, भ्रातुरित्यनेनावश्यं प्रत्यपकार' कर्तव्य इति सूचितम् । स्रवत्=गलत्, असृक्=रुधिरम्, मया, पीयमानम्, कर्मणि पाधातोः शानच् । निरीक्ष्य=दृष्ट्वा, क्रोधात्=कोपात्, भीमसेने=मयि, किम्, विहितम्=सम्पादितम् किं प्रत्यपकृतमित्यर्थः । न किमपीति भावः । यत्=यस्माद्धेतोः, असमये=अकाले अभिमानप्रदर्शनकाल इत्यर्थः । त्वया, अभिमानः=अहङ्कारः, अभिपूर्वकमनधातोर्घञ्प्रत्ययः । अस्त.=विनाशितः, असु क्षेपणे, तस्मात् क्तप्रत्ययः 'यस्य विभाषे'ति नेट् । युद्धकरणसमये कथं पलायित इति भावः । अत्र क्रोधवह्निरित्यत्रलुप्तोपमाऽलङ्कार । स्रग्धरा छन्दः ॥ ८ ॥

अपनीतः=दूरीकृतः, मन्यु'=कोपः, यदि=चेत्, सुलभम्=सुखेन प्राप्यम्, एतेनावश्यमेव ते विजय. स्यादिति सूचितम् ।

यदिशब्दप्रयोगात्सन्दिग्धां द्रौपदीं मत्वाऽह-कृष्ण इति । कृष्णे=द्रौपदि, अमङ्गलानि=अभव्यसम्भावनाप्रतिपादकशब्दान्, व्याहर्तुम्=भाषितुम् न, अर्हसि=योग्याऽसि ।

भाई दुश्शासन के वक्षःस्थल से क्षरण करते हुए रक्त का पान करना देखकर तुमने क्रोध से भीमसेन का क्या [ अहित ] किया ? और समय के पहिले ही तुमने अभिमान को चले जाने दिया है' ॥ ८ ॥

द्रौपदी—नाथ ! मेरा क्रोध शान्त हो गया परन्तु यदि बिना किसी आयास के फिर भी दर्शन प्राप्त हो ।

युधिष्ठिर—पाञ्चालि ! इस समय अमङ्गल वाणी मुख से न निकालिए । सौम्य [ पाञ्चालक ], फिर क्या हुआ ?

पाञ्चालकः—ततश्चैवं भाषमाणेन वृकोदरेणावतीर्य वीर्यक्रोधोद्धतभ्रमि-तभीषणगदापाणिना सहसैवोल्लङ्घिततीरमुत्सन्ननलिनमाविद्धमूर्च्छितग्राह-मुद्भ्रान्तसमस्तशकुन्तमतिभैरवारवभ्रमितवारिचयमायतमपि तत्सरः सम-न्तादालोडितम्।

युधिष्ठिरः—भद्र, तथाऽपि किं नोत्थितः?

पाञ्चालकः—देव,

एवम्=अरे रे वृथेत्यादि, भाषमाणेन=ब्रुवता, वृकोदरेण=भीमेन, अवतीर्य=सरसि प्रविश्य, वीर्यक्रोधोद्धतभ्रमितभीषणगदापाणिना=वीर्यक्रोधाभ्याम् उद्धता उच्चैःकृता अत एव भ्रमिता भीषणा दारुणा गदा पाणौ येन तेन 'भीषणं रसे शल्लक्यां, ना गाढे दारुणे त्रिषु' इति विश्वः। सहसैव=झटित्येव। उल्लङ्घिततीर-मित्यादि, सरसि, आलोडनक्रियायां चान्वेति। उल्लङ्घिततीरम्=उल्लङ्घितम् अति-क्रान्तं तीरं येन तत्, उत्सन्ननलिनम्=उत्सन्नं विनष्टं नलिनं कमलं यस्य, पक्षे उत्सन्नं विनाशितं नलिनं येन अन्तर्भावितणिजर्थः। अस्मिन्पक्षे उत्सन्नं विनष्टमित्यर्थस्तु न युक्तस्तथा सति धातोरकर्मकत्वप्रत्ययात्कर्मणि क्तप्रत्ययानुपपत्तेर्येनेति तृतीयान्त-मनुपपन्नं स्यात्। आविद्धमूर्च्छितग्राहम्=आविद्धः सन्ताडितोऽत एव मूर्च्छितो ग्राहः यस्मिन् तत्, पक्षे मूर्च्छितश्चासौ ग्राह इति मूर्च्छितग्राहः स आविद्धो येन तत्, उद्भ्रान्तसमस्तशकुन्तम्=उड्डीननिखिलखगम्, पक्षे उद्विग्ननिखिलखगम्, अति-भैरवम्=अतिभयानकम्, वेगभ्रमितवारिचयम्=वेगेन भ्रमितोऽनवस्थितो वारि-चयः जलसमूहो यत्र, पक्षे वेगेन भ्रमितो घूर्णितो वारिचयो येन तत्, आयतम्=दीर्घम्, अपि, सरः, समन्तात्, आलोडितम्=मथितम्।

किमिति—किं शब्दः प्रश्ने। उत्थित', दुर्योधन इति शेषः।

पाञ्चालक—महाराज! इस प्रकार कहते हुए भीमसेन नीचे उतर कर क्रोध के कारण उच्छृङ्खलतापूर्वक मुद्गर की तरह गदा हाथ में लेकर अच्छी तरह घुमाकर उस लम्बे चौड़े भी महान् सरोवर को उन्मथित कर दिया जिससे वह [ सरोवर ] एकाएक तट से आगे बढ़ गया। कमलों का वन उजड़ कर नष्ट-भ्रष्ट होने लगा। उसमें रहने वाले घड़ियाल प्रक्षिप्त होकर चेतनारहित हो गये। उस पर विचरने वाले पक्षी तथा मंडलियाँ व्याकुल हो गईं। अत्यन्त भीषण शब्दसे जलराशि भ्रमण करने लगी।

युधिष्ठिर—सौम्य, तो भी वह क्यों नहीं उठा?

पाञ्चालक—क्यों नहीं महाराज उठा तो।

त्यक्त्वोत्थितः सरभसं सरसः स मूल-
मुद्भूतकोपदहनोग्रविषस्फुलिङ्गः ।
आयस्तभीमभुजमन्दरवेल्लनाभिः
क्षीराम्बुधेः सुमथितादिव कालकूटः ॥ ९ ॥

युधिष्ठिरः—साधु सुक्षत्रिय, साधु ।

द्रौपदी—पडिवण्णो समरो ण वा । ( प्रतिपन्न समरो न वा । )

पाञ्चालकः—उत्थाय च तस्मात्सलिलाशयात्करयुगलोत्तम्भिततोरणी-

अन्वयः—सरसः, मूलम्, सरभसम्, त्यक्त्वा, उद्भूतकोपदहनोग्रविषस्फुलिङ्गः, सः, आयस्तभीमभुजमन्दरवेल्लनाभिः, सुमथितात्, क्षीराम्बुधेः, कालकूट, इव, उत्थितः ॥ ९ ॥

भीमस्योत्कटवचनेन क्रुद्धो भूत्वोत्थित इत्याह—त्यक्त्वोत्थित इति । सरसः= सरोवरस्य, मूलम्=अन्तस्तलम्, सरभसम्=सवेगम्, त्यक्त्वा=विहाय, उद्भूतकोपदहनोग्रविषस्फुलिङ्गः=उद्भूतः आविर्भूतः कोप एव दहनः अग्निः स उद्भूतकोपदहनः स एवोग्रविषम् उत्कटगरलम् तस्य स्फुलिङ्गः, आयस्तभीमभुजमन्दरवेल्लनाभिः=आयस्तभीमभुजौ दीर्घभीमसेनबाहू एव मन्दरः मन्दरपर्वतः तस्य वेल्लनाः सञ्चलनानि ताभिः, मथितात्, क्षीराम्बुधेः=क्षीरसमुद्रात्, कालकूटः=महाविषम्, इव, उत्थितः=बहिर्निःसृतः । यथा समुद्रमथनात्कालकूटो निःसृतस्तथैव सरोमथनाद् दुर्योधनो निःसृत इति भावः । अत्र रूपकमुपमा चालङ्कारौ । वसन्ततिलका छन्दः ॥ ९ ॥

समरः=सङ्ग्रामः, प्रतिपन्नः=प्राप्त आरब्ध इत्यर्थः ।

तस्मात्, सलिलाशयात्=सलिलस्य आशयात् आश्रयात्, जलाशयादित्यर्थः । सरस इति यावत् । उत्थाय=निःसृत्य, करयुगलोत्तम्भिततोरणीकृतभीमगदः= करयुगलेन हस्तद्वयेन उत्तम्भिता उत्तोलिता तोरणीकृता बहिर्द्वारसदृशसम्पादिता भीमा भयजनिका गदा येन सः, 'तोरणोऽस्त्री बहिर्द्वारमि'त्यमरः । कथयतिस्म=

वह दुर्योधन, जिससे क्रोधाग्नि के बढ़ जाने कारण विष की चिनगारियाँ झर रही थीं, शीघ्र ही बड़ी तत्परता से विशाल भीम की भुजा रूपी मन्दराचल के भ्रमण करने के कारण क्षीरसागर से निकले हुए कालकूट के समान बाहर निकल पड़ा ॥ ९ ॥

युधिष्ठिर—साधु क्षत्रियप्रवर ! साधु ।

द्रौपदी—युद्ध प्रारम्भ हुआ अथवा नहीं ?

पाञ्चालक—वह उस जलाशय से उठकर दोनों हाथों से भीषण गदा उठाकर घुमाता हुआ कहने लगा, 'अरे रे ! वायुनन्दन ! क्या दुर्योधन को भय से छिपा हुआ समझते हो ?

कृतभीमगदः कथयति स्म—'अरे रे मारुते, किं भयेन प्रलीनं दुर्योधनं मन्यते भवान् ? । मूढ, अनिहतपाण्डुपुत्रः प्रकाश लज्जमानो विश्रमितुध्यवसितवानस्मि पातालम् ।' एवं चोक्ते वासुदेवकिरीटिभ्यां द्वावप्यन्तःसलिलं निषिद्धसमरारम्भौ स्थलमुत्तारितौ । आसीनश्च कौरवराजः क्षितितले गदां निक्षिप्य विशीर्णरथसहस्र निहतकुरुशतगजवाजिनरसहस्रकलेवरसंमर्दसम्पतितगृध्रकङ्कजम्बूकमुत्सन्नसुयोधनबलमस्मद्वीरमुक्तसिंहनादसंवलित-

अकथयत् 'लट् स्म' इतिस्मयोगे भूते लट् । किमकथयदित्याह—मारुत इति । भवतः = भीमात , भयेन = भीत्या, प्रलीनम् = प्रच्छन्नम् , दुर्योधनम् = माम् , मन्यते । नाह त्वद्भयादत्र स्थितः किन्त्वन्यत्कारणमिति भावः । तदेवाह—मूढ अनिहतेति ।मूढ = अज्ञ, अनिहतपाण्डुपुत्र. = अविनाशितपाण्डवः, प्रकाशम् = सर्वसमक्षम् । विश्रमितुम् = विश्राम कर्तुम् , पातालम् = नागलोकम् 'पातालं नागलोके स्यादि'ति मेदिनी । अध्यवसितवान् = गतवान् , अस्मि, यद्यपि 'उत्साहोऽध्यवसायः स्या'दित्यमराद् अध्यवपूर्वकसोधातोरुत्साहोऽर्थस्तथापि धातूनामनेकार्थत्वात्, तात्पर्यानुपपत्त्या लक्षणया वाऽत्र गतिरर्थः । अन्तःसलिलम्=सलिलस्य अन्त' मध्ये, वासुदेवकिरीटिभ्याम् = कृष्णार्जुनाभ्याम्, निषिद्धसमरारम्भौ = निषिद्धः निवारितः समरारम्भ सङ्ग्रामप्रारम्भः ययोः तौ, स्थलम् = जलादुपरिदेशम् , उत्तारितौ = आनीतौ । क्षितितले = भूतले, आसीन' = उपविष्टः । निक्षिप्य = सस्थाप्य, निहतकुरुशतगजवाजिनरसहस्रकलेवरसमर्दसम्पतितगृध्रकङ्कजम्बूकम् = कुरूणां शतं कुरुशतं गजवाजिनराणा सहस्राणि गजवाजिनरसहस्राणि तानि च निहतानि तेषां कलेवराणा यः सम्मर्दः सङ्घट्ट तत्र सम्पतिता' निपतिता. गृध्रकङ्कजम्बूकाः गृध्रलोहपृष्ठश्रृगाला यस्मिन् तत् । एतानि सर्वाणि सङ्ग्रामस्थानस्य विशेषणानि । 'लोहपृष्ठस्तु कङ्क. स्या'दित्यमरः । उत्सन्नसुयोधनबलम्=विनष्टदुर्योधनसैन्यम् , अस्मद्वीरमुक्तसिंहनादसवलिततूर्यघोषम्—अस्मद्वीरैर्मुक्तो य' सिंहनाद. तेन सवलित. सम्मिश्रः तूर्यघोष. वाद्यविशेषशब्दो यत्र तत् , अमित्रबान्धवम् = अमित्रस्य शत्रो' बान्धवा यत्र तत् । कौरवसङ्ग्रामस्थानम् , अवलोक्य = दृष्ट्वा, अस्य पूर्वोक्तकौरवराज इत्य-

मूर्ख ! मैं पाण्डुकुमारों को नही मार सका अत एव प्रकटरूप से लज्जित होता हुआ विश्राम करने के लिए पाताल का आश्रय लिया हूँ' इस प्रकार दुर्योधन के उत्तर देने पर भगवान् वासुदेव और अर्जुन ने जल के भीतर युद्ध करने से उन दोनों को रोक कर स्थल भाग पर कर दिया । कौरवाधिपति दुर्योधन ने पृथ्वी पर अपनी गदा फेंक दी और यह देख कर कि रणभूमि में हजारों रथ टूट-फूट कर पडे हुए हैं, मरे हुए सौ कौरव, हाथी, घोडे और हजारों मनुष्यों के लोथों के ढेर पर गीध, कङ्काल और शृगालादि गिर रहे हैं, उस

तूर्यघोषममित्रबान्धवमकौरवं रणस्थानमवलोक्यायतमुष्णं च निःश्वसितवान्। ततश्च वृकोदरेणाभिहितम्—'अयि भोः कौरवराज, कृतं बन्धुनाशदर्शनमन्युना। मैवं विषादं कृथा', पर्याप्ताः पाण्डवाः समरायाऽहमसहाय' इति।

पञ्चानां मन्यसेऽस्माकं यं सुयोधं सुयोधन !।
दंशितस्याऽऽत्तशस्त्रस्य तेन तेऽस्तु रणोत्सवः ॥ १० ॥

इत्थं श्रुत्वाऽसूयान्वितां दृष्टिं कुमारयोर्निक्षिप्योक्तवान्धार्तराष्ट्रः ।

---

नेनान्वयः। आयतम्=दीर्घम्। निःश्वसितवान्=श्वासमधारयत्। बन्धुनाशदर्शनमन्युना=बान्धवनाशावलोकनजन्यक्रोधेन, 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। कृतम्=व्यर्थम्, पाण्डवाः, पर्याप्ताः=ससहायाः, अहम्, असहायः, समराय, इति एवं विषादं मा कृथा इत्यन्वयः।

अन्वयः—(हे) सुयोधन !, अस्माकम्, पञ्चानाम् (मध्ये) यम्, सुयोधम्, मन्यसे, तेन (सह) दंशितस्य, आत्तशस्त्रस्य, ते, रणोत्सवः, अस्तु ॥ १० ॥

कथं न विषादः करणीय इत्याह—पञ्चानामिति। हे सुयोधन !=सुखेन युध्यते स सुयोधनः तत्सम्बोधने, दुर्योधन इत्यर्थः। एतेन त्वया सह युद्धकरणमतीव सुलभमत एकाकिनैव केनापि योद्धव्यमिति सूचितम्। अस्माकं=पाण्डवानाम्, पञ्चानाम्, मध्ये, यम्, सुयोधं=सुखेन योधयितुं योग्यम्, मन्यसे=अवगच्छसि, तेन, सह, दंशितस्य=धृतवर्मणः, धृतकवचस्येत्यर्थः। 'दंशः कीटविशेषे च वर्मदंशनयोः पुमानि'ति मेदिनी। आत्तशस्त्रस्य=गृहीतायुधस्य, ते=तव, रणोत्सवः=रण एवोत्सवः अस्तु। अत्र निरङ्गरूपकमलङ्कारः। पथ्यावक्त्रं छन्दः। युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितमिति लक्षणात् ॥ १० ॥

---

[ सुयोधन ] की सेना वहाँ से भागकर चली गइ है; हमारे [ पाण्डव के ] वीरों के हुंकारनाद से रणभेरी का नाद मिश्रित हो रहा है, उसके बान्धवों में से कोई भी कौरव नहीं है और जो लोग वहाँ हैं भी वे उसके शत्रुपक्ष के ही बन्धुबान्धव हैं, उष्ण और दीर्घ निश्वास लिया। इसके अनन्तर भीम ने कहा, 'अये कौरवों के मुकुट ! कुटुम्बियों का नाश देखकर क्रुद्ध होने से कोई लाभ नहीं। 'हम लोग [ पाण्डव ] युद्ध के लिए पर्याप्त हैं और तू [ दुर्योधन ] अकेला है' इस प्रकार का खेद भी न करो।

हे सुयोधन, हम पाँचों व्यक्तियों में से जिससे युद्ध करना अभीष्ट समझते हो कवच पहन लो और हाथ में शस्त्र लेकर उससे युद्ध होने दो ॥ १० ॥

इस बात को सुनकर दुर्योधन ने घृणा की दृष्टि से दोनों कुमारों [ अर्जुन और भीम ] को देख कर कहा '—

कर्णदुःशासनवधात्तुल्यावेव युवां मम ।
अप्रियोऽपि प्रियो योद्‍धुं त्वमेव प्रियसाहसः ॥ ११ ॥

इत्युत्थाय च परस्परक्रोधाक्षेपपरुषवाक्कलहप्रस्तावितघोरसङ्ग्रामौ विचित्रविभ्रमभ्रमितगदापरिघभासुरभुजदण्डौ मण्डलैर्विचरितुमारब्धौ भीमदुर्योधनौ । अहं च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः । आह च

अन्वयः—कर्णदुःशासनवधात् , मम, युवाम् , तुल्यौ, एव, ( तथापि ) अप्रियः, अपि, प्रियसाहसः, त्वम् , एव, योद्‍धुम् , प्रियः ॥ ११ ॥

त्वयैव योद्धव्यमित्याह—कर्णेति । कर्णदुःशासनवधात् = राधेयमदनुजहननात् , मम = दुर्योधनस्य, युवां=भीमार्जुनौ, तुल्यौ=समौ, एव, शत्रू इति शेषः । भीमोऽनुजस्य हन्ता, अर्जुनो मित्रस्यात उभावपि तुल्यावपराधिनावित्याशय' । तथापि 'भवन्ति भव्येषु च पक्षपाताः' इतिन्यायात्, अप्रियः=शत्रुः, अपि, यतः प्रियसाहसः= प्रियः साहसो यस्य सः, त्वम् = भीमः, योद्‍धुम् , प्रिय = इष्टः, असि । अत्र विरोधाभासोऽलङ्कारः । पथ्यावक्त्र छन्दः ॥ ११ ॥

परस्परक्रोधाक्षेपपरुषवाक्कलहप्रस्तावितघोरसङ्ग्रामौ=अन्योऽन्यक्रोपेन य आक्षेपः निन्दा तेन यः परुषवाग्भि' कर्कशवचनै', अह त्वां हनिष्यामि, मत्तस्तव वध' स्यादित्यादिरूपाभि' कलहः विग्रह तेन प्रस्तावितः प्रसञ्जितो घोरसङ्ग्रामो याभ्यां तौ, विचित्रविभ्रमभ्रमितगदापरिघभासुरभुजदण्डौ = विचित्रविभ्रमोऽद्‍भुतभ्रमणं तेन भ्रमितो यो गदापरिघः परिघनामकास्त्रतुल्यगदा तेन भासुरौ शोभमानौ भुजदण्डौ दण्डतुल्यदीर्घबाहू ययो' तौ । चित्रगदापरिघभासुरभुजभरौ, इतिपाठे तु चित्र' अद्‍भुतो यो गदापरिघ. तेन भासुरौ यौ भुजौ, बिभर्तीति भर' पचाद्यच्प्रत्यय' । तयोर्भर धारयिता, तौ । भीमदुर्योधनौ, मण्डलै.=चक्राकारै', विचरितुम्=भ्रमितुम् , आरब्धौ । चक्रपाणिना=चक्रं पाणौ यस्य तेन, एतेन यतश्चक्रधारी अतस्तस्य सन्देशोऽन्यथाभवितुं नार्हतीति ध्वनितम् । देवसकाशं=भवत्समीपे, अनुप्रेषित'=प्रहित' । देवकीनन्दन=कृष्ण ,अपर्युषितप्रतिज्ञे=अपर्युषिता परदिने सम्पादयितुमयोग्या प्रतिज्ञा दुर्योधनवधरूपा यस्य तस्मिन् , मारुतौ = भीमसेने, कौरवराजे = दुर्योधने,

'कर्ण और दुश्शासन के वध से [ यद्यपि ] तुम दोनों मेरे लिए समान ही हो । तथापि शत्रु होते हुए भी तुम साहसी हो अत तुम्हीं से युद्ध करना मैं अभीष्ट समझता हूँ ॥११॥

यह कहकर एक दूसरे को क्रोधपूर्वक निन्दायुक्त कटुवचनों के प्रयोग से विकट युद्ध-प्रस्ताव करके विलक्षण ढङ्ग से घुमाते हुए गदा के प्रकाश से जिनके भुजदण्ड अनुरञ्जित हो रहे थे वे भीम और दुर्योधन मण्डलाकार [ युद्ध की गतिविशेष ] से घूमने लगे [ कावा काटने लगे ] और मैं चक्रधारी भगवान् वासुदेव के द्वारा आप [ युधिष्ठिर ] के समीप भेजा

देवो देवकीनन्दनः । अपर्युषितप्रतिज्ञे च मारुतौ प्रनष्टे कौरवराजे महानासीन्नो विषादः । सम्प्रति पुनर्भीमसेनेनासादिते सुयोधने निष्कण्टकीभूत भुवनतलं परिकलयतु भवान् । अभ्युदयोचिताश्चानवरतमङ्गलसमारम्भाः प्रवर्त्यन्तां । कृतं सन्देहेन ।

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णाऽत्यन्तचिरोज्झिते च कवरीबन्धे करोतु क्षणम् ।
रामे घोरकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥ १२ ॥

प्रनष्टे=अदर्शनं प्राप्ते, सति, नः=अस्माकम्, महान् विषादः=खेदः, आसीदित्यन्वयः । आसादिते=प्राप्ते, भुवनतलम् , निष्कण्टकीभूतम्=असपत्नीभूतम् शत्रुरहितमित्यर्थः। परिकलयतु=अवगच्छतु, भवान्=युधिष्ठिरः । अभ्युदयोचिताः=उन्नत्यनुकूलाः अनवरतमङ्गलसमारम्भाः=सततं शिवप्रारम्भाः, सन्देहेन=संशयेन, विजयः स्यान्नवेत्याकारकेण, कृतम्=अलम् ।

अन्वयः—रत्नकलशाः, ते, राज्याभिषेकाय, सलिलेन, पूर्यन्ताम्, चिरोज्झिते, कवरीबन्धे, च, कृष्णा, क्षणम्, करोतु, घोरकुठारभासुरकरे, ( अत एव ) क्षत्रद्रुमोच्छेदिनि, रामे, क्रोधान्धे, वृकोदरे, च, आजौ, परिपतति ( सति ) कुतः, संशयः ॥१२॥

कथं न सन्देह इत्याह—पूर्य्यन्तामिति । रत्नकलशाः=रत्नैः मणिभिः जटिताः कलशाः, मध्यमपदलोपिसमासः । 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी । ते=तव, युधिष्ठिरस्येत्यर्थः । राज्याभिषेकाय=राज्येऽभिषेचनाय, सलिलेन=जलेन, पूर्यन्ताम्=भ्रियन्ताम्, चिरोज्झिते=बहुकालेन परित्यक्ते, कवरीबन्धे=केशवेशबन्धने, च, कृष्णा=द्रौपदी, क्षणम्=उत्सवम्, 'कालविशेषोत्सवयोः क्षणः' इत्यमरः। करोतु, केशबन्धनार्थं सामग्रीसञ्चयं करोत्वित्यर्थः । ननु यदि भीमस्य विजयो न स्यात्तदेदं सर्वमनर्थकमित्यत आह–राम इति । घोरकुठारभासुरकरे=भयप्रदपरशुशोभमानहस्ते, अतएव क्षत्रद्रुमच्छेदिनि=क्षत्रा नृपा एव द्रुमा वृक्षाः तान् छेत्तुं शीलमस्य तस्मिन् , परशुरामेण त्रिःसप्तकृत्वः क्षत्रियाः संजह्रिरे इति भावः । रामे=परशुरामे, क्रोधान्धे=कोपाकुले वृकोदरे, च, आजौ=सङ्ग्रामे, परिपतति=प्रविष्टे

गया हूँ । महाराज ! देवकी पुत्र ने कहा है—'दुर्योधन के छिप जाने पर भीम की प्रतिज्ञा अपूर्ण समझकर हम लोगों को महान् शोक ने घेर लिया था परन्तु अब भीमसेन के हाथ सुयोधन के लग जाने पर निष्कण्टक भूमण्डल को आप सुशोभित करें । उन्नति के समय के लिए जो उत्सव उचित हो उसे निरन्तर होते रहने दें । सन्देह करना व्यर्थ है ।

आपके अभिषेक के लिए मणिमय कलश जल से पूर्ण करके रक्खे जायँ। द्रौपदी चिरकाल

द्रौपदी—( सवाष्पम् । ) ज देवो त्तिहुअणणाहो भणादि तं कहं अण्णहा भविस्सदि । ( यद्देवस्त्रिभुवननाथो भणति तत्कथमन्यथा भविष्यति । )

पाञ्चालक—न केवलमियमाशीः, असुरनिपूदनस्यादेशोऽपि ।

युधिष्ठिरः—को हि नाम भगवता सन्दिष्टं विकल्पयति ? कः कोऽत्र भोः ।

( प्रविश्य । )

कञ्चुकी—आज्ञापयतु देवः ।

युधिष्ठिरः—देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य मे विजयमङ्गलाय प्रवर्त्यन्तां तदुचिताः समारम्भाः ।

---

र्वति, संशयः=शङ्का, कुतः=कस्माद्धेतो जये इति शेषः, विजये संशयो नास्तीति भावः। यथा परशुरामेण स्वप्रतिज्ञापूर्तिरवश्यं कृता तथा तत्सदृशो भीमोऽपि प्रतिज्ञापूर्तिं करिष्यत्येवेति गूढाभिप्रायः। दीपकमलङ्कारः। शार्दूलविक्रीडितं छन्दः ॥१२॥

अन्यथेति—वासुदेवसन्देशस्यान्यथाभवनमसम्भवमित्यर्थः। असुरनिपूदनस्य=असुरान्निपूदयतीत्यसुरनिपूदनः 'नन्दिग्रहिपचादिभ्यः' इति कर्तरि ल्युप्रत्ययः। तस्य, आदेशः=आज्ञा। नामशब्दोऽभ्युपगमे, अभ्युपगच्छामि यत् भगवत्सन्देशविकल्पना न भवितुमर्हतीति भावः।

विकल्पयति=विरुद्धं कल्पयति विपरीतमवगच्छतीत्यर्थः।

देवस्य=भगवतः, देवकीनन्दनस्य=देवकीपुत्रस्य कृष्णस्येत्यर्थः। बहुमानात्=

---

से मुक्त किए हुए केशकलाप को क्षण मात्र में बाँध लें। क्रोधोन्मत्त परशुराम के, जिनका हाथ तीक्ष्ण परशु के कारण तेजस्वी है, तथा जो क्षत्रियरूप वृक्षों के काट डालने वाले हैं, और भीमसेन के क्रोधोन्मत्त होकर संग्राम में उतर पडने पर सन्देह कहाँ ? अर्थात् विजयलक्ष्मी प्राप्त ही हो जायगी' ॥ १२ ॥

**द्रौपदी**—( डबडबाए हुए नेत्रों से ) त्रिलोक के स्वामी महाराज जो कहते हैं वह अन्यथा कैसे होगा।

**पाञ्चालक**—इसे केवल आशीर्वाद ही नहीं, किन्तु राक्षसों के दमनकर्त्ता कृष्णजी की आज्ञा भी समझनी चाहिए।

**युधिष्ठिर**—भगवान् नारायण के सन्देश की कौन अवहेलना कर सकता है ? कौन यहां पर है।

( प्रवेश करके )

**कञ्चुकी**—आज्ञा प्रदान कीजिए महाराज,

**युधिष्ठिर**—देवकीपुत्र भगवान् वासुदेव की आज्ञा का स्वागत करने के लिए मेरे प्रिय सहोदर के विजयमङ्गलार्थानुकूल महोत्सव प्रारम्भ कर दिए जाँय।

कञ्चुकी—यथाऽऽज्ञापयति देवः। ( सोत्साहं परिक्रम्य । ) भो भोः संविधातॄणां पुरस्सराः, यथाप्रधानमन्तर्वेश्मिका दौवारिकाश्च, एष खलु भुजबलपरिक्षेपोत्तीर्णकौरवपरिभवसागरस्य निर्व्यूढदुर्वहप्रतिज्ञाभारस्य सुयोधनानुजशतोन्मूलनप्रभञ्जनस्य दुःशासनोरःस्थलविदलननरसिंहस्य दुर्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य बलिनः प्राभञ्जनेर्वृकोदरस्य स्नेहपक्षपातिना मनसा मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः। ( आकाशे । )

अतिसम्माननीयत्वात्, एतस्य वचनमन्यथाकर्तुं न योग्यमिति भावः। वत्सस्य = भीमसेनस्य, विजयमङ्गलाशंसया=रिपुजयरूपशिवेच्छया, तदुचिताः = मङ्गलयोग्याः, समारम्भाः = सुक्रियाः, प्रवर्त्यन्तां=क्रियन्ताम् ।

सोत्साह = साध्यवसायम् 'उत्साहोऽध्यवसायः स्यादि' त्यमरः। संविधातॄणाम्= अधिकारिणाम्, 'पुरःसरा' = मुख्याः, भुजबलपरिक्षेपोत्तीर्णकौरवपरिभवसागरस्य = परिक्षिप्यते सन्तीर्यतेऽनेनेति परिक्षेपो जलयानम् ( जहाज ) इति प्रसिद्ध । भुजबलमेव परिक्षेप' तेनोत्तीर्णः कौरव एव परिभवसागरः दुःखसमुद्रो येन तस्य, निर्व्यूढदुर्वहप्रतिज्ञाभारस्य = निर्व्यूढः नि.शेषेण गृहीतो दुर्वहः प्रतिज्ञाभारः दुर्योधनोरुभङ्गरूपः येन तस्य, पूर्णप्रतिज्ञप्रायस्येत्यर्थः। सुयोधनानुजशतोन्मूलनप्रभञ्जनस्य = सुयोधनस्य यदनुजशतं तस्य उन्मूलने विनाशने प्रभञ्जन महावायुरिव तस्य, बलिन' = बलवतः, प्राभञ्जने' = मरुत्तनयस्य, वृकोदरस्य, स्नेहपक्षपातिना = स्नेहेन प्रेम्णा पक्षे साहाय्ये पतितु शीलमस्य तेन, मनसा = चित्तेन, मङ्गलानि = शुभानि, कर्तुम् आज्ञापयति=आदिशति । आकाश इति—पात्राभावेऽपि श्रुत्वेवानुक्तमप्यर्थं किं ब्रवीषीत्याद्यर्थकं वाक्य यत्र प्रयुज्यते तत्राकाश इत्युच्यते। तदुक्तं दर्पणे—

किं ब्रवीषीति यन्नाट्ये विना पात्र प्रयुज्यते। श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ॥ इति ।

कन्चुकी—अच्छा महाराज की आज्ञा शिर पर ( उत्साह से चलकर ) भो भो विधिविधानों के आचार्य, श्रेष्ठता के क्रम से अन्त पुर [ रनिवास ] के अधिकारियो तथा द्वाररक्षको ! यह महाराज युधिष्ठिर पराक्रमी अपने भ्राता पवनपुत्र भीमसेन का पक्षपात मन में रखकर विजय महोत्सव के लिए आज्ञा दे रहे हैं क्योंकि भीमसेन अपनी भुजाओं के पराक्रम का प्रदर्शन करके कौरवों के द्वारा किए गए अपमानरूपी समुद्र के पार पहुँच गए हैं वहन करने के अयोग्य प्रतिज्ञा के भार को वहन कर लिए हैं, सुयोधन के सौ भ्रातारूपी वृक्षों को उखाड कर फेंक देने में आधी के समान हैं, और दुश्शासन का हृदय विदीर्ण करने में साक्षात नृसिंह भगवान हैं तथा दुर्योधन के जङ्घारूप विशाल स्तम्भ [ खम्भ ] के चूर चूर कर देने पर विजय की प्राप्ति भी अवश्यम्भावी है । ( आकाश को

ञ्चि त्रूथ—'सर्वतोऽधिकतरमपि प्रवृत्तं किं नालोकयसि' इति । साधु पुत्रकाः साधु । अनुक्तहितकारिता हि प्रकाशयति मनोगतां स्वामिभक्तिम् ।

युधिष्ठिर—आर्य जयन्धर !

कञ्चुकी—आज्ञापयतु देवः ।

युधिष्ठिर—गच्छ, प्रियख्यापकं पाञ्चालक पारितोषिकेण परितोषय ।

कञ्चुकी—यदाज्ञापयति देव' । ( इति पाञ्चालकेन सह निष्क्रान्त' । )

द्रौपदी—महाराअ, किंणिमित्तं उण णाहभीमसेणेण सो दुराआरो भणिदो—पञ्चाणं वि अम्हाणं मज्झे जेण दे रोअदि तेण सह दे संगामो होदु' त्ति । जइ मदोसुदाणं एकदरेण सह संगमो तेण पत्थिदो भवे तदो अच्चाहिदं भवे । ( महाराज, किंनिमित्तं पुनर्नाथभीमसेनेन स दुराचारो भणित'-

अत्र सर्वतोऽधिकेत्याद्यनुक्तमपि श्रुत्वेवाह—किं त्रूथ सर्वत इति । सर्वतः = सर्वत्र, सार्वविभक्तिकस्तसिलप्रत्यय. । अधिकतरम् = अत्यधिकम्, प्रवृत्तम् = समारब्धम्, मङ्गलमिति शेषः । न, अवलोकयसि = पश्यसि, स्वार्थे णिच्प्रत्ययः । अथवा राज्ञेति शेष., राजानं न दर्शयति किमित्यर्थ. । साधु = भद्रम्, पुत्रका इति । 'अनुकम्पाया' मिति कप्रत्यय. । अनुक्तहितकारिता = स्वेच्छयैव शुभसम्पादित्वम्, स्वामिभक्तिम् = अधिपतिषु प्रीतिम् ।

जयन्धर = एतन्नामककञ्चुकी ।

प्रियख्यापकम् = इष्टनिवेदकम्, पाञ्चालकम् = एतन्नामकम्, पञ्चालदेशोत्पन्न वा, पारितोषिकेण = धनदानपुरस्कारेण, परितोषय सन्तुष्ट कुरु ।

नकुलसहदेवयोर्बलानभिज्ञा द्रौपद्याह-महाराज किन्निमित्तमिति । सः=दुर्योधनः,

ओर ) क्या कहते हो—'सब दिशाओं में प्रभूत मङ्गलमहोत्सव मनाया जा रहा है क्या देख नहीं रहे हो ?' धन्य मेरे प्रिय पुत्रो ! धन्य बिना आज्ञा के पाए ही यदि हितोपयुक्त कार्य किया जाय तो मन में स्थित स्वामिभक्ति का द्योतक होता है ।

युधिष्ठिर—आर्य जयन्धर !

कञ्चुकी—आज्ञा दीजिए महाराज !

युधिष्ठिर—जाओ, अभीष्ट संवाददाता पाञ्चालक को पारितोषिक प्रदान से सन्तुष्ट करो।

कञ्चुकी—अच्छा, महाराज की जो आज्ञा। ( यह कह कर पाञ्चालक के साथ चल पड़ता है )

द्रौपदी—महाराज ! फिर किसलिए स्वामी भीमसेन ने उस दुरात्मा से कहा—'हम पाँचो भाइयों में से किसी एक से जिससे तुम्हारी इच्छा हो युद्ध कर सकते हो' । यदि वह

'पञ्चानामप्यस्माकं मध्ये येन ते रोचते तेन सह ते सङ्ग्रामो भवतु' इति। यदि माद्रीसुतयोरेकतरेण सह सङ्ग्रामस्तेन प्रार्थितो भवेत्ततोऽत्याहितं भवेत्। )

युधिष्ठिर—कृष्णे, एवं मन्यते जरासन्धघाती। हतसकलसुहृद्बन्धुवीरानुजराजन्यासु कृपकृतवर्माश्वत्थामशेषास्वेकादशस्वक्षौहिणीष्वबान्धवः शरीरमात्रविभवः कदाचिदुत्सृष्टनिजाभिमानो धार्तराष्ट्रः परित्यजेदायुधं तपोवनं वा व्रजेत्सन्धिं वा पितृमुखेन याचेत, एवं सति सुदूरमतिक्रान्तः प्रतिज्ञाभारो भवेत्सकलरिपुजयस्येति। समरं प्रतिपत्तुं पञ्चानामपि पाण्ड-

---

भणितः=उक्तः, 'गौणे कर्मणि दुह्यादेरि'त्यभियुक्तोक्त्या गौणे कर्मणि क्तप्रत्ययः। ते=तुभ्यम्, रोचते=रुचिर्भवति, अभिलष्यतीत्यर्थः। ते=तव। भणित इत्यस्य मुख्यं कर्म इति पर्यन्तम्। माद्रीसुतयोः=नकुलसहदेवयोः, एकतरेण=अन्यतरेण, प्रार्थितः=याचितः, अत्याहितं=महाभयम्, अत्याहितं महाभीतिरित्यर्थः। यदि भवेत्तदाऽत्याहित भवेदित्यर्थः।

एव=हतसकलेत्याद्युक्तम्, जरासन्धघाती=जरासन्धनामकनृपस्य हन्ता, हतसकलसुहृद्बन्धुवीरानुजराजन्यासु=हता सकलसुहृद्बन्धुवीरानुजराजन्या यासु, तासु, कृपकृतवर्माश्वत्थामशेषासु=कृपः द्रोणश्यालः कृतवर्मा वीरविशेषः, अश्वत्थामा द्रोणपुत्र एतेषां द्वन्द्वः, ते शेषा अवशिष्टा जीविता यासु तासु, इदं द्वयमक्षौहिणीविशेषणम्। अतएव, अबान्धवः=बन्धुरहित., शरीरमात्रविभवः=शरीरमात्रमेव विभव ऐश्वर्यम् यस्य स, उत्सृष्टनिजाभिमान.=उत्सृष्टो त्यक्तो निजाभिमानः स्वाहङ्कारो येन सः, धार्तराष्ट्रः=दुर्योधन., आयुध, परित्यजेत् कदाचिदित्यस्यात्र व्रजने चान्वयः सकलरिपुजयस्य, प्रतिज्ञाभार., सुदूरम्, अतिक्रान्त., भवेदित्यन्वयः। एकस्यापि=पञ्चानां मध्ये कस्यापीत्यर्थ.। समरं=सङ्ग्रामम्, प्रतिपत्तुं=कर्तुम् सुयोधनः, नैव,

---

माद्रीपुत्र नकुल और सहदेव में से किसी एक से युद्ध करने के लिए अभिप्राय व्यक्त करता तब तो महान् अनर्थ हो जाता।

**युधिष्ठिर—**द्रौपदि! जरासध के मारने वाले भीमसेन इस प्रकार सोचते हैं, 'समग्र मित्र, कुटुम्ब, सैनिक, छोटे भाई तथा राजाओं के समाप्त हो जाने पर तथा ग्यारह अक्षौहिणी सेना में से केवल कृप, कृतवर्मा और अश्वत्थामा के शेष रह जाने पर कदाचित् बान्धवरहित, शरीर मात्र से ऐश्वर्यवान् दुर्योधन अपने अहङ्कार का परित्याग करके शस्त्र फेंक दे, और तपोवन में चला जाय अथवा अपने पिता के मुख से सन्धि की याच्ञा करे। ऐसी परिस्थिति में सम्पूर्ण शत्रु पर विजय प्राप्त कर लेने की प्रतिज्ञा का भार बहुत दूर पड़ जायगा। सुयोधन पाँचों पाण्डवों में से किसी एक के साथ भी युद्ध करके सफलता नहीं

ग्रानामेकस्यापि नैव क्षमः सुयोधनः। शङ्के चाहं गदायुधं वृकोदरस्यैवाऽनेन।
अयि सुक्षत्रिये, पश्य—

क्रोधोद्गूर्णगदस्य नास्ति सदृशः सत्य रणे मारुतेः
कौरव्ये कृतहस्तता पुनरियं देवे यथा सीरिणि।
स्वस्त्यस्तूद्धतधार्तराष्ट्रनलिनीनागाय वत्साय मे
शङ्के तस्य सुयोधनेन समरं नैवेतरेषामहम्॥ १३॥

क्षमः=समर्थ इत्यन्वयः। अनेन=दुर्योधनेन, (सह) शङ्के=सन्देह्मि, गदायुद्धे वृकोदरो विजयी स्यान्नवेतिसन्देह इति भावः।

अन्वयः—रणे, क्रोधोद्गूर्णगदस्य, मारुते', सदृशः (अन्यः) न, अस्ति, सत्यम्, पुनः, देवे, सीरिणि, यथा, कृतहस्तता (तथा) इयम्, कौरव्ये, मे, उद्धतधार्तराष्ट्रनलिनीनागाय, वत्साय, स्वस्ति, अस्तु, अहम्, तस्य, सुयोधनेन, समरम्, शङ्के, इतरेषाम्, न, एव, (शङ्के)॥ १३॥

सन्देहमेवाह—क्रोधोद्गूर्णेति। रणे=सङ्ग्रामे, क्रोधोद्गूर्णगदस्य=क्रोधेन उद्गूर्णा उद्यता गदा येन तस्य, मारुते.=भीमस्य, सदृश'=तुल्यः (अन्यः) नास्ति, (इति) सत्यम्, सत्यमित्यर्धस्वीकारे प्रयुज्यते। पुनः=यद्यप्येवं तथापि, देवे=भगवति, सीरिणि=सीरः हलमस्यास्ति सीरी वलभद्रः 'अत इन्ठनावि'तीन्प्रत्ययः। यथा, कृतहस्तता=हस्तकौशलम् (तथा) इयं=कृतहस्तता, कौरव्ये=दुर्योधने. अस्तीति शेष'। अतएव संशय इति भाव'। मे=मम, उद्धतधार्तराष्ट्रनलिनीनागाय=उद्धतः उत्कटो यो धार्तराष्ट्' स एव नलिनी कमलिनी तस्या. नागाय हस्तिन इव, वत्साय=भीमाय, स्वस्ति=मङ्गलम्, अस्तु। नलिन्या विध्वंसकहस्तीव धार्तराष्ट्रस्य विध्वसको भीमो भवत्विति भाव.। अहम्, तस्य=भीमस्य, सुयोधनेन, सह, समरं=सङ्ग्रामम्, शङ्के, इतरेषाम्=अस्मदादीनां समर नैव शङ्के अन्यस्य विजये संशय एव नास्तीत्यर्थ.।

अत्र द्वितीये पूर्णोपमा तृतीये, रूपकम् तुर्य उत्प्रेक्षाबोधकशङ्के-शब्दप्रयोगेऽपि नास्ति तस्या. सम्भवः। अत्र सम्भावनाया अभावात् वस्तुनो वास्तविकत्वात्। शार्दूलविक्रीडितं छन्द॥ १३॥

प्राप्त कर सकना मुझे आशङ्का होती है—गदायुद्ध भीम का हो इसके साथ चल रहा है।
अयि अत्रियवंशसमुद्भवे। देखिए'—

यह सत्य है कि क्रोध से गदा उठा लेने पर युद्धस्थल में वायुपुत्र भीमसेन के समान कोई नहीं है परन्तु भगवान् रेवतीरमण [ वलराम ] की तरह दुर्योधन गदायुद्ध में सिद्धहस्त हैं। असभ्य कौरवरूपी कमलिनी के लिए गजराज मेरे प्रिय अनुज का कल्याण हो।

( नेपथ्ये )

तृषितोऽस्मि भोस्तृषितोऽस्मि, सम्भावयतु कश्चित्सलिलच्छायासम्प्रदानेन माम् ।

युधिष्ठिर —( आकर्ण्य । ) कः कोऽत्र भोः ।

( प्रविश्य । )

कञ्चुकी—आज्ञापयतु देवः ।

युधिष्ठिर—ज्ञायतां किमेतत् ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रम्य, पुन प्रविश्य । ) देव, क्षुण्मानतिथिरुपस्थितः ।

युधिष्ठिर—शीघ्रं प्रवेशय ।

---

नेपथ्ये—जवनिकान्तर्भूमौ ।

तृषित=पिपासितः, सलिलच्छायाप्रदानेन=सलिलञ्च छाया चेत्यनयोर्द्वन्द्वः इति सलिलच्छाये तयोः प्रदानेन, अत्र 'जातिरप्राणिनामि'त्येकवद्भावस्तु न, तस्य द्रव्यजातीयानामेव द्वन्द्वे प्रवृत्तेः, अत्रच्छायाया अद्रव्यत्वाद् । माम्=मुनिम्, सम्भावयतु=सान्त्वयतु ।

अत्र=द्वारे, कः कः, अस्तीति शेषः ।

एतत्=भोः तृषितोऽस्मीत्यादिवचनम्,

क्षुण्मान्=बुभुक्षितः, अतिथिः=प्राघुणः, ( पाहुन ) इति प्रसिद्धः 'प्राघुणस्त्वतिथिर्द्वयो'रितित्रिकाण्डशेषः ।

---

मेरा अनुमान है—'सुयोधन के साथ उसी का संग्राम हो रहा है किसी दूसरे व्यक्ति का नहीं' ॥ १३ ॥

[ नेपथ्य में ]

प्यासा हूँ । अरे भाई मैं प्यासा हूँ । कोई जल और छाया ( आश्रय ) प्रदान करके मुझे सन्तुष्ट करे ।

युधिष्ठिर—( सुनकर ) कौन, कोई यहाँ है ?

( प्रवेशकर )

कन्चुकी—आज्ञा दीजिए, महाराज !

युधिष्ठिर—देखो, यह क्या बात है ?

कन्चुकी—महाराज की आज्ञा शिरोधार्य । ( चला जाता है और फिर लौट आता है ) महाराज, बुभुक्षित [ भूखा हुआ ] अभ्यागत आया है ।

युधिष्ठिर—शीघ्र ही बुला लाओ ।

कञ्चुकी—यदाज्ञापयति देवः। ( इति निष्क्रान्तः। )

( ततः प्रविशति मुनिवेषधारी चार्वाको नाम राक्षसः। )

राक्षसः—( आत्मगतम्। ) एषोऽपि चार्वाको नाम राक्षसः सुयोधनस्य मित्रं पाण्डवान्वञ्चयितुं भ्रमामि। ( प्रकाशम्। ) तृषितोऽस्मि। सम्भावयतु मां कश्चिज्जलच्छायाप्रदानेन। ( इति राज्ञः समीपमुपसर्पति। )

( सर्वे उत्तिष्ठन्ति। )

युधिष्ठिरः—मुने, अभिवादये।

राक्षसः—अकालोऽयं समुदाचारस्य। जलप्रदानेन सम्भावयतु माम्।

युधिष्ठिरः—मुने, इदमासनम्। उपविश्यताम्।

राक्षसः—( उपविश्य। ) ननु भवताऽपि क्रियतामासनपरिग्रहः।

युधिष्ठिरः—( उपविश्य। ) कः कोऽत्र भोः, सलिलमुपनय।

( प्रविश्य गृहीतभृङ्गारः। )

---

आत्मगतम् = अश्राव्यम्। वञ्चयितुं = प्रतारयितुम्, प्रकाशं = सर्वश्राव्यम्, उपसर्पति = गच्छति।

अभिवादये = प्रणमामि।

समुदाचारस्य = सत्कारव्यवहारस्य, अकालः = असमयः, तत्र हेतुगर्भवाक्यमाह— जलप्रदानेनेति। यतः पिपासुरस्म्यतः पिपासाशान्तिरेव कर्तव्येतिभावः।

आसनपरिग्रहः = आसनग्रहणम्, आसने उपविश्यतामित्यर्थः।

उपनय = आनय।

---

कञ्चुकी—अच्छा जो आज्ञा महाराज ! ( चला जाता है )

( इसके अनन्तर मुनि के स्वरूप में चार्वाक राक्षस का प्रवेश )

राक्षस—( मन ही मन ) यह भी मैं सुयोधन का अभिन्न हृदय [ मित्र ] चार्वाक नाम का राक्षस पाण्डवों को प्रतारित [ ठगना ] करने के लिए घूम रहा हूँ। ( प्रकटरूपसे ) मुझे प्यास लगी है कोई जल और आश्रयस्थान देकर मुझे शान्ति दे ! ( यह कहकर राजा के समीप जाता है )

( सब लोग उठ खडे होते हैं )

युधिष्ठिर—तपस्विन् ! नमस्कार।

राक्षस—इस प्रकार के व्यवहार का समय नहीं है। जल पिलाकर ही मुझे सन्तुष्ट कीजिए।

युधिष्ठिर—महात्मन् ! यह आसन है बैठ जाइए।

राक्षस—( बैठकर ) अच्छा आप भी आसन पर बैठ जाइए।

युधिष्ठिर—( बैठकर ) कोई है ? जल लाओ। ( जलपात्र लेकर प्रवेश करता है )

कञ्चुकी—( उपसृत्य । ) महाराज, शिशिरसुरभिसलिलसंपूर्णोऽयं भृङ्गारः पानभाजनं चेदम् ।

युधिष्ठिरः—मुने, निर्वर्त्यतामुदन्याप्रतिकारः ।

राक्षस —(पादौ प्रक्षाल्योपस्पृशन्विचिन्त्य ।) भोः, क्षत्रियस्त्वमिति मन्ये ।

युधिष्ठिरः—सम्यग्वेदी भवान् ।

राक्षसः—सुलभश्च स्वजनविनाशः सङ्ग्रामेषु प्रतिदिनमतो नादेयं भवद्भ्यो जलादिकम् । भवतु । छाययैवानया सरस्वतीशिशिरतरङ्गस्पृशा मरुता चानेन विगतक्लमो भविष्यामि ।

---

गृहीतभृङ्गारः= गृहीतः भृङ्गारः सुवर्णकृतजलपात्रविशेषः येन सः, शिशिरसुरभिसलिलसम्पूर्णः=शीतलसुगन्धिजलभरितः, पानभाजनं=लघुजलपात्रम् इदम् अस्तीति शेषः ।

मुने=ऋषे ।

राक्षसं राक्षसत्वेनानवगच्छन् युधिष्ठिरः त मुनिशब्देन सम्बोधयति । उदन्याप्रतीकारः=पिपासानिवारणम्, उदकस्येच्छेति उदन्या 'अशनायोदन्याधनाया' इति सूत्रेण निपातनात्क्यच्, उदकस्योदन्नादेशश्च ।

प्रक्षाल्य=जलेन संशोध्य, उपस्पृशन्=आचामन्, आचमनं, कुर्वन्नित्यर्थः । मन्ये=अवगच्छामि,

सम्यग्वेदी=यथावज्ज्ञाता,

प्रतिदिनसुलभस्वजनविनाशः=प्रतिदिनं दिने दिने सुलभः स्वजनस्य निजबन्धोः विनाशः हननं सङ्ग्रामेषु=समरेषु, भवद्भ्यः=युष्मत्तः, न आदेयम्=ग्राह्यम् । बन्धुविनाशेनाशौचव्याप्तत्वादाशौचिनो जलग्रहणस्य शास्त्रे निषिद्धत्वादिति भावः । सरस्वतीशिशिरतरङ्गस्पृशा=सरस्वत्याः तन्नामकनद्या यः शिशिरतरङ्गः शीतलवीचिः

---

कञ्चुकी—( समीप आकर ) महाराज, ठण्डे और सुगन्धित जल से भरा हुआ स्वर्ण पात्र है और यह गिलास भी है ।

युधिष्ठिर—विरागिन् ! प्यास शान्त कीजिए ।

राक्षस—( पैर धोकर और आचमन करता हुआ सोचकर ) भो ! मैं समझता हूं—तुम क्षत्रिय हो ।

युधिष्ठिर—आप ठीक समझते हैं ।

राक्षस—युद्ध में प्रतिदिन स्वजनों का मरण तो स्वाभाविक है, अतः आप लोगों का

द्रौपदी—बुद्धिमदिए, वीएहि महेसिं इमिणा तालविन्तेण। ( बुद्धिमतिके, वीजय महर्षिमनेन तालवृन्तेन। )

( चेटी तथा करोति। )

राक्षसः—भवति, अनुचितोऽयमस्मासु समुदाचारः।

युधिष्ठिरः—मुने, कथय कथमेवं भवान्परिश्रान्तः।

राक्षसः—मुनिजनसुलभेन कौतूहलेन तत्रभवतां महाक्षत्रियाणां द्वन्द्वयुद्धमवलोकयितुं पर्यटामि समन्तपञ्चकम्। अद्य तु बलवत्तया शरदातपस्यापर्याप्तमेवावलोक्य गदायुद्धमर्जुनसुयोधनयोरागतोऽस्मि।

---

तं स्पृशतीति सरस्वतीशिशिरतरङ्गस्पृक् 'स्पृशोऽनुदके क्विन्'इति क्विन्प्रत्ययः। शिशिरः स्याद्दतोर्भेदे तुषारे शीतलेऽन्यव'दिति विश्वः। मरुता = वायुना, विगतक्लमः = त्यक्तश्रमः।

तालवृन्तेन = तालस्येव वृन्तमस्येति तालवृन्तम्, तेन, व्यजनेनेत्यर्थः। महर्षिम् = तपस्विनम्, वीजय = वायुमन्तं कुरु।

तथा करोति = वीजयति।

भवति = चेटि!, अस्मासु=मुनिजनेषु, समुदाचारः=व्यजनचालनादिव्यापारः।

परिश्रान्तः = सक्लमः।

मुनिजनसुलभेन = ऋषिजनसाधारणेन, कौतूहलेन=कौतुकेन 'कौतूहल कौतुकञ्चे'त्यमरः। तत्रभवतां=वीरश्रेष्ठानाम्, द्वन्द्वयुद्धं=युग्मसङ्ग्रामम्, 'द्वन्द्वं कलहयुग्मयो'रित्यमरः। पर्यटामि=भ्रमामि, समन्तपञ्चकम्=देशविशेषम्, शरदातपस्य= शरदि आश्विनकार्तिकाभ्यामृतौ य आतपः रौद्रः ( धूप ) इति प्रसिद्धः। तस्य, बलवत्तया = तीक्ष्णतया, अपर्याप्तम् = अपूर्णम्, गदायुद्धम् = गदया सङ्ग्रामम्, अर्जुनसुयोधनयोः = किरीटिदुर्योधनयोः।

---

जल प्राप्त नहीं है। अच्छा, छाया से और सरस्वती के शीतल लहरों का स्पर्श किए हुए इस वायु से ही थकावट दूर करूँगा।

द्रौपदी—बुद्धिमति के! इस पङ्खे से महात्माजी को हवा करदो।

( चेटी वैसा ही करती है )

राक्षस—हम लोगों का इस तरह का स्वागत [ स्त्रियों के द्वारा तपस्वियों की सेवा शुश्रूषा ] उचित नहीं।

युधिष्ठिर—महर्षे! कहिए, क्यों आप इतना थक गए हैं?

राक्षस—तपस्वियों के लिए कौतूहल का होना स्वाभाविक है अतएव मैं शूरवीर क्षत्रियों का मल्लयुद्ध देखने के लिए समन्तपञ्चक के चारों ओर घूम रहा हूँ। आज शरदृतु के

( सर्वे विषादं नाटयन्ति । )

कञ्चुकी—मुने, न खल्वेवम् । भीमसुयोधनयोरिति कथय ।

राक्षस—आः, अविदितवृत्तान्त एव कथं मामाक्षिपसि ।

युधिष्ठिर—महर्षे, कथय कथय ।

राक्षस—क्षणमात्रं विश्रम्य सर्वं कथयामि भवतो न पुनरस्य वृद्धस्य ।

युधिष्ठिर—कथय किमर्जुनसुयोधनयोरिति ।

राक्षस—पूर्वमेव कथितं मया प्रवृत्तं गदायुद्धमर्जुनसुयोधनयोरिति ।

युधिष्ठिर—न, भीमसुयोधनयोरिति ।

---

एवम् वक्तव्यमिति शेषः । किं वक्तव्यमिति कञ्चुकी स्वयमेवाह-भीमेति ।

आ इतिकोपे 'आः स्यात्कोपपीडयो' रित्यमरः । अविदितवृत्तान्तः=अज्ञातवार्तः, आक्षिपसि = विपरीतवादिनं कथयसि ।

विश्रम्य = विश्रामं कृत्वा, भवतः = तव, अत्र 'अकथितञ्चे'ति कर्मत्वेन द्वितीया युक्ता तथापि सम्बन्धविवक्षया षष्ठी, इदं द्वितीयाबहुवचनान्तरूपन्तु न सम्भाव्यम् अस्य वृद्धस्येति वाक्यशेषात् । अस्य = कञ्चुकिनः,

अर्जुनसुयोधनयोरिति, गदायुद्धं प्रवृत्तमिति शेषः । किमिति प्रश्ने ।

नेति—अर्जुनसुयोधनयोर्गदायुद्धं न प्रवृत्तमित्यर्थः । तदा कयोरित्याह—भीमसुयोधनयोरिति ।

---

प्रखर धूप के कारण अर्जुन और सुयोधन के गदायुद्ध की समाप्ति पर्यन्त तक न देखकर ही चला आया हूँ ।

( सभी लोग विषाद का अभिनय करते हैं )

**कञ्चुकी**—तपस्विन् ! यह बात नहीं है । 'भीम और सुयोधन' इस प्रकार कहिए ।

**राक्षस**—आः ! जो तुम्हें ठीक समाचार नहीं ज्ञात है तो फिर मुझे झूठा क्यों बनाते हो ?

**युधिष्ठिर**—ऋषिवर्य ! कहिए, कहिए ।

**राक्षस**—थोड़े समय तक विश्राम करके आप से सभी बातें सुना दूँगा परन्तु इस बुड्ढे से नहीं कहूँगा ।

**युधिष्ठिर**—कहिये, अर्जुन और सुयोधन के विषय में क्या है ?

**राक्षस**—पहिले ही मैंने कहा है कि अर्जुन और सुयोधन में गदायुद्ध हो रहा था ।

**युधिष्ठिर**—भीम और सुयोधन में नहीं [ गदायुद्ध हो रहा था ] ।

राक्षस—वृत्तं तत्।

( युधिष्ठिरो द्रौपदी च मोहमुपगतौ । )

कञ्चुकी—( सलिलेनासिच्य । ) समाश्वसितु देवो देवी च।

चेटी—समस्ससदु समस्ससदु देवी। ( समाश्वसितु समाश्वसितु देवी। )

( उभौ संज्ञा लभेते )

युधिष्ठिर—किं कथयसि मुने वृत्तं भीमसुयोधनयोर्गदायुद्धमिति।

द्रौपदी—भअवं, कहेहि कहेहि किं वृत्तं त्ति। ( भगवन्, कथय कथय किं वृत्तमिति। )

राक्षस—कञ्चुकिन्, कौ पुनरेतौ।

कञ्चुकी—एष देवो युधिष्ठिरः। इयमपि पाञ्चालतनया।

---

तत् = भीमसुयोधनयोर्गदायुद्धम्, वृत्त = निष्पन्नम्, समाप्तमित्यर्थः।

मोहम् = मूर्च्छाम्, उपगतौ = प्राप्तौ। राक्षसेन वृत्त तदित्युक्ते भीमो यदि विजयी स्यात्तदाऽर्जुनेन युद्ध स्यादेव नहीति विज्ञायते भीमस्यावसानानन्तर गदायुद्धेऽर्जुनः प्रवृत्त तथा च भीमो मृत इति विज्ञाय द्रौपदीयुधिष्ठिरौ मूर्च्छां प्राप्तौ, इत्याशयः।

आसिच्य—समन्तात्सिक्त्वा, समाश्वसितु = मूर्च्छां त्यजतु। देवः = युधिष्ठिरः, देवी = द्रौपदी।

सन्देहनिवारणार्थं पुनः पृच्छति—किमिति।

एतौ = प्रष्टारौ,

---

राक्षस—वह तो समाप्त हो गया।

( युधिष्ठिर और द्रौपदी दोनों चेतनाशून्य हो जाते हैं )

कञ्चुकी—( जल छिड़ककर ) धैर्य धारण करें महाराज और महारानी!

चेटी—महारानी! धैर्य धारण कीजिए।

( दोनों की मूर्च्छा चली जाती है )

युधिष्ठिर—क्या कह रहे हैं महात्मान्,—'भीम और सुयोधन का गदायुद्ध समाप्त हो गया'?

द्रौपदी—भगवन् कहिए क्या हुआ?

राक्षस—कञ्चुकी! ये दोनों कौन हैं?

कञ्चुकी—यह महाराज युधिष्ठिर हैं और ये पाञ्चालनरेश की दुहिता [ पुत्री ] हैं

राक्षसः—आः, दारुणमुपक्रान्तं मया नृशंसेन ।
द्रौपदी—हा णाह भीमसेण ! ( इति मोहमुपगता । ) (हा नाथ भीमसेन!)
कञ्चुकी—किं नाम कथितम् ।
चेटी—समस्ससदु समस्ससदु देवी । ( समाश्वसितु समाश्वसितु देवी । )
युधिष्ठिरः—( सास्रम् । ) ब्रह्मन् ,

पदे सन्दिग्ध एवास्मिन्दुःखमास्ते युधिष्ठिरः ।
वत्सस्य निश्चिते तत्त्वे प्राणत्यागादय सुखी ॥ १४ ॥

---

अत्र आ इति पीडायाम् । नृशंसेन = घातुकेन परदुःखप्रदायिनेत्यर्थः । दारुणम् = भीषणम्, उपक्रान्तम् = समारब्धम्, कृतमित्यर्थः ।

किन्नामेति = एतावदेव भवत्कथनमुतावशिष्टमप्यस्तीत्यर्थः । अथवा किं शब्दः कुत्सायाम्, नामशब्दो विस्मये, तथा च कुत्सितं विस्मितञ्च कथितमित्यर्थः । विस्मये कारण च न भीमस्य पराजयः सम्भवतीति । 'कि कुत्सायां वितर्के चे'ति, 'नाम कामेऽभ्युपगमे विस्मये स्मरणेऽपि च' इति च मेदिन्यौ ।

अन्वय —अस्मिन् , सन्दिग्धे, एव, पदे, युधिष्ठिरः, दुःखम्, आस्ते, वत्सस्य, तत्त्वे, निश्चिते, ( सति ) अहम्, प्राणत्यागात् , सुखी ॥ १४ ॥

यावत्सन्देहस्तावदेव दुःखं सन्देहनिवृत्यनन्तरन्तु प्राणानेव त्यक्ष्यामीत्याह— पदे सन्दिग्ध इति । अस्मिन् = त्वदुक्ते, सन्दिग्धे = सन्देहाक्रान्ते, एव, पदे=सत्य भीमो मृत इति वस्तुनि सति, युधिष्ठिरः, दुःखम्=पीडाम् , आस्ते=तिष्ठति 'अकर्मक-धातुभि'रिति कर्मत्वम् । वत्सस्य=अनुजस्य, तत्त्वे=सत्यवस्तुनि, निर्णीते=निश्चिते, सति, अहम् = युधिष्ठिरः, प्राणत्यागात्=मरणात् , सुखी = दुःखरहितः, तस्य मरण-निश्चये सति नाहं जीवितुं शक्नोमीति भावः । पथ्यावक्त्रं छन्दः ॥ १४ ॥

---

राक्षस—ओह । मैंने तो महान् अनर्थ कर दिया [ अर्थात् जो इस वृत्तान्त को इनसे कह दिया ।

द्रौपदी—हाय । नाथ ॥ भीमसेन ॥ ( मूर्छित हो जाती हैं )

कञ्चुकी—क्या कहा ?

चेटी—महारानी । धैर्य धारण करें ।

युधिष्ठिर—( आँसू भर कर ) ब्रह्मन् ।

इस सन्देहग्रस्त पद में [ वार्ता में ] युधिष्ठिर को कष्ट होता है । यदि मेरे प्रिय भ्राता [ भीमसेन ] की मृत्यु निश्चय हो गई हो तो यह ( युधिष्ठिर ) प्राण छोड़ कर सुखी होजाय ॥ १४ ॥

राक्षस —( सानन्दमात्मगतम् । ) अयमेव मे यत्नः । (प्रकाशम् ।) यदि त्ववश्यं कथनीयं तदा संक्षेपेण कथयामि न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम् ।

युधिष्ठिर —( अश्रूणि मुञ्चन् । )

सर्वथा कथय ब्रह्मन्संक्षेपाद्विस्तरेण वा ।
वत्सस्य किमपि श्रोतुमेष दत्तः क्षणो मया ॥ १५ ॥

राक्षस —श्रूयताम् ।

अयम् = त्वदीयप्राणत्यागजनकः, यत्नः=कृतिः व्यापार इत्यर्थः ।
संक्षेपेण = समासतः, बन्धुव्यसनम्=स्वजनविनाशः, आवेदयितुम्=कथयितुम् ।
मुञ्चन् = प्रोञ्छन् ।

अन्वय —( हे ) ब्रह्मन् , संक्षेपात् , विस्तरेण, वा, सर्वथा, कथय, वत्सस्य, किमपि, श्रोतुम्, मया, एषः, क्षणः, दत्तः ॥ १५ ॥

सर्वथेति । हे ब्रह्मन्=मुने, संक्षेपात्=स्वल्पवचसा, विस्तरेण=अधिकवचसा, विपूर्वकस्तृधातोः 'प्रथने वावशब्दे' इति शब्दे घञोऽभावे 'ऋदोरप्' इत्यप्प्रत्ययः । वा, सर्वथा=सर्वप्रकारेण, कथय=ब्रूहि, वत्सस्य=अनुजस्य, किमपि=इष्टमनिष्टं वा, श्रोतुम्=आकर्णितुम्, मया, एष =अव्यवहितोत्तरवस्तूपाधिकः, क्षण =कालविशेषः 'कालविशेषोत्सवयो क्षणः' इत्यमर । दत्तः । त्वद्वचनश्रवणार्थं दत्तमना अभूवमित्यभिप्रायः । पथ्यावक्त्र छन्दः ॥ १५ ॥

अन्वय.—तस्मिन् , कौरवभीमयोः, गुरुगदाघोरध्वनौ, संयुगे, 'सति' सीरी, सत्वरम् , आगत , तस्य, अग्रतः, सङ्गरः, चिरम् , अभूत् , तु, हलिना, प्रियशिष्यताम् , आलम्ब्य, रहसि, संज्ञा, आहिता, कुरुत्तमः, याम् , आसाद्य, दुःशासनारौ प्रतिकृतिम्, गतः ॥ १६ ॥

राक्षस—( आनन्दपूर्वक मन ही मन ) इसीलिए तो उपाय कर रहा हूँ । ( प्रकट रूप से ) यदि मुझे अवश्य कहना पड़ रहा है तो संक्षेप में कह रहा हू भाई के दुःख को विस्तारपूर्वक कहना उचित नहीं ।

युधिष्ठिर—( आँसू पोंछता हुआ )

सब तरह से कहिए भगवन् ! संक्षेप में या विस्तारपूर्वक । प्रिय भ्राता के विषय में कुछ भी सुनने के लिए यह समय मैं दे रहा हूँ ॥ १४ ॥

राक्षस—सुनिये :—

तस्मिन्कौरवभीमयोर्गुरुगदाघोरध्वनौ संयुगे

द्रौपदी—( सहसोत्थाय । ) तदो तदो । ( ततस्तत । )

राक्षस —( स्वगतम् । ) कथं पुनरनयोर्लब्धसञ्ज्ञतामपनयामि । ( प्रकाशम् । )

सीरी सत्वरमागतश्चिरमभूत्तस्याग्रत. सङ्गरः ।
आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता
यामासाद्य कुरूत्तमः प्रतिकृति दुःशासनारौ गतः ॥ १६ ॥

युधिष्ठिरः—हा वत्स, वृकोदर ! ( इति मोहमुपगत. । )

द्रौपदी—हा णाह भीमसेण, हा मह परिभवपडीआरपरिच्चत्तजीविअ,

---

बलरामसाहाय्येन दुर्योधनो विजय्यभूदित्याह—तस्मिन्निति । तस्मिन् = अतिविकटे, कौरवभीमयो., गुरुगदाघोरध्वनौ = गुर्वी महती चासौ गदा तस्य घोरध्वनिः विकटशब्दो यत्र तस्मिन् , संयुगे = संग्रामे, सति, श्लोकस्य मध्य एव द्रौपदीवचनं ततस्ततः राक्षसवचनं कथमिति । सीरी = बलभद्र', सत्वरम् = शीघ्रम्, आगतः । युद्धात्पूर्वमेव तीर्थयात्रार्थं गतो बलभद्रस्तस्मिन्नेव काले दैवात्कुरुक्षेत्र आगत इति भाव' । तस्य = बलभद्रस्य, अग्रतः = पुरस्तात् , चिरम् , सङ्गरः = युद्धम् 'सङ्गरो युधि चापदि' इति मेदिनी । अभूत् , तु = किन्तु, हलिना = बलभद्रेण, प्रियशिष्यताम् = प्रिय. शिष्यो यस्य, अथवा प्रियश्चासौ शिष्य , तस्य भाव. ताम् , दुर्योधनो बलरामस्य प्रधानशिष्य आसीदित्यधिक' स्नेहस्तत्रेति भाव. । आलम्ब्य = संगृह्य, रहसि=विविक्ते, संज्ञा = सङ्केतः, आहिता = दत्ता, कुरूत्तमः=कुरुषु श्रेष्ठः, याम्=सज्ञां, सङ्केतम् , आसाद्य = प्राप्य, दुःशासनारौ=दुःशासनशत्रौ, भीम इत्यर्थ । प्रतिकृतिम्= प्रतिक्रियाम् , दु'शासनहननस्येत्यादिः गतः = प्राप्त. । दुःशासनाग्रजेन भीमो हत इति भाव. । शार्दूलविक्रीडितं छन्दः ॥ १६ ॥

---

दुर्योधन और भीम की भीषण गदाध्वनिपूर्ण उस रणभूमि में ...

द्रौपदी—( शीघ्र ही उठकर ) कहो फिर क्या हुआ ?

राक्षस—( मन ही मन ) किस प्रकार इन दोनों को मूर्च्छित करूँगा ( प्रकटरूप से ) शीघ्र ही सकर्षण [ बलराम ] पहुँच गये । उनके समक्ष प्रभूतकाल तक संग्राम होता रहा । हलधर ने शिष्य का पक्षपात करके एकान्त में सकेत किया । जिसे प्राप्त करके कौरवेश्वर [ दुर्योधन ] दुश्शासन के शत्रु का प्रतिकार [ बदला लेना ] करने के लिए कटिबद्ध हो गए ॥ १६ ॥

युधिष्ठिर—हाय ! वत्स भीम !! ( यह कह कर मूर्च्छित हो जाते हैं )

द्रौपदी—हाय नाथ भीमसेन, हाय, मेरे अपमान का बदला लेने में अपने प्राण के

जडासुरवअहिडिम्बकिम्मीरकीचअजरासंधणिसूदण, सोअन्धिअआहरणचाडुआर, देहि मे पडिवअणम्। ( इति मोहमुपगता। ) ( हा नाथ भीमसेन, हा मम परिभवप्रतीकारपरित्यक्तजीवित, जटासुरवकहिडिम्बकिर्मीरकीचकजरासन्धनिषूदन, सौगन्धिकाहरणचाटुकार, देहि मे प्रतिवचनम्। )

कञ्चुकी—( सास्रम्। ) हा कुमार भीमसेन, धार्तराष्ट्रकुलकमलिनीप्रालेयवर्ष, ( ससंभ्रमम्। ) समाश्वसितु महाराजः। भद्रे, समाश्वासय स्वामिनीम्। महर्षे, त्वमपि तावदाश्वासय राजानम्।

राक्षसः—( स्वगतम् ) आश्वासयामि प्राणान्परित्याजयितुम्। ( प्रकाशम्। ) भो भीमाग्रज, क्षणमेकं चीयतां समाश्वासः। कथाऽवशेषोऽस्ति।

---

मम, परिभवप्रतीकारत्यक्तजीवित = परिभवस्य वस्त्रकेशाकर्षणजन्यतिरस्कारस्य यः प्रतीकारो प्रतिक्रिया तदर्थं परित्यक्तं जीवितं प्राणा येन सः तत्सम्बोधने, जटेति= जटासुरादयो राक्षसविशेषाः, कीचकः विराटस्य श्यालः, जरासन्धो मगधराजः, एतेषामपि यो हन्ता सोऽपि दुर्योधनेन हत इत्याश्चर्यमिति गूढाभिप्रायः। सौगन्धिकाहरणचाटुकार = सौगन्धिकस्य शुक्लकह्लारस्य आहरणेन चाटु इष्टं करोति यस्तत्सम्बोधने, प्रतिवचनम्=प्रत्युत्तरम्।

धार्तराष्ट्रकुलकमलिनीप्रालेयवर्ष=धार्तराष्ट्रकुलमेव कमलिनी पद्मं तत्र प्रालेयस्य हिमस्य वर्ष वर्षक !, पचादित्वादच्प्रत्ययः। धृतराष्ट्रकुलविनाशने कमलवनविनाशक तुषारतुल्यत्वमिति भावः।

भद्रे = चेटि, तत्रभवतीम् = पूज्याम्।

राक्षसस्याभीष्टन्तु प्राणत्याजनमेवात आह—आश्वासयामीति। चीयताम्=संगृह्यताम्, कथावशेषः = कथनावशिष्टम्।

---

छोड़ने वाले, हाय जटासुर, वक, हिडिम्ब, किर्मीर, कीचक और जरासन्ध के संहारक तथा सुगन्धित कमलपुष्पों को देकर प्रसन्न रखने वाले। मुझे उत्तर दीजिए। ( मूर्च्छित हो जाती है )

कञ्चुकी—( आँसू भरकर ) हाय कुमार भीमसेन; धार्तराष्ट्र [ कौरव ] वंशकमलिनी के लिए हिमपात सदृश। ( विकल होकर ) महाराज धैर्य धारण कीजिए। कल्याणि। स्वामिनी को धैर्य धारण कराओ। तपस्विन्। आप भी महाराज को सान्त्वना दीजिए।

राक्षस—( मन ही मन ) प्राणों का परित्याग करा देने के लिए सान्त्वना दूंगा। ( प्रकटरूप से ) हे भीम के ज्येष्ठ भ्रात! क्षण भर के लिए धैर्य धारण कीजिए। सन्देश का अन्त हो ही रहा है।

युधिष्ठिर—( समाश्वस्य । ) महर्षे, किमस्ति कथाशेषः ?

द्रौपदी—( प्रतिबुद्धा । ) भअवं, कहेहि कीदिसो कहासेसो त्ति ? ( भगवन् , कथय कीदृशः कथाशेष इति ? )

कञ्चुकी—कथय कथय ।

राक्षस—ततश्च हते तस्मिन्सुक्षत्रिये वीरसुलभां गतिमुपगते समग्रसंगलितं भ्रातृवधशोकजं बाष्पं प्रमृज्य प्रत्यग्रक्षतजच्छटाचर्चितां तामेव गदा भ्रातृहस्ताद् यत्नादाकृष्य निवार्यमाणोऽपि संधित्सुना वासुदेवेन आगच्छागच्छेति सोपहासं भ्रमितगदाझङ्कारमूर्च्छितगम्भीरवचनध्वनिनाहूयमानः कौरवराजेन तृतीयोऽनुजस्ते किरीटी योद्धुमारब्धः । अकृतिनस्तस्य गदाघातान्निधनमुत्प्रेक्षमाणेन कामपालेनार्जुनपक्षपाती देवकीसूनुरतिप्रयत्नात् स्वरथमारोप्य द्वारकां नीतः ।

---

वीरसुलभाम् = वीरप्राप्याम् , सङ्ग्राममृत्युरूपामित्यर्थः । उपगते = प्राप्ते, समग्रसङ्गलितम्=समग्रं निखिलं गलितं निःसृतम् , भ्रातृवधशोकजम् = अनुजविनाशजन्यो यः शोकः तज्जन्यं यद् वाष्पं तदाश्रु तत् , प्रमृज्य=सम्प्रोञ्छ्य, प्रत्यग्रक्षतजच्छटाचर्चिताम्=प्रत्यग्रम् अभिनवम् सद्यो निःसृतमित्यर्थः, यत् क्षतजं रुधिरम् तस्य या छटा समूहः तया चर्चितां व्याप्ताम् । यत्नादिति—यत्ने हेतुः मृतहस्ताद् गृहीतत्वम् । निवार्यमाणः=निषिध्यमानः, सोपहासम्=निन्दावाचकशब्दसहितम् , भ्रमितगदाझङ्कारमूर्च्छितगम्भीरवचनध्वनिना = भ्रमितगदाया झङ्कारेण करणभूतेन मूर्च्छितम् अधःकृतं गम्भीरवचनं धीरवाक्यं येन कर्त्रा स चासौ ध्वनिस्तेन करणभूतेन, केवल गदाझङ्कार एव, श्रूयत इति भावः । तृतीय इति स्वमादाय तृतीय इत्यर्थः । किरीटी = अर्जुनः, अकृतिन. = अनिपुणस्य, गदायुद्धेऽनभिज्ञस्येत्यर्थः । निधनम् = मृत्युम् , उत्प्रेक्षमाणेन = सम्भावयता, कामपालेन = बलभद्रेण, देवकीसूनुः = कृष्णः

---

युधिष्ठिर—( चैतन्य होकर ) भगवन् ! कहिए कथा का अवशिष्ट भाग क्या है ?

द्रौपदी—भगवन् ! कहिए किस प्रकार कथा का अवशिष्टांश है ।

कञ्चुकी—कहिए कहिए ।

राक्षस—अनन्तर उस क्षत्रियोत्तम के मर कर वीरोचित गति को प्राप्त होने पर भ्रातृवध के शोक से निकली हुई सम्पूर्ण अश्रुधाराओं को पोंछकर शीघ्र के प्रहार से टूटे फूटे हुए अङ्गों से बहने वाले रक्त की छटा से रञ्जित उसी भीम की गदा को हाथ से खींच कर सन्धि करने के इच्छुक वासुदेव के द्वारा मना करने पर भी आपके तीसरे भाई अर्जुन ने

युधिष्ठिर—साधु भो अर्जुन, तदैव प्रतिपन्ना वृकोदरपदवी गाण्डीवं परित्यजता । अहं पुनः केनोपायेन प्राणापगमनमहोत्सवमुत्सहिष्ये ।

द्रौपदी—हा णाह भीमसेण, ण जुत्तं दाणि दे कणीअसं भादरं असिक्खिदं गदाये, दारुणस्स सत्तुणो अहिमुहं गच्छन्तं उवक्खिदुम् । ( मोहमुपगता । ) ( हा नाथ भीमसेन, न युक्तमिदानीं ते कनीयांसं भ्रातरमशिक्षितं गदायां दारुणस्य शत्रोरभिमुखं गच्छन्तमुपेक्षितुम् । )

राक्षस—ततश्चाहं···

युधिष्ठिर—भवतु मुने, किमतः परं श्रुतेन । हा तात भीमसेन, कान्तारव्यसनबान्धव, हा मच्छरीरस्थितिविच्छेदकातर, जतुगृहविपत्समुद्रतरण-

---

नीत इति मुख्ये कर्मणि क्तप्रत्ययात्कृष्ण इति प्रथमान्तम्, बलरामः कृष्णं नीत्वा द्वारकां गत इति भावः ।

तदैव=गदाग्रहणसमय एव अथवा भीममृत्युसमय एव, प्रतिपन्ना=प्राप्ता वृकोदरपदवी=भीमवर्त्म स्वर्गमित्यर्थः । गाण्डीवं परित्यजतेति-एतेन यदि त्वया, गाण्डीवो न त्यक्तः स्यात्तदा तवैव विजयः स्यादतस्त्वमपि भीममरणजन्यदुःखादेव मृत इति ध्वनितम् । प्राणापगमनमहोत्सवं=प्राणापगमनं प्राणत्यागः तदेव महोत्सवः तम्, उत्सहिष्ये=करिष्ये ।

उपेक्षितुम्=औदासीन्यं दर्शयितुम् ।

---

'आओ आओ' इस प्रकार के उपहास के साथ घुमाये जाते हुए गदा की झन्कार से विमिश्रित गम्भीर वाणी में कुरुराज के द्वारा ललकारे जाने पर युद्ध करना प्रारम्भ कर दिया ।

युधिष्ठिर—धन्य अर्जुन धन्य ! गाण्डीव धनुष का परित्याग करते हुए उसी क्षण वृकोदर की उपाधि तूने प्राप्त कर लिया और मैं किस उपाय से प्राण छोड़कर हृदय को धैर्य बँधाऊँगा ।

कन्चुकी—हाय नाथ भीमसेन ! प्रबल शत्रु के सम्मुख जाते हुए गदायुद्ध में अनभिज्ञ अपने कनिष्ठ भ्राता की उपेक्षा करना तुम्हारे लिए उचित नहीं ।

( यह कह कर चेतना रहित हो जाती हैं )

राक्षस—इसके अनन्तर मैंने···

युधिष्ठिर—बस, तपस्विन् ! रहने दीजिए इसके आगे सुनने से क्या प्रयोजन ? हाय भाई भीमसेन, हाय दुर्गम वनों के पथप्रदर्शक, हाय मेरे शरीर की स्थिति के भङ्ग के लिए कायर, हाय लाक्षागृह के कष्टरूपी समुद्र से पार लगाने वाले जलयान [ जहाज ], हाय

यानपात्र, हा किर्मीरहिडिम्बासुरजरासन्धविजयमल्ल, हा कीचकसुयोधनानुजकमलिनीकुञ्जर, हा द्यूतपणप्रणयिन् , हा कौरववनदावानल,

निर्लज्जस्य दुरोदरव्यसनिनो वत्स त्वया सीदता
भक्त्या मे समदद्विपाऽयुतबलेनाङ्गीकृता दासता ! ।
किं नामाऽपकृतं मया तदधिकं त्वय्यद्य निर्वत्सलं
त्यक्त्वाऽनाथमबान्धवं सपदि मां येनासि दूरं गतः ॥ १७ ॥

---

द्यूतपणप्रणयिन् = द्यूते अक्षक्रीडायाम् पणः उत्सृष्टधनतुल्यः अत एव प्रणयी स्नेहपात्रम् तत्सम्बोधने, द्यूते स्वीयमेव वस्तु पणीक्रियत इति भावः। कौरववनदावानल = कौरवा एव वनं तस्मिन् , दावानल वनाग्नितुल्य ।

अन्वय —( हे ) वत्स !, दुरोदरव्यसनिनः, निर्लज्जस्य, मे, भक्त्या, समदद्विपायुतबलेन, सीदता, त्वया, दासता, अङ्गीकृता, अद्य, त्वयि, तदधिकम्, मया, किं नाम, अपकृतम्, येन, निर्वत्सलम्, अबान्धवम्, अनाथम्, माम्, सपदि, त्यक्त्वा, दूरम् , गतः, असि ॥ १७ ॥

इदानीं कमपराध मत्वा त्वं गत इत्याह—निर्लज्जस्येति । वत्स = प्रिय, दुरोदरव्यसनिन. = दुरोदरे द्यूते व्यसनी आसक्त तस्य, 'द्यूते दुरोदर' मित्यमरः। अत एव निर्लज्जस्य = त्रपारहितस्य, मे = मम, भक्त्या = अतिश्रद्धया, समदद्विपायुतबलेन = समदाः मत्ता ये द्विपाः हस्तिनः तेषाम्, अयुतं दशसहस्राणि, तस्य यद्बलं तत्तुल्यं यस्य तेन, तथापि सीदता = क्लिश्यता, त्वया, दासता = भृत्यत्वम्, अङ्गीकृता, हारितेन दुर्योधनस्य दासत्वमङ्गीकृतम्, अथवा गुप्तवाससमये विराटस्य, अद्य=इदानीम् ,अस्मिन्नहनि वा, तदधिकम् = दासताऽधिकम्, त्वयि = भीमे, मया, किं नाम, अपकृतम्, न किमपीत्यर्थः । येन = यत्कारणेन, निर्वत्सलम् = भ्रातृस्नेहरहितम्, अबान्धवम्=बन्धुरहितम्, अत एव अनाथम्, माम्, सपदि=शीघ्रम्, त्यक्त्वा, दूरम्= विप्रकृष्टम् गतः, असि। अत्र विशेषणस्य साभिप्रायकत्वात्परिकरोऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

---

किर्मीर, हिडिम्बासुर और जरासन्ध पर विजय प्राप्त करने वाले योद्धा, हाय कीचक और सुयोधन के भ्रातारूपी कमलवन के मत्त मातङ्ग ! हे वत्स ! मतवाले दश हजार हाथियों के बल से सम्पन्न तूने उस समय जुए के व्यसन में रत अतएव निर्लज्ज मेरी किङ्करता को आदर के साथ स्वीकार किया था उससे अधिक मैंने तुम्हारा क्या अपकार किया है कि हे नाथ ! मुझे मेरे कुटुम्बियों के साथ छोडकर शीघ्र ही चले जा रहे हो। आज वह तुम्हारा प्रेम कहां है ? ॥ १७ ॥

युधिष्ठिर—साधु भो अर्जुन, तदैव प्रतिपन्ना वृकोदरपदवी गाण्डीवं परित्यजता। अहं पुनः केनोपायेन प्राणापगमनमहोत्सवमुत्सहिष्ये।

द्रौपदी—हा णाह भीमसेण, ण जुत्तं दाणि दे कणीअसं भादरं असिक्खिदं गदाये, दारुणस्स सत्तुणो अहिमुहं गच्छन्तं उवक्खिदुम्। ( मोहमुपगता। ) ( हा नाथ भीमसेन, न युक्तमिदानीं ते कनीयासं भ्रातरमशिक्षितं गदायां दारुणस्य शत्रोरभिमुखं गच्छन्तमुपेक्षितुम्। )

राक्षस—ततश्चाहं...

युधिष्ठिर—भवतु मुने, किमतः परं श्रुतेन। हा तात भीमसेन, कान्तारव्यसनबान्धव, हा मच्छरीरस्थितिविच्छेदकातर, जतुगृहविपत्समुद्रतरण-

---

नीत इति मुख्ये कर्मणि क्तप्रत्ययात्कृष्ण इति प्रथमान्तम्, बलरामः कृष्णं नीत्वा द्वारकां गत इति भावः।

तदैव = गदाग्रहणसमय एव अथवा भीममृत्युसमय एव, प्रतिपन्ना = प्राप्ता वृकोदरपदवी = भीमवर्त्म स्वर्गमित्यर्थः। गाण्डीवं परित्यजतेति–एतेन यदि त्वया, गाण्डीवो न त्यक्तः स्यात्तदा तवैव विजयः स्यादतस्त्वमपि भीममरणजन्यदुःखादेव मृत इति ध्वनितम्। प्राणापगमनमहोत्सवं=प्राणापगमनं प्राणत्यागः तदेव महोत्सवं तम्, उत्सहिष्ये = करिष्ये।

उपेक्षितुम् = औदासीन्यं दर्शयितुम्।

---

'आओ आओ' इस प्रकार के उपहास के साथ घुमाये जाते हुए गदा की झन्कार से विमिश्रित गम्भीर वाणी में कुरुराज के द्वारा ललकारे जाने पर युद्ध करना प्रारम्भ कर दिया।

युधिष्ठिर—धन्य अर्जुन धन्य! गाण्डीव धनुष का परित्याग करते हुए उसी क्षण वृकोदर की उपाधि तूने प्राप्त कर लिया और मैं किस उपाय से प्राण छोड़कर हृदय को धैर्य बँधाऊँगा।

कन्चुकी—हाय नाथ भीमसेन! प्रबल शत्रु के सम्मुख जाते हुए गदायुद्ध में अनभिज्ञ अपने कनिष्ठ भ्राता की उपेक्षा करना तुम्हारे लिए उचित नहीं।

( यह कह कर चेतना रहित हो जाती हैं )

**राक्षस**—इसके अनन्तर मैंने

**युधिष्ठिर—बस,** तपस्विन्! रहने दीजिए इसके आगे सुनने से क्या प्रयोजन? हाय **भाई भीमसेन,** हाय दुर्गम वनों के पथप्रदर्शक, हाय मेरे शरीर की स्थिति के भङ्ग के लिए **कायर,** हाय लाक्षागृह **के कष्ट**रूपी समुद्र से पार लगाने वाले जलयान [ जहाज ], हाय

यानपात्र, हा किर्मीरहिडिम्बासुरजरासन्धविजयमल्ल, हा कीचकसुयोधनानुजकमलिनीकुञ्जर, हा द्यूतपणप्रणयिन् , हा कौरववनदावानल,

निर्लज्जस्य दुरोदरव्यसनिनो वत्स त्वया सीदता
भक्त्या मे समदद्विपाऽयुतबलेनाङ्गीकृता दासता ! ।
किं नामाऽपकृतं मया तदधिकं त्वय्यद्य निर्वत्सलं
त्यक्त्वाऽनाथमबान्धवं सपदि मां येनासि दूरं गतः ॥ १७ ॥

द्यूतपणप्रणयिन्=द्यूते अक्षक्रीडायाम् पण उत्सृष्टधनतुल्यः अत एव प्रणयी स्नेहपात्रम् तत्सम्बोधने, द्यूते स्वीयमेव वस्तु पणीक्रियत इति भावः । कौरववनदावानल=कौरवा एव वनं तस्मिन् , दावानल वनाग्नितुल्य ।

अन्वय —( हे ) वत्स !, दुरोदरव्यसनिनः, निर्लज्जस्य, मे, भक्त्या, समदद्विपायुतबलेन, सीदता, त्वया, दासता, अङ्गीकृता, अद्य, त्वयि, तदधिकम्, मया, किं नाम, अपकृतम्, येन, निर्वत्सलम्, अबान्धवम्, अनाथम्, माम्, सपदि, त्यक्त्वा, दूरम् , गत , असि ॥ १७ ॥

इदानीं कमपराध मत्वा त्वं गत इत्याह—निर्लज्जस्येति । वत्स=प्रिय, दुरोदरव्यसनिनः=दुरोदरे द्यूते व्यसनी आसक्त तस्य, 'द्यूते दुरोदर' मित्यमरः । अत एव निर्लज्जस्य=त्रपारहितस्य, मे=मम, भक्त्या=अतिश्रद्धया, समदद्विपायुतबलेन=समदाः मत्ता ये द्विपाः हस्तिन तेषाम्, अयुतं दशसहस्राणि, तस्य यद्बलं तत्तुल्यं बलं यस्य तेन, तथापि सीदता=क्लिश्यता, त्वया, दासता=भृत्यत्वम्, अङ्गीकृता, द्यूते हारितेन दुर्योधनस्य दासत्वमङ्गीकृतम्, अथवा गुप्तवाससमये विराटस्य, अद्य=इदानीम् ,अस्मिन्नहनि वा, तदधिकम्=दासताऽधिकम्, त्वयि=भीमे, मया, किं नाम, अपकृतम्, न किमपीत्यर्थः । येन=यत्कारणेन, निर्वत्सलम्=भ्रातृस्नेहरहितम्, अबान्धवम्=बन्धुरहितम्, अत एव अनाथम्, माम्, सपदि=शीघ्रम्, त्यक्त्वा, दूरम्=विप्रकृष्टम् गतः, असि । अत्र विशेषणस्य साभिप्रायकत्वात्परिकरोऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥

किर्मीर, हिडिम्बासुर और जरासन्ध पर विजय प्राप्त करने वाले योद्धा, हाय कीचक और सुयोधन के भ्रातारूपी कमलवन के मत्त मातङ्ग ! हे वत्स ! मतवाले दश हजार हाथियों के बल से सम्पन्न तूने उस समय जुए के व्यसन में रत अतएव निर्लज्ज मेरी किङ्करता को आदर के साथ स्वीकार किया था उससे अधिक मैंने तुम्हारा क्या अपकार किया है कि हे नाथ ! मुझे मेरे कुटुम्बियों के साथ छोडकर शीघ्र ही चले जा रहे हो । आज वह तुम्हारा प्रेम कहा है ? ॥ १७ ॥

द्रौपदी—( संज्ञामुपलभ्योत्थाय च । ) महाराअ किं एदं वट्टइ । ( महाराज, किमेतद्वर्तते । )

युधिष्ठिरः—कृष्णे, किमन्यत् ?

स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा
मदान्धमगधाधिपद्विरदसंधिभेदाशनिः ।
गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ॥ १८ ॥

एतद् = मुनिभिरुक्तम्, किं वर्त्तते = किमर्थकमस्ति, अस्य कोऽभिप्राय इत्यर्थः ।

अन्वय.—सः, कीचकनिषूदनः, वकहिडिम्बकिर्मीरहा, मदान्धमगधाधिपद्विरद-सन्धिभेदाशनिः, गदापरिघशोभिना, भुजयुगेन, तेन, अन्वितः, तव, प्रियः, मम, अनुजः, अर्जुनगुरु', अस्तम्, गत', किल ॥ १८ ॥

मुनिभिरुक्तस्याभिप्रायमेवाह—स कीचकेति । सः=सर्वजनवेद्य., कीचकनिषूदनः= विराटश्यालस्य हन्ता, वकहिडिम्बकिर्मीरहा = वकासुरहिडिम्बासुरकिर्मीरनामक-राक्षसानां हन्ता, मदान्धमगधाधिपद्विरदसन्धिभेदाशनिः = मदान्धो यो मगधाधिपः जरासन्धः स द्विरद. हस्ती इव, उपमितिसमासः । तस्य सन्धिभेदे जराराक्षसीकृत-संश्लेषस्य भेदने अशनिः वज्र इव । अनेन विशेषणत्रयेण महापराक्रमिणो वधो जात इत्येको महाखेदे हेतु' । गदापरिघशोभिना = गदा परिघ इव तेन शोभते इति तथा भूतेन, तेन = प्रसिद्धेन, भुजयुगेन = युग' रथाङ्गकाष्ठविशेष इव भुजः तेन, अथवा भुजयुग्मेन 'यानाद्यङ्गे युग. पुंसि युगं युग्मे कृतादिषु' इत्यमरः । अन्वितः, खेदे द्वितीयं हेतुमाह-तवेति । तव = स्त्रिया., प्रिय =स्नेही तं विना त्वमपि जीवितुं न शक्नोषीति भावः । तृतीयमाह—ममेति । मम; अनुजः = कनिष्ठभ्राता, कनिष्ठभ्रात-र्यतीव स्नेहो भवतीति तदभावेऽहमपि जीवितु न शक्नोमीति भावः । चतुर्थहेतु-माह-अर्जुनेति । अर्जुनगुरुः = अर्जुनस्य गुरुः श्रेष्ठः श्रेष्ठस्य विपत्तौ स्वयमपि विपन्न एवेति भावः । एतेन नकुलसहदेवावपि न जीवितु शक्नुत इति ध्वनितम् । अस्तम्= विनाशम्, गतः किल इति सम्भावनायाम् 'वार्तासम्भाव्ययो किल' इत्यमरः ।

द्रौपदी—( चैतन्य होकर और उठ कर ) महाराज यह क्या है ?

युधिष्ठिर—कृष्णे ! और क्या है ? —

वह कीचक निहन्ता वक, हिडिम्ब और किर्मीर घाती, मदोन्मत्त मगधराजरूप वारण [ हाथी ] के हड्डियों की सन्धियों को भग्न करने से वज्र के सदृश, गदा और मुद्गर से सुशोभित दोनों बाहुओं से युक्त, आपका प्रियतम, मेरा कनिष्ठ भ्राता तथा अर्जुन का ज्येष्ठ भ्राता [ भीम ] आज अस्त हो गया ॥ १८ ॥

द्रौपदी—णाह भीमसेण, तुए किल मे केसा संजमिदव्वा । ण जुत्तं वीरस्स खत्तिअस्स पडिण्णादं सिढिलेदुम् । ता पडिवालेहि मं जाव उवसप्पामि । ( पुनर्मोहमुपगता । ) ( नाथ, भीमसेन, त्वया किल मे केशाः संयमितव्या । न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम् । तत्प्रतिपालय मां यावदुपसर्पामि । )

युधिष्ठिरः—( आकाशे । ) अम्ब पृथे, श्रुतोऽयं तव पुत्रस्य समुदाचारः । मामेकमनाथं विलपन्तमुत्सृज्य क्वापि गतः । तात जरासन्धशत्रो, किं नाम वैपरीत्यमेतावता कालेनाल्पायुषि त्वयि समालोकितं जनेन । अथवा मयैव बहूपलब्धम् ।

दत्त्वा मे करदीकृताखिलनृपां यन्मेदिनीं लज्जसे
द्यूते यच्च पणीकृतोऽपि हि मया न क्रुध्यसि प्रीयसे ।

---

तथा चैतद्वचसा सम्भावयामि भीमस्य मृत्युमित्याकूतम् । अत्र द्वितीयचरणे लुप्तोपमाऽलङ्कारः, चतुर्थे, उल्लेखः । पृथ्वी छन्दः ॥ १८ ॥

सयमयितव्याः=बन्धनीयाः । शिथिलयितुम्=उपेक्षितुम्, एतेन प्रतिज्ञापूर्तिं करिष्यस्येवेति ध्वनितम् । उपसर्पामि=समीपमागच्छामि ।

समुदाचारः=व्यवहारः, इत्थं न कर्तव्यं तेनेति भावः । अल्पायुषि=अल्पदिवसजीविनि, वैपरीत्यम्=चिरायुष्ट्वविरुद्धसूचकम्, किं नाम, समालोकितं, जनेनेत्यन्वयः । उपलब्धम्=प्राप्त, दृष्टमिति यावत् ।

अन्वयः—करदीकृताखिलनृपाम्, मेदिनीम्, मे, दत्त्वा, यत्, लज्जसे, मया, द्यूते, पणीकृतोऽपि, यच्च, न, क्रुध्यसि, हि, प्रीयसे, मम, स्थित्यर्थम्, मत्स्यराजभवने यत्, सूदताम्, प्राप्तः, असि, (हे) वत्स !, ते, सहसा, विनश्वरस्य, एतानि, चिह्नानि, दृष्टानि ( मया ) ॥ १९ ॥

किमुपलब्धमित्याह—दत्त्वेति । करदीकृताखिलनृपाम्=करदीकृताः अखिल-

---

द्रौपदी—स्वामिन् वृकोदर । मेरी वेणी आपको बाँधना है । वीर क्षत्रिय के लिए प्रतिज्ञा ढीली करना उचित नहीं, अतः मैं आप के समीप आ रही हूँ आप अपनी प्रतिज्ञा पूर्ण कीजिए ( फिर मूर्च्छित हो जाती हैं )

युधिष्ठिर—( आकाश की ओर देखकर ) मात पृथे ! [ कुन्ति ! ] यह अपने पुत्र का दुःखद वृत्तान्त सुनी ! मुझ असहाय को अकेला विलखते हुए छोड़कर वह न मालूम कहा चला गया ? हे तात जरासन्ध के शत्रु ! आप के इतने ही समय के अल्पायु में लोगों ने क्या उलटा विचारा था अथवा मैंने ही बहुत सा वैपरीत्य पाया था ।

कर न देने वाले समग्र भूमण्डल के राजाओं को करदाता बना कर पृथ्वी को मुझे

स्थित्यर्थं मम मत्स्यराजभवने प्राप्तोऽसि यत्सूदतां
वत्सैतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते ॥ १९ ॥

मुने, किं कथयसि। ( 'तस्मिन्कौरवभीमयो' ( ६।१६ ) इत्यादि पठति। )

राक्षस —एवमेतत्।

युधिष्ठिर —धिगस्मद्भागधेयानि। भगवन्कामपाल, कृष्णाग्रज, सुभद्राभ्रातः,

---

नृप यच्चां ताम्, मेदिनीम् = पृथ्वीम्, मे = मह्यम्, दत्त्वा = प्रदाय, यत् लज्जसे = त्रपसे, प्रौढिस्थानेऽपि विनयात्ते लज्जेति भावः। मया, द्यूते, पणीकृतः = ग्लहीकृतः ( अस्तु ) इति प्रसिद्ध.। न, क्रुध्यसि, हि = यतः, प्रीयसे = प्रसन्न आसी', वर्तमानसामीप्ये लट्। मम, स्थित्यर्थम् = प्रच्छन्ननिवासाय, मत्स्यराजभवने = विराटगृहे, यत्, सूदताम् = औदनिकत्वम्, पाचकत्वमित्यर्थः। प्राप्तः, असि 'सूदा औदनिका गुणा' इत्यमरः। असि, हे वत्स! सहसा = सत्वरं, विनश्वरस्य = नाशं प्राप्नुवतः, अल्पायुष इत्यर्थ.। एतानि = पूर्वकथितानि अतिनम्रतादिसूचकानि, चिह्नानि = लक्षणानि, दृष्टानि, मयेत्यध्याहारः। गुणवतो न चिरायुष्ट्वं भवतीति लोके प्रसिद्ध, तथा चाधिकगुणवता त्वया कथं चिरजीविना भवितव्यमिति भावः। शार्दूलविक्रीडित छन्द.॥ १९ ॥

किमिति = मम वत्सस्य मरणे वलभद्रो हेतुरिति कथयसीत्यर्थ.।

एवम् = यदुक्त भवद्भिस्तदेव, एतत् = मम कथनम्।

कृष्णाग्रजेति। कृष्णाग्रजेत्यनेन यदि भवान् कृष्णाग्रजस्तदेवं न करणीय कृष्णस्य मदनुजमित्रत्वादिति सूचितम्।

अन्वय—मनसि, ज्ञातिप्रीतिः, ( त्वया ) न, कृता ( इदम् ) क्षत्रियाणाम्, धर्मः, न, अनुजस्य, मे, अनुजे, ( यत् ) रूढम्, सख्यम्, तदपि, न, गणितम्,

---

अर्पित करने में तुम्हे सकोच होता था। जुए में भी मैंने जो बाजी लगा दिया उस पर भी तुम अप्रसन्न न हुए प्रत्युत प्रसन्न हुए। मेरी जीविकाका निर्वाह के लिए मत्स्य देश के राजा [ विराट ] के यहाँ रसोइया का कार्य अपने ऊपर उठाया। भाई! ये सब लक्षण तुम्हारे एकाएक ससार से चले जाने के थे॥ १९ ॥

मुने! क्या कह रहे हो? ( 'तस्मिन् कौरव भीमयो' अ० ६ श्लो० १६ को पढते हैं )

राक्षस—ठीक यही बात है।

युधिष्ठिर—हम लोगों के भाग्य को धिक्कार है। भगवन् कामपाल [ बलराम ] श्रीकृष्ण के ज्येष्ठ भ्रात तथा सुभद्रा के भ्रात!

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यानुजे मे ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम् ॥ २० ॥

( द्रौपदीमुपगम्य । ) अयि पाञ्चालि, उत्तिष्ठ । समानदुःखावेवावां भवावः । मूर्च्छया किं मामेवमतिसंधत्से ।

भवतः, शिष्ययोः, स्नेहबन्धः, तुल्यः, कामम् , भवतु, मन्दभाग्ये, मयि, त्वम् , यत्, विमुखः असि, अयम् , कः, पन्थाः ( अस्ति ) ॥ २० ॥

तत्पक्षपातकरणाऽभावेऽपि कथं पक्षपातः कृत इत्याह—ज्ञातिप्रीतिरिति । मनसि = अन्तःकरणे, ज्ञातिप्रीतिः = बान्धवस्नेहः, भीमस्य ते पितृष्वस्रेयतया ज्ञातित्वमित्यभिप्रायः । त्वया, न, कृता=आचरिता, ( सङ्केतकरणम् ), क्षत्रियाणाम् = राजन्यानाम् , धर्मः=युक्ताचारः, न, ( तव ) अनुजस्य = कनिष्ठभ्रातुः, मे = मम, अनुजे= अवरजे, ( यत् ) रूढम् = प्रसिद्धम् , सख्यम्=सौहार्दम् , तदपि, न गणितम् , अनुजसुहृदि अणुरपि दया त्वया कार्येति भावः । भवतः = तव, शिष्ययोः=छात्रयोः, भीमदुर्योधनयोरित्यर्थः । स्नेहबन्धः=प्रीतिदृढता, तुल्यः = समः, कामम्=यथेच्छम् , भवतु=तिष्ठतु, तथा च पक्षपातोऽयुक्त इति भावः । अपक्षपातकारणेषु सत्स्वपि पक्षपातकरणे स्वयमेव कारणमाह—मन्दभाग्य इति । मन्दभाग्ये, मयि=युधिष्ठिरे, यत् , त्वम् , विमुखः=प्रतिकूलः, असि, अयम् , कः, पन्थाः =मार्गः । मम मन्दभाग्यत्वहेतुनाऽनुचितमार्ग आसादितो भवतेति भावः । अत्र विमुखनिरूपितहेतोः पदार्थत्वेन काव्यलिङ्गमलङ्कारः । मन्दाक्रान्ता छन्दः ॥ २० ॥

उपगम्य = प्राप्य, समीपं गत्वेत्यर्थः । पाञ्चालि = द्रौपदि । समानदुःखौ = समानं दुःखं ययोः तौ, तुल्यदुःखभागिनावित्यर्थः । न तु त्वमधिकदुःखभागिनी भव, तदेवाह—मूर्च्छयेति । माम् = युधिष्ठिरम्, अतिसन्धत्से = सन्धानम् सम्मेलनम् तस्यातिक्रमणम् अतिसन्धानम् असम्मेलनम् भेद इत्यर्थः । अतुल्यत्वमिति यावत् । तत्

सम्बन्धियों के प्रति सद्व्यवहार पर तो आप ने ध्यान ही नहीं दिया, क्षत्रियधर्म का पालन नहीं किया । और अर्जुन के साथ जो आपके कनिष्ठ भ्राता की घनिष्ठ मित्रता है उसको तृण बराबर भी आपने नहीं समझा । आप का दोनों शिष्यों में समान ही प्रेम होना चाहिये था । यह कौन सा मार्ग है जो मुझ अभागे से इस प्रकार आप रुष्ट हो गये हैं ? ॥ २० ॥

( द्रौपदी के समीप जाकर ) अयि कृष्णे ! उठिये, हम दोनों एक ही प्रकार के दुःख के भागी बनें । मूर्च्छित होकर इस प्रकार मुझसे अधिक दुःखी क्यों होती है ?

द्रौपदी—( लब्धसंज्ञा । ) बन्धेदु णाहो दुज्जोहणरुधिलाद्देण हत्थेण दुस्सासणविमुक्कं मे केसहत्थम् हञ्जे बुद्धिमदिए, तव पच्चक्खं एव्व णाहेण पडिण्णादम् । ( कञ्चुकिनमुपेत्य । ) अज्ज, किं संदिट्ठ दाव मे देवेण देवकीणन्दणेण-पुणो वि केसबन्धनं आरम्भीअदुत्ति । ता उवणेहि मे पुप्फदामाइं । विरएहि दाव कबरीम् । करेहि भअवदो णाराअणस्स वअणम् । ण क्खु सो अलीअ संदिसदि । अहवा किं मए संतत्ताए भणिदम् । अचिरगदं अज्जउत्त अणुगमिस्सम् । ( युधिष्ठिरमुपगम्य । ) महाराअ, आदीवअ चिदाम् । तुमं वि खत्तधम्म अणुबन्धन्तो एव्व णाहस्स जीविदहरस्स अहिमुहो होहि । अहवा जं दे रोअदि । ( बध्नातु नाथो दुर्योधनरुधिरार्द्रेण हस्तेन दु शासनविमुक्तं मे केशहस्तम् । हञ्जे बुद्धिमतिके, तव प्रत्यक्षमेव नाथेन प्रतिज्ञातम् । आर्य, किं संदिष्टं तावन्मे देवेन देवकीनन्दनेन पुनरपि केशबन्धनमारभ्यतामिति । तदुपनय मे पुष्पदामानि ।विरचय तावत्कवरीम् । कुरु भगवतो नारायणस्य वचनम् ।

करोषीति अतिसन्धत्से, अल्पदु.खं करोषीति यावत् । तव भूयो भूयो मूर्च्छा भवति, मम तु न भवतीत्यल्पदु खभागहमिति गूढाभिप्रायः ।

दुःशासनविमुक्तम्=दु'शासनेन विमुक्तम् , विमोचितम् , अन्तर्भाविताण्यर्थः । अथवा दु'शासनहेतुना विमुक्तम् अत्र पक्षे समासे क्लेश', हेतुतृतीयान्तेन प्रतिपदोक्तसमासाविधानात् । केशहस्तम्=केशसमूहम् , नाथ'=भीमः, दुर्योधनरुधिरार्द्रेण= दुर्योधनशोणितक्लिन्नेन, हस्तेन = करेण, बध्नातु । वीरप्रतिज्ञाया मिथ्याभवितुमनर्हत्वादिति भावः । ससाक्षिणी प्रतिज्ञाऽऽस्ति न कपोलकल्पितेत्याह—तवेति । आर्य=कञ्चुकिन् ! सन्दिष्टम् = वाचिकं प्रेषितम् , सन्देशमेवाह—केशेति । तत् = तस्मात् , उपनय = आनय, पुष्पदामानि = पुष्पगुच्छान् , कवरीम् = केशवेशम् ,

द्रौपदी—( होश में आकर ) नाथ! दुर्योधन के रक्त से लिपे हुए हाथ से मेरे केशपाश को, जिसे दुश्शासन ने खोल दिया है, सँवारिये अरी बुद्धिमतिके तुम्हारे सामने ही स्वामी ने प्रतिज्ञा की है । आर्य ! देवकी के पुत्र भगवान् वासुदेव ने क्या सन्देश दिया था— फिर भी केश सवारना प्रारम्भ कर दीजिए ? अत मेरे लिए कुसुमों की माला ला दे । मेरी वेणी सुधार दे । भगवान् वासुदेव के वचन पूर्ति कर । वे असत्य सन्देश कदापि न देंगे । अथवा शोक से विदग्ध मैंने क्या कहा ? शीघ्र ही स्वर्ग सिधारे हुए आर्यपुत्र के यहाँ मैं जाऊँगी । ( युधिष्ठिर के समीप जाकर ) महाराज ! चिता जला दीजिए । आप भी क्षत्रियधर्म को ध्यान में रखते हुए स्वामी के प्राणहरण करने वाले के सम्मुख डटिये । अथवा जो आपको अच्छा लगे वह कीजिए ।

न खलु सोऽलीकं संदिशति । अथवा किं मया संतप्तया भणितम्-अचिरगत-मार्यपुत्रमनुगमिष्यामि । महाराज, आदीपय चितां त्वमपि क्षत्रधर्ममनुबध्नन्नेव नाथस्य जीवितहरस्याभिमुखो भव । अथवा यत्ते रोचते । )

युधिष्ठिर—युक्तमाह पाञ्चाली । कञ्चुकिन्, क्रियतामियं तपस्विनी चितासंविभागेन सह्यवेदना । ममापि सज्यं धनुरुपनय । अलमथवा धनुषा ।

तस्यैव देहरुधिरोक्षितपाटलाङ्गीमादाय संप्रति गदामपविद्धचापे ।

---

केशानां संनिवेशविशेषम् । अलीकम् = मिथ्या । अतिसन्तप्तया = अतिदुःखितया, किम् = उपनय पुष्पदामानीत्यादि, यदुक्तं मया कबरीविरचनादि तद्दुःखिततयोक्तं न तु तत्तथ्यमिति भावः । अचिरगतम् = सपदि मृतम्, अनुगमिष्यामि = अनुव्रजनं करिष्यामि, अहमपि म्रिय इत्यर्थः । तदेवाह—आदीपयेति । आदीपय = प्रज्वालय, क्षत्रियधर्मम् = युद्धम्, युद्धे प्राणत्याग वा, जीवितहरस्य = प्राणहरस्य । ते = तुभ्यम्, रोचते = इष्टो भवति ।

तपस्विनी = पतिव्रता, चितासविभागेन = चितासेवनद्वारा, सह्यवेदना, नाथ-मरणजन्यदुःखसहनयोग्या, क्रियताम, त्वयेति शेष' । सज्यम् = गुणसहितम्, अलम् = व्यर्थम्, धनुषा = चापेन ।

अन्वयः—तस्य, एव, देहरुधिरोक्षितपाटलाङ्गीम्, गदाम्, आदाय, अपविद्धचापे, सयति, भ्रातृप्रियेण, अर्जुनेन, अद्य, यत्, कृतम्, मम, अपि, तत्, एव, श्रेयः, हि, जयेन, कृतम् ॥ २१ ॥

गदायुद्धे धनुर्ग्रहणमयुक्तमिति गदामादायैव योद्धव्यमित्याह—तस्यैवेति । तस्य = भीमस्य, एव, तस्यैतत्पदार्थस्य समस्तघटकदेहार्थे स्वस्वामिभावसम्बन्धेनान्वयः, अभेदेनान्वयस्थल एवैकदेशान्वयस्यासाधुत्वात् । अतएव, शरैः शातितपत्र इत्यपि साधु, एतदेव स्पष्टमभिहितं व्युत्पत्तिवादे गदाधरभट्टाचार्येणेति । देहरुधिरोक्षितपाटलाङ्गीम् = देहस्य रुधिरेण पाटलानि ईषद्रक्तानि अङ्गानि अवयवा यस्यास्ताम्, गदाम्, आदाय = गृहीत्वा, अपविद्धचापे = अपविद्धः त्यक्तः चापः शरासनं यस्मिन् तस्मिन्, चापरहित इत्यर्थः । अपविद्धचाप इति, अपविद्धचापमिति वा पाठं धृत्वा अवतरन्नित्याद्यध्याहारेण यस्मिन् कर्मणीति व्याख्याय यथा स्यात्तथेति

---

युधिष्ठिर—पाञ्चालकुमारी ने ठीक कहा । कन्चुकिन् ! चितानिर्माण करके इस तपस्विनी को दुःख सहन करने योग्य बनाइए । प्रत्यञ्चा के साथ मेरा भी धनुष लाइये । अथवा धनुष की क्या आवश्यकता ?

शरीर के रक्त से लिप्त अतएव लोहित [ रक्त ] वर्णा उसकी गदा लेकर धनुष को

भ्रातृप्रियेण कृतमद्य यदर्जुनेन श्रेयो ममापि हि तदेव कृतं जयेन ॥२१॥

राक्षस —( सविषादमात्मगतम् । ) कथं गच्छति भवत्वेवं तावत् ( प्रकाशम् ) राजन् , रिपुजयविमुखं ते यदि चेतस्तदा यत्र तत्र वा प्राणत्यागं कुरु । वृथा तत्र गमनम् ।

कञ्चुकी—धिङ्मुने, राक्षससदृश हृदयं भवतः ।

राक्षस —( सभयं स्वगतम् । ) किं ज्ञातोऽहमनेन । ( प्रकाशम् । ) भोः कञ्चुकिन् , तयोर्गदया खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः । जानामि च

क्रियाविशेषणत्वप्रदर्शनेन वा व्याख्याने न युक्ते पूर्वत्र, अध्याहारेऽप्रयोजनत्वात् उत्तरत्र स्ववचोव्याघातात् यद्यप्येकदेशान्वये गौरवमभ्युपेत्य कर्मणीत्यस्य क्रियायामित्यर्थकरणेन समन्वेतु शक्यते तथापि कृधात्वर्थक्रियायामन्वयस्य नाटककृतामनभिप्रेतत्वात् । मदीयव्याख्याने तु गदायुद्धे धनुर्युद्धस्यायुक्तत्वेन अलमथवा धनुषेत्यतीव सङ्गतं भवतीति । समति = सङ्ग्रामे, भ्रातृप्रियेण = भ्राता प्रियो यस्य तेन, अर्जुनेन, यत् = कार्यम् , कृतम् = विहितम् , मम = युधिष्ठिरस्य, अपि, तत् = धनुस्त्यागेन गदया युद्धम् अथवा तदनन्तर मरणम् , श्रेयः=श्रेष्ठम् , हि = यत , जयेन=विजयेन, कृतम् = व्यर्थम् , भ्रातर विना जयस्यापि निष्फलत्वादिति भाव. । अत्र करणस्प्रति हेतोर्भ्रातृप्रियेणेति पदगतत्वेन काव्यलिङ्गमलङ्कारः । वसन्ततिलका छन्दः ॥ २१ ॥

सविषादमिति—विषाद प्रति हेतुर्यद्यय तत्र गच्छेत्तदा भीमस्य दर्शनान्मन्मायाया ज्ञातत्वादस्य दुर्योधनप्रियं मरणं न स्यादिति । गच्छतीति, समरस्थानमिति शेषः । पुनश्छलनार्थमाह–राजन्निति । रिपुजयविमुखम् = शत्रुजयपराङ्मुखम्, चेतः= मन., यत्र तत्रेति–कुत्रापि स्थान इत्यर्थः, युद्धस्थाने गमनं वृथेति भाव ।

राक्षससदृशम् = ऋषिजनेनातुल्यमित्यर्थः । व्याहृतम् = उक्तम् ।

सभयम् = सभीति, प्रवृत्तम् = प्रारब्धम् । तयो'=अर्जुनदुर्योधनयोः, भुजसारम्= बाहुबलम्, गदायुद्धेऽर्जुनो दुर्योधनं न जेतु शक्नोतीति भाव' । अपरम्=अर्जुनस्यापि

छोडकर भातृस्नेही अर्जुन ने आज जो कुछ किया है वही कार्य मेरे लिए भी श्रेयस्कर है । विजय से कोई प्रयोजन नहीं ॥ २१ ॥

**राक्षस**—राजन् ! शत्रु पर विजय प्राप्त करने के विरुद्ध यदि आपका विचार हो तो जहाँ कहीं भी प्राण छोड दीजिए । वहाँ [ रणभूमि में ] जाना व्यर्थ है ।

**कञ्चुकी**—मुनि जी ! आप को धिक्कार है आपका हृदय तो राक्षस के समान मालूम पड़ता है ।

**राक्षस**—( भयभीत होता हुआ मन ही मन ) क्या इसने मुझे जान लिया ? ( प्रकट रूप से ) ऐ कञ्चुकिन् ! उन दोनों अर्जुन और सुयोधन में गदायुद्ध प्रारम्भ हो गया । मैं

तयोर्गदायां भुजसारम् । दुःखितस्य पुनरस्य राजर्षेरपरमनिष्टश्रवणं परिहरन्नेवं ब्रवीमि ।

युधिष्ठिर —( वाष्प विसृजन् । ) साधु महर्षे साधु । सुस्निग्धमभिहितम् ।

कञ्चुकी—महाराज, किं नाम शोकान्धतया देवेन देवकल्पेनापि प्राकृतेनेव त्यज्यते क्षात्रधर्मः ।

युधिष्ठिर —आर्य जयंधर,

शक्ष्यामि नो परिघपीवरबाहुदण्डौ वित्तेशशक्रवरुणाधिकवीर्यसारौ ।
भीमार्जुनौ क्षितितले प्रविचेष्टमानौ द्रष्टुं तयोश्च निधनेन रिपुं कृतार्थम् ॥

मृत्युरभूदित्याकारकम्, परिहरन्=पृथक्कुर्वन्, एवम्=वृथा तत्र गमनमिति, ब्रवीमि=कथयामि ।

सुस्निग्धम्=स्नेहयुक्तम्, अभिहितम्=उक्तम् ।

शोकान्धतया=शोकेन विवेकशून्यतया, देवकल्पेन=ईषदूनो देव इति देवकल्पः 'ईषदसमाप्ता'विति कल्पप्रत्ययः । तेन, देवतुल्येनेत्यर्थः । देवेन=राज्ञा, प्राकृतेन=साधारणमनुष्येण. क्षात्रधर्मः=युद्धम्, सहसो वा ।

अन्वय —परिघपीवरवाहुदण्डौ, वित्तेशशक्रवरुणाधिकवीर्यसारौ, ( तथापि ) क्षितितले, प्रविचेष्टमानौ, भीमार्जुनौ, तयोः, निधनेन, कृतार्थम्, रिपुम्, च, द्रष्टुम्, नो शक्ष्यामि ॥ २२ ॥

अन्यस्मात् कारणात्तत्र न गच्छामि भयादिति तु नेत्याह—शक्ष्यामीति । परिघपीवरबाहुदण्डौ=परिघवत् पीवरौ मांसलौ बाहुदण्डौ दण्डाकारबाहू ययोः तौ, वित्तेशशक्रवरुणाधिकवीर्यसारौ=वित्तेशः कुबेरः शक्र इन्द्रः वरुणः अपां पतिः एतासामितरेतरयोगो द्वन्द्वः 'सारो बले स्थिरांशे च' इत्यमरः । तथापि, क्षितितले=भूतले प्रविचेष्टमानौ=चेष्टाशून्यौ, मृतावित्यर्थ. । भीमार्जुनौ, पुनः, द्रष्टुम्=विलोकितुम्, न, शक्ष्यामि=समर्थो भविष्यामि, च पुनः, तयोः=भीमार्जुनयोः, निधनेन=

गदायुद्ध में उन दोनों के बाहुबल को जानता हू और व्यथित हृदय इस राजा को एक दूसरे अनिष्ट सन्देश के सुनने से दूर रखने के लिए इस प्रकार कह रहा हू ।

**युधिष्ठिर**—(आँसू गिराता हुआ) साधु तपस्विन् ! साधु ! आपने कल्याण की बात कही।

**कञ्चुकी**—महाराज ! आप देवताओं के सदृश होते हुए भी शोकान्ध होकर साधारण व्यक्ति की तरह क्यों क्षत्रियधर्म का परित्याग कर रहे हैं ?

युधिष्ठिर—आर्य जयन्धर !

मुद्गराकार स्थूलभुजदण्डशाली तथा धनेश [ कुबेर ] और इन्द्र के नगर में अपने

अयि पाञ्चालराजतनये, मद्दुर्नयप्राप्तशोच्यदशे। यथा संदीप्यते पावकस्तथा सहितावेव बन्धुजनं संभावयावः।

द्रौपदी—अज्ज, करेहि दारुसंचअम्। पज्जलीअदु चिदा। तुवरदि मे हिअअं णाधं पेक्खिदुम् ( सर्वतोऽवलोक्य। ) कहं ण को वि णाधेण विणा महाराअस्स वअणं करेदि। हा णाह भीमसेण, तं एव एदं राअउलं तुए विरहिदं पडिअणो वि संपदं परिहरदि। ( आर्य, कुरु दारुसंचयम्। प्रज्वाल्यतां चिता। त्वरते मे हृदयं नाथं प्रेक्षितुम्। कथं न कोऽपि नाथेन विना महाराजस्य वचनं करोति। हा नाथ भीमसेन, तदेवेदं राजकुलं त्वया विरहितं परिजनोऽपि साम्प्रतं परिहरति। )

राक्षस—सदृशमिदं भरतकुलवधूनां यत्पत्युरनुमरणम्।

मरणेन, कृतार्थम् = सिद्धप्रयोजनम्, पूर्णेच्छमिति यावत्। रिपुम् = शत्रुम्, दुर्योधनम्, द्रष्टुम्, न, शक्तयामीत्यन्वयः। अतस्तत्र गमनं न श्रेष्ठमिति भावः। अत्र प्रथमचरणे समासगतलुप्तोपमाऽलङ्कारः। वसन्ततिलका छन्दः॥ २२॥

मद्दुर्नयप्राप्तशोच्यदशे = मद्दुर्नयेन मदीयदुराचारेण द्यूतक्रीडनरूपेण प्राप्ता शोच्या दशा स्थितिः यया तत्सम्बोधने।

दारुसञ्चयम् = काष्ठानामेकत्रीकरणम्, नाथम् = भीमम्, प्रेक्षितुम् = द्रष्टुम्, मे, हृदयम्, त्वरते = शीघ्रतां करोति, नाथेन = भीमेन, वचनं करोतीति—चितां न प्रज्वालयतीत्यर्थः। परिजनः = सेवकः, परिहरति = त्यजति।

किं सदृशमित्याह—यदिति। पत्युः = स्वामिनः, अनुमरणम् = स्वामिमरणानन्तरं तेनैव सह स्वशरीरभस्मकरणम्।

पराक्रम को व्यक्त करने वाले भीम और धनञ्जय [ अर्जुन ] को भूमि पर लुठते हुए और उन दोनों के संहार से सफल मनोरथ शत्रु को देखने के लिये मैं समर्थ [कदापि] नहीं हूँ॥२२॥

अरी द्रुपदपुत्रि! मेरी दुर्नीति के कारण शोचनीयाऽवस्था को प्राप्त होने वाली! ज्यों ही अग्नि प्रज्वलित किया जाय त्यों ही हम दोनों एक साथ ही अपने सज्जनों के समीप पहुँच कर मिलें।

द्रौपदी—आर्य! काष्ठ [ लकडी ] एकत्रित कर डालिए। चिता जला दीजिए। प्रियतम को देखने के लिए मेरा मन अत्यन्त उत्कण्ठित हो उठा है। ( चारों ओर देखकर ) स्वामी [ भीम ] की अनुपस्थिति में महाराज की आज्ञा का पालन कोई क्यों नहीं करता? हाय नाथ भीमसेन! यह वही राजवंश है [ परन्तु ] तुम्हारे विना अब दास लोग भी उपेक्षा कर देते हैं [ आज्ञा नहीं मानते ]।

राक्षस—पतिदेव के पश्चात् मर जाना रमणियों के अनुकूल ही है [ अर्थात् जैसा

युधिष्ठिर—महर्षे, न कश्चिच्छृणोति तावदावयोर्वचनम् । तदिन्धन-प्रदानेन प्रसादः क्रियताम् ।

राक्षस—मुनिजनविरुद्धमिदम् । ( स्वगतम् । ) पूर्णो मे मनोरथः । यावदनुपलक्षितः समिन्धयामि वह्निम् । ( प्रकाशम् । ) राजन्, न शक्नुमो वयमिहैव स्थातुम् । ( इति निष्क्रान्तः । )

युधिष्ठिर—कृष्णे, न कश्चिदस्मद्वचनं करोति । भवतु । स्वयमेवाहं दारुसंचयं कृत्वा चितामादीपयामि ।

द्रौपदी—तुवरदु तुवरदु महाराओ । ( त्वरतां त्वरतां महाराजः । )

( नेपथ्ये-कलकलः । )

द्रौपदी—( सभयमाकर्ण्य । ) महाराअ, कस्स वि एसो तेजोबलदप्पिदस्स विसमो सङ्खणिग्घोसो सुणीअदि । अवरं वि अप्पिअं सुणिदु अत्थि णिब्ब-

---

आवयोः = द्रौपदीयुधिष्ठिरयोः, इन्धनप्रदानेन = काष्ठदानेन, प्रसादः = प्रसन्नता । इदम् = चितानिर्माणम्, मनोरथः=अभिलषितपाण्डवविनाशः, अनुपलक्षितः = एतैरदृष्टः, इन्धनम्=काष्ठम् समिन्धयामि=प्रज्वालयामि, स्थातुम्=अत्र स्थितिं कर्तुम् । निष्क्रान्तः = निर्गतः रङ्गभूमेरिति शेषः ।

दारुसञ्चयम् = काष्ठसञ्चयनम् ।

कलकलः = आकस्मिको महान् शब्दः ।

---

विशुद्ध भरतवंश है वैसी ही उस वंश की गृहदेवियाँ उनके वियोग का सहन न करके प्राण छोड देती है । ]

युधिष्ठिर—महात्मन् ! अब हम दोनों की बात भी कोई नहीं सुनता है । अत. [चिताऽ-रोपणार्थ ] काष्ठ प्रदान कर अनुगृहीत कीजिए ।

राक्षस—तपस्विजनों के विपरीत यह कार्य है । [ मन में ] मेरा मनोरथ पूर्ण हो गया । छिप कर मैं चिता में आग लगा दूगा । ( प्रकट रूप से ) अब मैं यहाँ ठहरने में असमर्थ हूँ । ( चला जाता है )

युधिष्ठिर—द्रौपदि ! मेरी बात कोई नहीं सुनता । अच्छा, न सुने । मैं स्वयं काष्ठ एकत्रित करके चिता में आग लगा लूगा ।

द्रौपदी—शीघ्रता कीजिए, शीघ्रता कीजिए महाराज !

( नेपथ्य में कलकल ध्वनि होती है । )

द्रौपदी—( भयपूर्वक सुनकर ) महाराज ! किसी का, जिसे अपने बल और पराक्रम का अभिमान है, प्रचण्ड शङ्ख शब्द सुनाई पड रहा है । क्या आप और कोई दुखद संवाद सुनने का विचार कर रहे हैं जिसके लिए विलम्ब कर रहे हैं ।

म्धो तदो विलम्बीअदु। ( महाराज, कस्याप्येष तेजोबलदर्पितस्य विषम शङ्ख-निर्घोष श्रूयते। अपरमप्यप्रिय श्रोतुमस्ति निर्बन्धस्ततो विलम्ब्यताम्। )

युधिष्ठिर—न खलु विलम्ब्यते। उत्तिष्ठ।

( इति सर्वे परिक्रामन्ति। )

युधिष्ठिर—अयि पाञ्चालि, अम्बायाः सपत्नीजनस्य च किंचित्संदिश्य निवर्तय परिजनम्।

द्रौपदी—महाराअ, अम्बाए एवं संदिसिस्सम्-'जो सो बअहिडिम्ब-किम्मीरजडासुरजरासंधविजअमल्लो वि दे मज्झमपुत्तो मम हदासाए पक्खवादेण परलोअं गदो त्ति'। ( महाराज, अम्बायै एवं संदेक्ष्यामि—'य-बकहिडिम्बकिर्मीरजटासुरजरासंधविजयमल्लोऽपि ते मध्यमपुत्रो मम हताशाया पक्ष-पातेन परलोकं गत' इति। )

युधिष्ठिर—भद्रे बुद्धिमतिके, उच्यतामस्मद्वचनादम्बा।

---

तेजोबलदर्पितस्य = तेजश्च बलञ्चेति तेजोबले ताभ्यां दर्पितस्य गर्वितस्य, विषम = तारः, अथवा, भयानकः, शङ्खनिर्घोषः = शङ्खशब्दः, अप्रियम् = अनिष्टम्, निर्बन्ध = आग्रहः, तत = यतः श्रोतुमाग्रहोऽस्ति तस्मात्, विलम्ब्यते = समयो याप्यते, त्वया, इति शेष।

अम्बाया = मातु कुन्त्या, सपत्नीजनस्य = सुभद्रादे, सन्दिश्य = वाचिकं प्रेष्य, निवर्तय = स्वगृहाभिमुखं परावर्तय परिजनम् = सेवकवर्गम्।

बकहिडिम्बेति = एतेषां विजयेन मल्ल बलीयान् अतिबलवानित्यर्थ। 'मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि' इति मेदिनी। मध्यमपुत्रः = भीम, हताशायाः= हततृष्णायाः 'आशा ककुभि तृष्णायाम्' इति हैमः। पक्षपातेन = मत्तिरस्कारनिरा-करणतत्परतया।

उच्यताम् = कथनीया,

---

युधिष्ठिर—विलम्ब तो नहीं कर रहा हूँ उठिये।

( सब लोग चल रहे हैं )

युधिष्ठिर—अयि द्रौपदी! माता कुन्ती को तथा अपनी सुभद्रा प्रभृति सौतों को कुछ सन्देश देकर दासदासियों को लौटा दीजिये।

द्रौपदी—महाराज! माताजी के लिए इस प्रकार सन्देश दूंगी—'जो बक, हिडिम्ब, किर्मीर जटासुर और जरासंध पर विजयी मल्ल आप के मँझले पुत्र भीमसेन मुझ हतभागिनी के पक्षपात के कारण परलोक को सिधार गये'।

युधिष्ठिर—कल्याणि बुद्धिमतिके! मेरी ओर से माताजी से कहना कि—उस लाक्ष

येनासि तत्र जतुवेश्मनि दीप्यमाने
उत्तारिता सह सुतैर्भुजयोर्बलेन ।
तस्य प्रियस्य बलिनस्तनयस्य पाप-
माख्यामि तेऽम्ब कथयेत्कथमीदृगन्यः ॥ २३ ॥

आर्य जयंधर, त्वया सहदेवसकाशं गन्तव्यम्। वक्तव्यश्च तत्रभवान्माद्रेयः कनीयान्सकलकुरुकुलकमलाकरदावानलो युधिष्ठिरः परलोकमभिप्रस्थितः प्रियानुजमप्रतिकूलं सततमाशंसनीयमसंमूढव्यसनेऽभ्यु-

अन्वय —तत्र, जतुवेश्मनि, दीप्यमाने, येन, भुजयोः, बलेन ( त्वम् ) सुतैः, सह, उत्तारिता, प्रियस्य, तस्य, बलिनः, तनयस्य, पापम्, ते, आख्यामि, अम्ब ! अन्यः, कथम्, ईदृक्, कथयेत् ॥ २३ ॥

अस्य गौणं कर्माह—येनासीति । तत्र = वारणावते, जतुवेश्मनि=लाक्षागृहे, दीप्यमाने = अग्निना प्रज्वाल्यमाने, सति, येन = वृकोदरेण, भुजयोः = बाह्वोः, बलेन, ( त्वम् ) सुतैः = अन्यैरपि पुत्रैः, सह = साकम्, उत्तारिता = बहिरानीता, प्रियस्य= स्निग्धस्य, तस्य = भीमस्य, बलिनः = बलवतः, तनयस्य = सुतस्य, पापम् = छलेन मारणम्, ते = तुभ्यम्, आख्यामि = कथयामि । कथमेतादृशक्रूरवचनं त्वमेव कथयसीत्याह—अम्बेति ( हे ) अम्ब ! अन्यः = मदतिरिक्तः, कथम्, ईदृक् = आश्चर्यं पापम्, कथयेत्, द्यूतद्वाराऽहमेवात्र हेतुरतोऽहमेव स्वापराधक्षमार्थं कथयामि अन्यस्तु न कथयिष्यति–कथापि खलु पापानामलमश्रेयसे यतः इति वचनादित्याशयः। अत्र सामान्येन विशेषस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः। वसन्ततिलका छन्दः।

जयन्धरेति—एतन्नामकयुधिष्ठिरस्य कञ्चुकी सहदेवसकाशम् = कनिष्ठमाद्रीपुत्र

निर्मित गृह के जला देने पर जिसने भुजाओं के बल से आप को पुत्रों के साथ उबारा था उस बलशाली आप के प्यारे पुत्र के विषय में अनिष्ट संवाद सुना रहा हूँ माता जी ! मेरे अतिरिक्त दूसरा कौन व्यक्ति इस प्रकार कहने का साहस कर सकता है ? ॥ २३ ॥

आर्य जयन्धर ! तुम भी सहदेव के समीप जाओ और श्रीमान् अखिल कुरुवंशरूपी कमलवन के लिये दावाग्नि, कनिष्ठ माद्रिकुमार सहदेव से कहना—'युधिष्ठिर परलोक के लिए प्रस्थान करते समय विपत्ति और सम्पत्ति काल में जिसकी बुद्धि विपरीत नहीं होती, सर्वदा जिसके आशा की जा सकती है, और जो सर्वदा अनुकूल अर्थात् आज्ञा पालन में तत्पर रहता है इस प्रकार के कनिष्ठ और प्रिय भ्राता का निरन्तर आलिङ्गन करके और शिर सूँघकर यह प्रार्थना करते हैं —

'आप मुझसे अतीव अल्पावस्था के हैं शास्त्राध्ययन में मेरे समान हैं स्वाभाविक दया

ज्ये च धृतिमन्तं भवन्तमविरलमालिङ्ग्य शिरसि चाघ्रायेदं प्रार्थयते—

मम हि वयसा दूरेण त्वं श्रुतेन समो भवा-
न्कृतसहजया बुद्ध्या ज्येष्ठो मनीषितया गुरुः ।
शिरसि मुकुलौ पाणी कृत्वा भवन्तमतोऽर्थये
मयि विरलतां नेयः स्नेहः पितुर्भव वारिदः ॥ २४ ॥

त्वविधे । तत्रभवान्=प्रशसनीय, माद्रेयः=माद्रीतनयः । कनीयान्=कनिष्ठः । किं सन्दिश्य इत्याह—सकलेति । सकल यत्कुरुकुलम्, भरतवंशः, तदेव कमलाकरं पद्माखनिः तत्र वडवानलः वाडवाग्निः, परलोकम्=स्वर्गम्, अभिप्रस्थितः=गन्तु-मारब्धः आदिकर्मणि क्तः । अनुकूलम्, समेत्यादि । अथवा अनुकूलमित्यस्य आशं-सनीयमित्यनेनान्वयः । आशीर्वचनयोग्यम्, व्यसने=विपत्तौ, अभ्युदये च असम्भ्रा-न्तम्=अनुद्विग्नम्, समानमित्यर्थः । धृतिमन्तम्=सधैर्यम्, भवन्तम्=सहदेवम्, चिरम्=बहुकालम्, आलिङ्ग्य=परिष्वज्य, आघ्राय=घ्रात्वा, लालनं कृत्वेत्यर्थः ।

अन्वय —मम, वयसा, दूरेण हि ( उपलक्षितः ) त्वम्, श्रुतेन, भवान्, समः, कृतसहजया, बुद्ध्या, ज्येष्ठः, मनीषितया, गुरुः, अतः, शिरसि, पाणी, मुकुलौ, कृत्वा, भवन्तम्, अर्थये, मयि, स्नेहः, विरलताम्, नेय, पितुः, वारिदः, भव, ( त्वम् ) ॥२४॥

किं प्रार्थयत इत्याह—ममेति । हि=यतः, मम=युधिष्ठिरस्य, वयसा=अव-स्थया, दूरेण, ( उपलक्षितः ) त्वम्, अल्प इति पाठे दूरेणाऽल्पः=अतिकनिष्ठः, श्रुतेन=श्रवणेन, शास्त्रस्येत्यादिः, शास्त्रश्रवणेनेत्यर्थः । भावे क्तप्रत्ययः । भवान्, समः=सदृशः, कृतसहजया=सहजननं सहजः 'अन्येष्वपि दृश्यते' इति बाहुलका-द्भावे डप्रत्ययः । कृतः प्राप्तः सहजः सहजननम् यया बुद्ध्या तया, सहोत्पन्नयेत्यर्थः । स्वाभाविकयेति यावत् । बुद्ध्या=ज्ञानेन ज्येष्ठः=अतिप्रशस्यः प्रशंसनीय इत्यर्थः । 'ज्य च' इति सूत्रेण प्रशस्यस्येष्ठन्प्रत्यये परे ज्यादेशः । मनीषितया=विद्वत्तया, शास्त्राध्ययनजन्यज्ञानेनेत्यर्थः । गुरुः=श्रेष्ठः, अतः, शिरसि=मस्तके, पाणी=हस्तौ, मुकुलौ=सम्पुटितौ, अथवा कुड्मलसदृशौ, कृत्वा=विधाय, भवन्तम् अर्थये= अभ्यर्थये, एतत्सर्ववाक्यमतिनम्रताबोधनार्थं तथा च त्वया मद्वचनमवश्य कर्त-व्यमिति सूचितम् । अभ्यर्थनामेवाह—मयीति । मयि=ज्येष्ठभ्रातरि, स्नेहः=प्रीतिः, विरलताम्=कृशत्वम्, नेयः=प्रापणीयः, मयि स्नेह त्यक्त्वा जीवितव्यमिति भावः । तदेवाह—पितुरिति । पितुः, वारिदः=जलदः, भव, पितृगणाय जलं देयम्

और बुद्धि से मुझसे ज्येष्ठ [ बडे ] हैं और विद्वत्ता में साक्षात् बृहस्पति के सदृश हैं अतः हाथ जोडकर अञ्जलि को शिर से लगाकर आप से प्रार्थना करता हूँ—'मेरे विषय में स्नेह को शिथिल कर दीजिएगा और पिता जी के लिये तिलाञ्जलिदाता बनिये' ॥ २४ ॥

अपि च । बाल्ये संवर्धितस्य नित्याभिमानिनोऽस्मत्सदृशहृदयसारस्यापि नकुलस्य ममाज्ञया वचने स्थातव्यम् । नानुगन्तव्याऽस्मत्पदवी । त्वया हि वत्स,

विस्मृत्यास्मान्श्रुतिविशदया स्वाग्रजौ चात्मबुद्ध्या
क्षीणे पाण्डावुदकपृषतानश्रुगर्भान्प्रदातुम् ।

---

अन्यथा तर्पणाभावे पितृगणस्याधोगतिः स्यादिति भावः । अत्र विषयभेदादेकस्यैवानेकधोल्लेखादुल्लेखो नामालङ्कारः । हरिणी छन्दः ॥ २४ ॥

बाल्ये संवर्द्धितस्येति = अनेन नकुलेऽधिकस्नेहो दर्शितो भवति । नित्यमभिमानिन इति—अनेन अभिमानाद् दुर्योधनस्याननुवर्तने पुनः कलहशान्तिर्न स्यात्तथा च तवापि शरीररक्षणमसम्भवं स्यात् तच्च न भवेत्तथा कर्तव्यमिति सूचितम् । नकुलस्य सहदेवज्येष्ठत्वेनानुशासनमयुक्तमित्यत आह—ममाज्ञयेति । अस्मत्पदवी= मम मार्गः, मरणेन भ्रात्रनुसरणरूपः ।

अन्वय —श्रुतिविशदया, आत्मबुद्ध्या, अस्मान् , स्वाग्रजौ, च, विस्मृत्य, पाण्डौ, क्षीणे (सति), उदकपृषतान्, अश्रुगर्भान्, प्रदातुम्, दायादानाम्, अपि तु, भवने, यादवानाम्, कुले, वा, कान्तारे, वा, कृतवसतिना, शरीरम् , रक्षणीयम् ॥२५॥

केनाप्युपायेन पित्रे जलदानार्थं शरीरं रक्षणीयमित्याह—विस्मृत्येति । श्रुतिविशदया=वेदविशुद्धया, आत्मबुद्ध्या=स्वीयकर्तव्याकर्तव्यविचाररतज्ञानेन, अस्मान् , 'एकवचनं न प्रयुञ्जीते'त्यादिवचनाद्बहुवचनप्रयोगः । स्वाग्रजौ = भीमार्जुनौ, च, विस्मृत्य, पाण्डौ, पितरि, क्षीणे = समूलं नष्टे, अस्मासु सत्सु न पाण्डोर्विनाशः 'आत्मा वै जायते पुत्रः' इति वचनात्, अस्माकमभावे युवयोरपि रक्षाऽसम्भाव्येति साम्प्रतं पाण्डुविनाश इति भावः । अश्रुगर्भान् = नेत्राम्बुमिश्रितान् , उदकपृषतान्= जलविन्दून् 'पृषन्ति विन्दुपृषताः' इत्यमरः । प्रदातुम् = दानार्थम् , दायादानाम्=

---

और भी —

'जडबुद्धि, नित्याहङ्कारी नकुल को, जिसके हृदय का तत्त्व हम लोगों के समान ही है, आज्ञापालन में लगे रहिएगा । हम लोगों के मार्ग का अनुसरण न कीजिएगा ( अर्थात् प्राणत्याग न कीजिएगा )'

आप, प्रिय भ्रात !

शास्त्राध्ययन से स्वच्छ बुद्धि के कारण अनुजों के साथ-साथ हम लोगों को भूलकर पाण्डु के अश्रुविन्दु रूप जल से सने हुए पिण्डों का दान करने के लिए दायादों [ कौरवों ] के घर या यदुवंशियों के वश में या किसी गहन वन में कुटी बना कर शरीर की रक्षा करना ॥ २५ ॥

दायादानामपि तु भवने यादवानां कुले वा
कान्तारे वा कृतवसतिना रक्षणीयं शरीरम् ॥ २५ ॥

गच्छ जयंधर, अस्मच्छरीरस्पृष्टिकया शापितेन भवताऽकालहीनमिदमवश्यसावेदनीयम् ।

द्रौपदी—हला बुद्धिमदिए, भणाहि मह वअणेण पिअसहीं सुभद्दाम्—'अज्ज वच्छाए उत्तराए आवण्णसत्ताए चउत्थो मासो वट्टदि । सव्वधा णाविउले तं णिक्खिवेसि । कदा वि इदो परलोअगदस्स ससुरउलस्स अम्हाणं वि सलिलबिन्दुदो भविस्सदि'त्ति । ( हला बुद्धिमतिके, भण मम वचनेन प्रियसखीं सुभद्राम्—'अद्य वत्साया उत्तराया आपन्नसत्वायाश्चतुर्थो मासो वर्तते । सर्वथा नाभिकुले ता निक्षिपसि । कदापीतः परलोकगतस्य श्वशुरकुलस्यास्माकमपि सलिलबिन्दुदो भविष्यति' इति । )

---

बान्धवानाम्, 'दायादौ सुतबान्धवौ' इत्यमरः । अपितु, भवने = गृहे, अपित्वित्यनेनारुचिरत आह—यादवानामिति । यादवानाम् = यदुवंशजातानाम्, कुले = भवने 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च । भवने च तनौ' इति मेदिनी । वा, तत्राप्यकारणवैरिणो बलरामाद्भये, कान्तारे = दुर्गभूमौ, वा, कृतवसतिना = कृतनिवासेन, त्वया, शरीरम्, रक्षणीयम् = पालनीयम । कथमपि शरीररक्षा कर्तव्येति भावः । अत्र विस्मरणम्प्रति हेतो. श्रुतिविशदयेति पदार्थगतत्वेन काव्यलिङ्गम्, शरीररक्षां प्रति हेतोर्वाक्यार्थत्वेनापरं काव्यलिङ्गम्, उभयोः संसृष्टिरलङ्कारः । मन्दाक्रान्ता छन्दः ॥ २५ ॥

अस्मच्छरीरस्पृष्टिकया = मम शरीरस्पर्शेन, शापितेन = दत्तशपथेन, अकालहीनम् = कालेन न हीनमित्यकालहीनम्, असूर्यम्पश्येतिवदसमर्थसमासः । समयमनतिक्रम्येत्यर्थ ।

किं भण इत्याह—वत्साया इति । उत्तरायाः = अभिमन्युस्त्रियाः, प्रतिपन्नस्य = प्राप्तस्य, गर्भस्य = भ्रूणस्य, 'गर्भो भ्रूणेऽर्भके कुक्षौ' इति मेदिनी । चतुर्थो मास इत्यन्वयः । इतो लोकात् = मर्त्यलोकात्, श्वशुरकुलस्य = पाण्डुवंशस्य, सलिलबिन्दुदः = जलबिन्दोर्दाता ।

---

जयन्धर ! जाओ । मेरे अङ्गों का स्पर्शपूर्वक आपको शपथ है कि समय न व्यतीत होने पाये, यह अवश्य कह दीजिएगा ।

द्रौपदी—अरी बुद्धिमतिके ! मेरी ओर से प्रिय सखी सुभद्रा से कहना—'आज पुत्री उत्तरा के गर्भधारण का चौथा महीना है । किसी भी प्रकार से उसे आप पितृकुल में

युधिष्ठिर—( सास्रम् । ) भोः कष्टम् ।

शाखारोधस्थगितवसुधामण्डले मण्डिताशे
पीनस्कन्धे सुसदृशमहामूलपर्यङ्कबन्धे ।
दग्धे दैवात्सुमहति तरौ तस्य सूक्ष्माङ्कुरेऽस्मि-
न्नाशाबन्धं कमपि कुरुते छाययार्थी जनोऽयम् ॥ २६ ॥

अन्वय.—शाखारोधस्थगितवसुधामण्डले, पीनस्कन्धे, मण्डिताशे, सुसदृशमहामूलपर्यङ्कबन्धे, सुमहति, तरौ, दैवात्, दग्धे, तस्य, अस्मिन्, सूक्ष्माङ्कुरे, छयया, अर्थी, अयम्, जनः, कमपि, आशाबन्धम्, कुरुते ॥ २६ ॥

पाण्डुवंशरूपमहावृक्षस्य विनाश उत्तरागर्भरूपाङ्कुर आशाबन्धनं वृथैवेत्याह—शाखारोधेति । शाखारोधस्थगितवसुधामण्डले = शाखाया द्रुमांशस्य रोधेन प्रसारेण अथवा शाखैव रोध. आवरणम्, तेन करणभूतेन स्थगितम् आच्छादितं अवरुद्धं वा वसुधामण्डलं भूमण्डलं येन तस्मिन्, पीनस्कन्धे=स्थूलप्रकाण्डे, मण्डिताशे = भूषितदिशे, सुसदृशमहामूलपर्यङ्कबन्धे=सुसदृशं दृढ यन्महामूलम् तस्य पर्यङ्कबन्धः परितोऽङ्कबन्धनम्, आलवालः ( कियारी ) इति प्रसिद्धः, यस्मिन् तस्मिन्, सुमहति=विशाले, तरौ = वृक्षे, एतादृशैश्वर्यशालिपाण्डुवंशरूपे दैवात्=दुरदृष्टात् दुर्भाग्यादित्यर्थः । दग्धे=विनष्टे, सति, तस्य=पाण्डुवंशवृक्षस्य, अस्मिन् = साम्प्रतिके न तु भाविकालेऽपि स्थायिनि, तस्यापि दुर्योधनेन विनाशसम्भवादिति भावः । सूक्ष्माङ्कुरे=उत्तरागर्भरूपे, छायया = सुखप्रयोजकत्वेन, अर्थी=इच्छु., अयम् = दु:खसन्तप्त., जनः=द्रौपदीरूप., कमपि=सलिलबिन्दुदो भविष्यतीत्याकारकम्, आशाबन्धम् = तृष्णाश्रयम्, कुरुते, भीमादिपराक्रमिपाण्डुवंश्यस्य विनाशे, उत्तरागर्भे आशाबन्धनं वृथैवेति भावः । मन्दाक्रान्ता छन्दः ॥ २६ ॥

[ सुभद्रा के पितृकुल यादवों के यहाँ अथवा उत्तरा के पितृकुल विराट के यहाँ ] रख दीजिए, कदाचित् यहाँ से परलोक में गए हुए श्वशुरकुल के पुरुषों और हमलोगों के लिए जलबिन्दु देने वाला हो जाय ।

**युधिष्ठिर**—( आँसू बहाते हुए ) हाय बडे कष्ट की बात है ।

संयोगवश अतीव विशाल वृक्ष के, जिस का शाखाओं के आवरण से भूमण्डल आच्छादित हो गया था, जिसने दिशाओं को अलङ्कृत कर दिया था, जिसका स्कन्ध [ तना ] अधिक मोटा था, जिसका आलवाल [ जड में जल देने का स्थान जो मिट्टी ऊँचा करके पानी रुकने के लिए बनाया जाता है ] उसके मूल [ जड ] के अनुरूप ही विस्तृत [ बडा ] था, भस्म हो जाने पर उसके अणुमात्र के इस अङ्कुरप्ररोह में कोई भी छायाभिलाषी व्यक्ति जिस प्रकार आशा करता है उसी प्रकार पाण्डवों के, जिनके प्रताप से समस्त भूमण्डल व्याप्त हो

साधु। इदानीमध्यवसितं करणीयम्। (कञ्चुकिनमवलोक्य।) आर्य जयंधर, स्वशरीरेण शापितोऽसि तथापि न गम्यते।

कञ्चुकी—(साक्रन्दम्।) हा देव पाण्डो, तव सुतानामजातशत्रुभीमार्जुननकुलसहदेवानामयं दारुणः परिणामः। हा देवि कुन्ति भोजराजभवनपताके,

भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविन-
स्तस्यैवाखिलधार्तराष्ट्रनलिनीव्यालोलने दन्तिनः।

---

अध्यवसितम् = निश्चितम्, शापितः = दत्तशपथः।

आक्रन्द = उच्चैरोदनम्, दारुण. = भयानकः, परिणामः = अवस्थितिः, अन्यथाभाव इत्यर्थः। भोजराजभवनपताके! = भोजराजस्य कुन्तीपितुः यद् भवनम् तत्र पताका वैजयन्ती इव तत्सम्बोधने।

अन्वय—ते, भ्रातु' तनयेन, शौरिगुरुणा, गाण्डीविनः, श्यालेन, अखिलधार्तराष्ट्रनलिनव्यालोलने, दन्तिनः, तस्यैव, वृकोदरस्य, आचार्येण, उन्मत्तेन, वा, मत्तेन, हलिना, तव, तत्, सुतकाननम्, दग्धम्, यस्य, आश्रयात्, मही, शीतला॥

तव बन्धुनैव तव सुता विनाशिता इत्याह—भ्रातुरिति। ते = कुन्त्याः, भ्रातुः = वसुदेवस्य, तनयेन = पुत्रेण, एतेन स्वजनकर्तृकविनाशदर्शनादतीव दुष्परिणामः सूचित। शौरिगुरुणा = कृष्णश्रेष्ठेन, एतेन कृष्णोऽपि सहायेऽसमर्थ इति सूचितम्। गाण्डीविनः = अर्जुनस्य, श्यालेन = अर्जुनस्त्रीसुभद्राभ्रात्रा, एतेन मदीयोऽयं श्यालो न ममानिष्ट करिष्यतीत्यसावधानोऽर्जुन आसीदत एवमभूदन्यथा गाण्डीविनोऽग्रे नान्यः किमपि कर्तुं शक्नोतीति सूचितम्। अखिलधार्तराष्ट्रनलिनीव्यालोलने =

---

रहा था, जो अपने गुणों से दिशाओं को अलङ्कृत कर रहे थे [अर्थात् जिनकी कीर्ति चारों तरफ व्याप्त हो रही थी] जिनके विस्तार के अनुरूप ही रक्षा का प्रबन्ध था, विनष्ट हो जाने पर उनके इस चार महीने के उत्तरा के भ स्थित बालक में यह द्रौपदी आश्रय की कामना से आशा कर रही हैं॥ २६॥

अच्छा, अब जो करना निश्चय किया है उसे करना चाहिए। (कञ्चुकी को देखकर) आर्य जयन्धर! अपनी भी शपथ दिलाई तथापि नहीं जा रहे हो

कञ्चुकी—(रोकर) हाय महाराज पाण्डु! आप के पुत्र युधिष्ठिर, भीम, अर्जुन, नकुल और सहदेव की यह दयनीया दशा। हाय महारानी कुन्ती भोजराज के महल की ध्वजा!

आपके भ्राता के पुत्र भगवान् वासुदेव के अग्रज अर्जुन के साले पागल या [सुरा-

आचार्येण वृकोदरस्य हलिनोन्मत्तेन मत्तेन वा
दग्धं त्वत्सुतकाननं ननु मही यस्याश्रयाच्छीतला ॥ २७ ॥

( इति रुदन्निष्क्रान्तः । )

युधिष्ठिरः—जयंधर जयंधर,

( प्रविश्य । )

कञ्चुकी—आज्ञापयतु देवः ।

युधिष्ठिरः—वक्तव्यमिति ब्रवीमि । न पुनरेतावन्ति भागधेयानि नः, यदि कदाचिद्विजयी स्याद्वत्सोऽर्जुनस्तद्वक्तव्योऽस्मद्वचनाद्भवता ।

---

अखिला ये धार्तराष्ट्राः दुर्योधनादयः त एव नलिनी अनायासेन विनाश्यत्वात्, तस्य व्यालोलने = मर्दने, दन्तिनः = हस्तिन इव तस्यैव = हस्तस्यैव, वृकोदरस्य, आचार्येण = उपदेशकेन, अत एव, उन्मत्तेन = उन्मादवता 'स्वाभाविकचित्तविभ्रमवतेत्यर्थः । ननु स्वाभाविकचित्तविभ्रमवांस्तदा ज्ञानशून्यत्वेन सङ्केतमपि कर्तुं न शक्नोतीत्यत आह—वा मत्तेनेति । मत्तेन = सुरया क्षीबेण, यदि नहि क्षीवस्तदा कर्तव्याकर्तव्यविचारं विहाय कथं स्वयमेव स्वजनविनाशमकरोदिति भावः । हलिना = बलभद्रेण, तव = कुन्त्याः, तत् = भूमण्डलविदितम्, सुतकाननम् = सुता एव काननम् । रूपकसमासः । दग्धम् = विनाशितम्, यस्य = सुतकाननस्य, आश्रयात् सेवनात्, मही = पृथ्वी, शीतला = सुप्रसन्ना, आसीदिति शेषः । दुराचारिणां बकादीनां तेन विनाशनादिति भावः । अत्र विषमाऽलङ्कारः । शार्दूलविक्रीडितं छन्दः ॥ २७ ॥

वक्तव्यमिति—अस्य सम्भावना तु नास्त्येवेति भावः । अपर्याप्तमेवावलोक्य

---

पान से ] मतवाले बलराम ने, जो सम्पूर्ण कौरव-कुल-कमलिनी को ध्वस्त करने में मातङ्ग [ हाथी ] रूपी उसी भीम के आचार्य [ गुरु ] हैं । आपके पुत्ररूपी अरण्य को भस्म कर डाला । जिस अरण्य के आश्रय से पृथ्वी शीतल थी [ अर्थात् बलराम ने आपके पुत्र भीम को मार डाला, जिसके कारण प्रजा अधिक सुखी थी ] ॥ २७ ॥

( इस प्रकार विलाप करते हुए निकल पड़े )

**युधिष्ठिर**—जयन्धर, जयन्धर,

( प्रवेश करके )

**कञ्चुकी**—आज्ञा दीजिए महाराज ।

**युधिष्ठिर**—कहने के लिए इच्छा हो रही है इसलिए कह रहा हूँ । हम लोगों के भाग्य में भी यह कहाँ बदा है । यदि कभी अनुज अर्जुन विजय प्राप्त कर लें तो उनसे मेरी ओर से कहना :—

हली हेतुः सत्य भवति मम वत्सस्य निधने
तथाप्येष भ्राता सहजसुहृदस्ते मधुरिपोः ।
अतः क्रोधः कार्यो न खलु मयि चेत्प्रेम भवतो
वनं गच्छेर्मा गाः पुनरकरुणां क्षात्रपद्वीम् ॥ २८ ॥

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्त । )

गदायुद्धमर्जुनसुयोधनयोरागत इति राक्षसेनोक्तत्वाद्युद्धस्यानवसानादर्जुनस्यापि विजयः सम्भाव्यतेऽत आह—यदि कदाचिदिति ।

अन्वय —मम, वत्सस्य, निधने, हली, सत्यम् , हेतुः, भवति, तथापि, एषः, ते, सहजसुहृदः मधुरिपोः, भ्राता, अत., क्रोध', न, खलु, कार्यः, भवतः, प्रेम, मयि, चेत्, ( तदा ) वनम् , गच्छे', पुन', अकरुणाम् , क्षात्रपदवीम् , मा, गाः ॥ २८ ॥

जये सति बलभद्रे भीमविनाशजन्यक्रोधो न कर्तव्य इत्याह—हलीति । मम, वत्सस्य = भीमस्य, निधने = मरणे, हली = बलराम', यद्यपि, सत्यम् = तथ्यम् , हेतुः = कारणम् , भवति = विद्यते, तथापि = एवं सत्यपि, एषः = बलरामः, ते = तवार्जुनस्य, सहजसुहृदः = स्वाभाविकमित्रस्य, कृष्णार्जुनयोर्नरनारायणरूपत्वात्तयोः सदातनमित्रत्वमित्युक्त सहजसुहृद इति । मधुरिपोः = कृष्णस्य एतेन कृष्णेऽधिकबलवत्त्वमीश्वरत्वं वा बोधितम् । तथाच 'अहो दुरन्ता बलवद्विरोधिता' इति न्यायेन तस्य भ्रातुर्द्वेषायोग्यत्व वा दर्शितम् ।'भ्राता=सहोदरः, अस्ति, अत , क्रोधः = कोप', न खलु = नैव, खलुशब्दोऽतिनिषेधद्योतनार्थम् । 'निषेधवाक्यालङ्कारे विलासानुनये खलु' इति कोशात्खलुशब्दस्य निषेधार्थकत्वेन अभावाभावस्य प्रतियोगिरूपत्वेन भीमवधप्रतीकारार्थं बलरामे क्रोध. कार्य एवेति व्याख्यानन्तु न युक्तम् , तथापीत्यादिग्रन्थविरोधात् , 'अथात आदेशो नेति नेति' इत्यादौ तथानवगमाच्च । भवतः, मयि = युधिष्ठिरे, प्रेम = स्नेहः, चेत् , तदा, त्वमित्यस्याध्याहारः । त्वम् , वनम् = अरण्यम् , गच्छेः = व्रजे , पुन' = भूय., अकरुणाम् = दयाशून्याम् , क्षात्रपदवीम् = क्षत्रियमार्गम् , युद्धादिकमित्यर्थः । मा = न, गा. = प्राप्स्यसि स्वीकरिष्यसीत्यर्थ' । 'माङि लुङ्' इति माङ्योगे लङ् । अत्र क्रोधाकरणे तृतीयचरणार्थो हेतुरिति हेतोर्वाक्यार्थत्वेन काव्यलिङ्गमलङ्कार. । शिखरिणी छन्दः ॥ २८ ॥

सत्य ही मेरे वत्स [ भीम ] के सहार होन मे हलधर [ बलराम ] कारण हैं । तो भी ये तुम्हारे स्वाभाविक मित्र मधुसूदन [ श्रीकृष्ण ] के भाई हैं । अत यदि मुझमें तुम्हारा स्नेह हो तो [ इन पर ] क्रोध न करना । वन का आश्रय ले लेना, परन्तु निर्दयता पूर्ण क्षत्रियोचित मार्ग का अवलम्बन न करना ॥ २८ ॥

कञ्चुकी—महाराज की जो आज्ञा । ( चल पडता है )

युधिष्ठिर —( अग्निं दृष्ट्वा, सहर्षम् । ) कृष्णे, ननूद्धूतशिखाहस्ताहूतास्मद्विधव्यसनिजनः समिद्धो भगवान्हुताशनस्तत्रेन्धनीकरोम्यात्मानम् ।

द्रौपदी—पसीददु पसीददु महाराओ इमिणा अपच्छिमेण पणएण । अहं दाव अग्गदो पविसामि । ( प्रसीदतु प्रसीदतु महाराजोऽनेनापश्चिमेन प्रणयेन । अहं तावदग्रत' प्रविशामि । )

युधिष्ठिर —सहितावेवाभ्युदयमुपभोक्ष्यावहे ।

चेटी—हा भअवन्तो लोअवाला, परित्ताअह परित्ताअह । एसो क्खु सोमवंसराएसी राअसूअसंतप्पिदहव्ववाहो खण्डवसंप्पिदहुदवहस्स किरिडिणो जेट्ठो भा सुग्गहीदणामहेओ महाराअजुहिट्ठिरो । एसा वि पाञ्चालराअतणआ देवी वेदिमज्जसंभवा जण्णसेणी । दुवे वि णिक्करुणजलणस्सप्पवेसेण इन्धणीहोन्ति । तापरित्ताअह अज्जा, परित्ताअह । कधं ण को वि परित्ताअदि । (तयोरग्रत पतित्वा ।) किं ववसिदं देवीए देवेण अ ।(हा भगवन्तो

---

अग्निमिति—चितास्थमिति भाव. । उद्धूताशिखाहस्ताहूतास्मद्विधव्यसनिजनः = उद्धूता प्रकम्पिता चञ्चला वा या शिखा ज्वाला सैव हस्त. कर. तेन आहूताः आकारिताः अस्मद्विधाः व्यसनिजना' पीडितव्यक्तय. येन सः, 'हूतिराकारणाह्वानम्' इत्यमरः । हुताशनः = अग्निः, इन्धनीकरोमि = अनिन्धनम् , इन्धनं सम्पद्यते तत्करोमि 'कृम्वस्तियोगे' इत्यादिना च्विप्रत्यय. । 'अस्य च्वौ' इतीत्वं च्वेर्लोपः ।

अपश्चिमेन = अनन्त्येन अग्रतः = अग्रे, भवतः पूर्वमित्यर्थः ।

अभ्युदयं = प्रियप्राप्तिरूपोत्सवम् ।

---

**युधिष्ठिर**—( अग्नि को देखकर प्रसन्नता के साथ ) कृष्णे ! अपने प्रचण्ड ज्वालारूप हाथ से हम लोग जैसे दुखिया को आह्वान करते हुए भगवान् अग्निदेव प्रदीप्त हो रहे हैं। मैं उनमें अपने को ईंधन की तरह झोंक दूगा ।

**द्रौपदी**—प्रसन्न हों प्रसन्न हों महाराज ! अपनी इस प्राथमिक अभ्यर्थना से मैं सर्व प्रथम अपने को आहुति करूँगी ।

**युधिष्ठिर**—यदि इस तरह की समस्या है तो हम दोनों एक ही साथ अभ्युदय का उपभोग करें। अर्थात् जल कर इस दु ख से मुक्त हो जाँय ।

**चेटी**—हाय लोकपालो ! आपलोग रक्षा कीजिए, रक्षा कीजिए ।। यह चन्द्रवश के राजर्षि राजसूययज्ञ के विधान से अग्निदेव को तुष्ट करने वाले, खाण्डववन के दहनकर्त्ता अर्जुन के ज्येष्ठ भ्राता हैं। इनका शुभ नाम युधिष्ठिर है। यह पाञ्चाल नरेश की पुत्री

लोकपाला, परित्रायध्वं परित्रायध्वम् । एष खलु सोमवंशराजर्षी राजसूयसन्तर्पित-हव्यवाहः खाण्डवसन्तर्पितहुतवहस्य किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराज-युधिष्ठिरः । एषापि पाञ्चलराजतनया देवी वेदिमध्यसम्भवा याज्ञसेनी । द्वावपि निष्करुणज्वलनस्य प्रवेशेनेन्धनीभवत । तत्परित्रायध्वमार्या, परित्रायध्वम् । कथं न कोऽपि परित्रायते । किं व्यवसितं देव्या देवेन च । )

युधिष्ठिर—अयि बुद्धिमतिके, यन्नाथेन प्रियानुजेन विना सदृशं तत् । उत्तिष्ठोत्तिष्ठ, भद्रे उदकमुपानय ।

( चेटी तथा करोति । )

युधिष्ठिर—( पादौ प्रक्षाल्योपस्पृश्य च । ) एष तावत्सलिलाञ्जलिर्गाङ्गे-

परित्रायध्वम् = रक्षत, राजसूयसन्तर्पितहव्यवाहः = राजसूयेन क्षत्रियकर्तृकयज्ञ-विशेषेण सन्तर्पितः सन्तोषितः हव्यवाहः अग्निः येन सः, न केवलमयमेवाग्नेः सन्तर्पयिता किन्त्वस्य भ्राताऽपीत्याह—खाण्डवेति । खाण्डवसन्तर्पितहुतवहस्य = खाण्डवेन एतन्नामकवनविशेषेण सन्तर्पितः हुतवहः अग्निः येन तस्य, वेदिमध्य-सम्भवा = वेदिः यज्ञे परिष्कृता भूमिः तस्या मध्ये सम्भवति उत्पद्यते या सा, याज्ञ-सेनी = द्रौपदी । द्वौ = द्रौपदीयुधिष्ठिरौ प्रवेशेनेति । इन्धनीभवत इत्यनेनान्वेति । व्यवसितम् = आचरितम् ।

किं व्यवसितमित्यस्योत्तरमाह—अयीति । नाथेनेति—अस्य द्रौपद्या इत्यादि, नाथेन = स्वामिना भीमेन, प्रियानुजेनेति—अस्य ममेत्यादिः, सदृशं = युक्तम् , भीमं विना यदुचितं तदेवाचरितमित्यर्थः । उपानय = समीपमानय ।

पादौ = चरणौ, प्रक्षाल्य = जलेन संशोध्य, उपस्पृश्य = आचम्य, जलाञ्जलिमेवं

यज्ञीयवेदिका के मध्य से जन्मधारण करने वाली महारानी याज्ञसेनी [ द्रौपदी ] हैं । ये दोनों निष्ठुर अग्नि में प्रवेश करके इन्धन [ जलाने का काष्ठ ] बन रहे हैं । अतः श्रीमान् लोग इन लोगों की रक्षा कीजिए, रक्षा कीजिए । क्यों कोई इनकी रक्षा नहीं कर रहा है ? महाराज और महारानी ने यह क्या करने की मन में ठानी है ?

**युधिष्ठिर**—अरी बुद्धिमतिके, जो अपने अभीष्ट तथा प्रिय कनिष्ठ भ्राता की अनुपस्थिति में जो कुछ करना चाहिए वही करने के लिए मन में ठाना गया है । उठो, उठो, अरी भद्रे ! जल लाओ ।

( चेटी जल लाती है )

**युधिष्ठिर**—( पैर धोकर तथा आचमन करके ) सबसे पहले यह जल पूर्ण अञ्जलि गङ्गा के पुत्र पूज्य प्रपितामह [ परदादा ] शन्तनु के आत्मज भीष्म के लिए है । यह दूसरी

याय भीष्माय गुरवे प्रपितामहाय शन्तनवे। अयमपि पितामहाय विचित्रवीर्याय । ( सास्रम् । ) तातस्याधुनावसरः । अयं तावत्स्वर्गस्थिताय सुगृहीतनाम्ने पित्रे पाण्डवे ।

अद्यप्रभृति वां दत्तमस्मत्तो दुर्लभं पुनः ।
तात त्वयाऽम्बया सार्धं मया दत्तं निपीयताम् ॥ २९ ॥

एतज्जलं जलजनीलविलोचनाय
भीमाय भोस्तव ममाप्यविभक्तमस्तु ।

ददाति—एष इति । गाङ्गेयाय = गङ्गापुत्राय, 'शुभ्रादिभ्यश्चे'ति ढक्प्रत्ययः । 'आयनेयीति' एयादेशः । शन्तनो राज्ञः प्राक् परिणीता स्त्री गङ्गाऽऽसीत् । तात = पितः ! भवते = पूज्याय, सुगृहीतनाम्ने = सुगृहीत प्रातःस्मरणीयं नाम यस्य, तस्मै,

अन्वय —(हे) तात !, वाम्, दत्तम्, पुनः, अद्य, प्रभृति, अस्मत्तः, दुर्लभम्, अम्बया, सार्द्धम्, त्वया, एतद्, दत्तम् ( जलम् ) निपीयताम् ॥ २९ ॥

(हे) तात—पितः !, वाम् = युवाभ्याम्, दत्तम्, जलमिति शेषः ( वारीदमिति पाठे—इदम्, वारि, पुनः, अद्य प्रभृति = अद्यारभ्य, अस्मत्तः = अस्मत्, 'पञ्चम्यास्तसिल्' इति तसिल् । दुर्लभम् = दुष्प्राप्यम्, अतः, अम्बया=विमात्रा माद्र्या, सार्द्धम्, त्वया = पित्रा, एतत्, क्वचिन्मयेति पाठः । दत्तम्, जलमिति शेषः । निपीयताम्= पीयताम् । अत्र पान प्रति पूर्वार्द्धवाक्यार्थो हेतुरिति काव्यलिङ्गमलङ्कारः । पथ्यावक्त्रं छन्दः ॥ २९ ॥

अन्वय —जलजनीलविलोचनाय, भीमाय, ( दत्तम् ) एतत्, जलम्, भोः, वत्स, तव, मम, अपि, अविभक्तम्, अस्तु, तु, पिपासितः, अपि, ( त्वम् ) एकम्, क्षणम्, विरम, त्वया, सह, पातुम्, अयम् ( अहम् ) जवात्, आगतः, अस्मि ॥३०॥

मयैव सार्द्धं त्वया जल पेयमहमपि भस्मीभूत्वाऽगत एवेत्याह–एतदिति । जलजनीलविलोचनाय = जलजं कमलं तद्वन्नीले विलोचने नेत्रे यस्य तस्मै, भीमाय, दत्तमिति शेषः । एतत्, जलम्, भोः वत्स ! तव=भीमस्य, मम, अपि, अविभक्तम्=

जलाञ्जलि पितामह विचित्रवीर्य के लिए है । ( अश्रुकलुषित नेत्रों से ) अब पिता की बारी है । यह सलिलाञ्जलि स्वर्गवासी आदरणीय पिता पाण्डु के लिए है ।

आज से यह जल हमलोगों से मिलना दुर्लभ हो जायगा, पिता जो ! माता माद्री के साथ मेरे दिये हुए जल को पी लीजिये ॥ २९ ॥

यह तोयाञ्जलि [ जलाञ्जलि ] अविभक्त [ विना बाँटी हुई ] रूप से कमल के सदृश नीलनेत्रशाली भीमसेन के लिये और मेरे लिये भी है । वत्स ! तुम तृषार्त हो तो भी

एकं क्षणं विरम वत्स पिपासितोऽपि
पातुं त्वया सह जवादयमागतोऽस्मि ॥ ३० ॥

अथवा सुक्षत्रियाणां गतिमुपगतं वत्समहमुपगतोऽप्यकृती द्रष्टुम्। वत्स भीमसेन,

मया पीतं पीतं तदनु भवताम्बास्तनयुगं
मदुच्छिष्टैर्वृत्तिं जनयसि रसैर्वत्सलतया।

सम्मिलितम्, अस्तु = तिष्ठतु, पिपासितः = तृपितः, अपि, त्वम्, एकम्, क्षणम् = मुहूर्तम्, विरम = तिष्ठ, विलम्बं कुर्वित्यर्थः। त्वया, सह = साकम, पातुम्, अयम् = युधिष्ठिरः, (अहम्) जवात् = वेगात्, आगतः, कर्तरि क्तप्रत्ययः। अस्मि। वसन्ततिलका छन्दः॥ ३०॥

सुक्षत्रियाणाम् = वीराणाम्, गतिम् = स्वर्गरूपाम्, उपगतम् = प्राप्तम्, वत्सम = भीमम्, द्रष्टुम् = विलोकितुम्, अहम्, मृतः, अपि अकृती = अकुशलः, असमर्थ इत्यर्थ इत्यन्वयः। अस्माकमात्मघातेन वीरगतेरभावादिति भाव.।

अन्वय —अम्बास्तनयुगम्, मया, पीतम्, तदनु, भवता, पीतम्, वत्सलतया, मदुच्छिष्टैः, रसैः, वृत्तिम्, जनयसि, तव, मम, वितानेषु, सोमे, च, एवम्, विधिः, अभूत्, अधुना, कथम्, एवम्, निवापाम्भः, पूर्वम्, त्वम्, पिबसि ॥ ३१ ॥

मयेति। अम्बास्तनयुगम् = मातृस्तनद्वयम्, मया = युधिष्ठिरेण, पीतम्, तदनु = तत्पश्चात्, भवता = भीमेन, पीतम्, वत्सलतया = स्नेहेन, मदुच्छिष्टैः = मद्भोजनावशिष्टैः, रसैः=दुग्धादिभिः, वृत्तिम् = जीविकाम्, जनयसि = अजनयः,

एक क्षण के लिए प्रतीक्षा करो तुम्हारे साथ साथ पान करने के लिए अत्यन्त द्रुत गति से मैं आ ही रहा हूं॥ ३०॥

अथवा वीर सुलभगति को प्राप्त वत्स भीमसेन के समीप पहुँच कर भी उनके दर्शन से वञ्चित ही रह जाऊँगा [ तात्पर्य यह है कि क्षत्रिय लोग जो युद्ध में प्राण परित्याग करते हैं उन्हें स्वर्ग होता है और जो आत्महत्या करते हैं वे स्वर्ग के भागी नहीं होते इसलिए भीम की गति को तो युधिष्ठिर पा नहीं सकते थे। अतएव उनका भी दर्शन होना उन [ युधिष्ठिर ] के लिये कठिन ही था ]।

प्रिय भ्रात भीमसेन।

माता के स्तनद्वय का मेरे द्वारा पान कर लेने पर आपने उसका पान किया था। आप मेरे जूठे फल रसादिक [ खाद्य तथा पेय पदार्थ ] के द्वारा अत्यन्त चाव से अपनी प्राणयात्रा करते थे। यज्ञों के प्रकरण में सोमरस का पान करने के लिये भी मेरा और आप का यही नियम था [ अर्थात् पहले युधिष्ठिर पी लेते थे तो फिर भीम पान करते थे ] फिर

वितानेष्वप्येवं तव मम च सोमे विधिरभू-
न्निवापाम्भः पूर्वं पिबसि कथमेवं त्वमधुना ॥ ३१ ॥

कृष्णे, त्वमपि देहि सलिलाञ्जलिम् ।

द्रौपदी—हञ्जे बुद्धिमदिए, उवणेहि मे सलिलम् । ( हञ्जे बुद्धिमतिके, उपनय मे सलिलम् । )

( चेटी तथा करोति । )

द्रौपदी—( उपसृत्य जलाञ्जलिं पूरयित्वा । ) महाराअ, कस्स सलिलं देम्हि । ( महाराज, कस्य सलिलं ददामि । )

युधिष्ठिर—

तस्मै देहि जलं कृष्णे सहसा गच्छते दिवम् ।

वर्तमानसामीप्ये लट् । वितानेषु=क्रतुषु, 'क्रतुविस्तारयोरस्त्री' इत्यमरः । सोमे=सोमयागे, सोमरसपाने वा, एवम्=मम पश्चात्, विधिः=क्रिया, अभूत्, सर्वं कार्यं त्वया मत्पश्चादेव सम्पादितमिति भाव. । अधुना, कथम् एवम्=वैपरीत्येन, निवापाम्भः=मृताय देयं जलम्, पूर्वम्=मत्तः प्राक्, त्वम्, पिबसि । साम्प्रतं कथं विपरीतमाचरितमिति भावः । मन्मरणानन्तरं तव मरणं समुचितमिति गूढाभिप्रायः । अत्र काव्यलिङ्गमलङ्कारः । शिखरिणी छन्द ॥ ३१ ॥

सलिलाञ्जलिम्=जलाञ्जलिम् ।

कस्येति–सम्बन्धविवक्षया षष्ठी । अथवा व्याकुलीभूता द्रौपदी कस्मै इत्यस्य स्थाने कस्येति प्रयुक्तम् ।

अन्वय —दिवम्, सहसा, गच्छते, तस्मै, पूर्वम्, जलम्, देहि, येन, रुदितेन, अम्बा, अपि, गान्धार्या, समीकृता ।

यदर्थं सांप्रतं जलदानस्यावश्यकता पूर्वं तस्मै देहीत्याह—तस्मा इति । दिवम् । स्वर्गम्, सहसा=सपदि, गच्छते, शतृप्रत्ययान्तस्य ङयि रूपमिदम् । तस्मै=भीमाय,

अब इस तिलजल को इस प्रकार मुझ से प्रथम क्यों पान कर रहे हो ? ॥ ३१ ॥

कृष्णे [ द्रौपदी ] ! तुम भी सलिलाञ्जलि प्रदान करो ।

द्रौपदी—अरी बुद्धिमतिके, मुझे जल ला दे । ( चेटी जल लाकर देती है )

द्रौपदी—( समीप आकर जल से अञ्जलि भरकर ) महाराज, किसे जलप्रदान करूँ ?

युधिष्ठिर—

ऐ कृष्णे, अकस्मात् स्वर्ग में जाने वाले उसे जल दो जिसके कारण माताजी गान्धारी

अम्बापि येन गान्धार्या रुदितेन समीकृता ॥ ३२ ॥

द्रौपदी—णाह भीमसेण, परिअणोवणीदं उदअं सग्गगदस्स दे पादोदअं भोदु। (नाथ भीमसेन, परिजनोपनीतमुदकं स्वर्गगतस्य ते पादोदकं भवतु।)

युधिष्ठिर—फाल्गुनाग्रज,

असमाप्तप्रतिज्ञेऽपि याते त्वयि महाभुजे।
मुक्तकेश्यैव दत्तस्ते प्रियया सलिलाञ्जलिः ॥ ३३ ॥

द्रौपदी—उट्ठेहि महाराअ, दूरं गच्छदि दे भादा। (उत्तिष्ठ महाराज, दूरं गच्छति ते भ्राता।)

युधिष्ठिर—(दक्षिणाक्षिस्पन्दनं सूचयित्वा।) पाञ्चालि, निमित्तानि मे

---

पूर्वम्, जलम्, देहि, येन = भीमेन, रुदितेन = रोदनेन भावे क्तप्रत्ययः। अम्बा = कुन्ती, अपि, गान्धार्या समीकृता = तुल्यीकृता। यः कुन्तीमप्यरोदयत्तस्मै भीमाय देहीति भावः। पथ्यावक्त्रं छन्दः ॥ ३२ ॥

परिजनोपनीतम् = सेविकया दत्तम्, पादोदकम् = पादप्रक्षालनार्थं जलम्, फाल्गुनाग्रज = अर्जुनज्येष्ठ !

अन्वय—असमाप्तप्रतिज्ञे, अपि, महाभुजे, त्वयि, याते (सति) प्रियया, मुक्तकेश्या, एव, ते, सलिलाञ्जलिः, दत्तः ॥ ३३ ॥

असमाप्तेति। असमाप्तप्रतिज्ञे = अपूर्णप्रतिज्ञे, अपि, महाभुजे = बलवति, त्वयि = भीमे, याते = गते, स्वर्गमिति शेषः। सति, प्रियया = स्त्रिया, मुक्तकेश्या = अबद्धकेश्या। स्वाङ्गाच्चोपसर्जनादिति ङीप्। एव, ते = तुभ्यम्, सलिलाञ्जलिः = उदकाञ्जलिः, दत्तः = समर्पितः। पथ्यावक्त्रं छन्दः ॥ ३३ ॥

दक्षिणाक्षिस्पन्दनम् = दक्षिणनेत्रसञ्चलनम् (फड़कन) इति प्रसिद्धोऽर्थः। पुरु-

---

माता के रोदन से मित्रता कर ली है [अर्थात् वे अपने सौ पुत्रों के मृत्यु होने पर रोदन की थीं अब भीम के मृत्यूपरान्त माता कुन्ती भी रोती हैं अतः रोने की दोनों में मित्रता थी] ॥

द्रौपदी—नाथ भीमसेन! दासी के द्वारा दिया हुआ यह जल आप के पादप्रक्षालन के लिए हो।

युधिष्ठिर—ऐ अर्जुन के ज्येष्ठ भ्रात!

प्रतिज्ञा की पूर्ति किए विना आप जैसे शूरवीर के प्रस्थान कर जाने पर तुम्हारी प्रियतमा केशपाश बाँधे विना ही जलाञ्जलि दे रही है ॥ ३३ ॥

द्रौपदी—उठिए महाराज! आप के भ्राता दूर चले जा रहे हैं।

युधिष्ठिर—(दाहिने नेत्र के फड़कने की सूचना देते हुए) पाञ्चालनरेशपुत्रि! शुभशकुनों से पता चलता है कि भीमसेन मिलेंगे।

कथयन्ति सम्भावयिष्यसि वृकोदरमिति, भवतु शीघ्रं दहनमुपसर्पावः ।

द्रौपदी—महाराअ, सुणिमित्तं भोदु । ( महाराज, सुनिमित्तं भवतु । )

( नेपथ्ये कलकलः । )

( प्रविश्य संभ्रान्तः । )

कञ्चुकी—परित्रायतां परित्रायतां महाराजः । एषु खलु दुरात्मा कौरवापसदः क्षतजाभिषेकपाटलिताम्बरशरीरः, समुच्छ्रितदिग्धभीषणगदाशनिरुद्यतकालदण्ड इव कृतान्तोऽत्रभवतीं पाञ्चालराजतनयामितस्ततः परिमार्गमाण इत एवाभिवर्तते ।

---

युधिष्ठिर—हा दैव, तेन निर्णयो जातः । हा गाण्डीवधन्वन्,

---

षाणां दक्षिणनेत्रस्पन्दनं शुभकरमिति भावः । सम्भावयिष्यसि = प्राप्स्यसि । स्वर्गं गतं स्वर्गं प्राप्स्यामीत्यवगत्याह—भवत्विति । अत्रैव प्राप्तिसूचकं नेत्रस्पन्दनं तत्र प्राप्तिसूचकमित्यवगतं युधिष्ठिरेणेति भावः । दहनम्=अग्निम् । उपसर्पावः=गच्छावः ।

सम्भ्रान्तः = उद्विग्नः ।

कौरवापसदः = कौरवेषु अपसदः अधमः । क्षतजाभिषेकपाटलिताम्बरशरीरः = क्षतजस्य रुधिरस्य अभिषेकेण सेचनेन पाटलिते ईषद्रक्तीकृते अम्बरशरीरे येन सः, रक्तभीषणगदाशनिः = रक्तेन रुधिरेण भीषणा भयजनिका या गदा सा अशनिः वज्र इव यस्य सः, अत एव उद्यतकालदण्ड = उत्थापितयमलगुडः, कृतान्तः = यमः, अत्रभवतीम् = पूज्याम्, परिमार्गमाणः = गवेषयन् ।

दैव = विधे, तेन = दुर्योधनागमनेन, निर्णयः = भीमार्जुनवधस्य निश्चयः नायं भीमार्जुनौ अविजित्यागन्तु शक्नोतीति भावः ।

---

द्रौपदी—महाराज ! शुभ शकुन हों ।

(नेपथ्य में कलकल ध्वनि )

( प्रवेश करके चकपकाए हुए )

कञ्चुकी—रक्षा कीजिए, रक्षा कीजिए महाराज ! यह दुरात्मा कौरवाधम, जिसके वस्त्र और शरीर रुधिर से सराबोर होकर लोहितवर्ण हो गए हैं, रक्तरञ्जित भीषण शक्तिरूपिणी गदा को कालदण्ड के समान ऊपर को उठाए हुए साक्षात् काल के समान यहाँ श्रीमती पाञ्चालाधिनाथ की दुहिता का अन्वेषण करता हुआ इसी ओर आ रहा है ।

युधिष्ठिर—हाय भाग्य ! इससे तेरा भी निर्णय हो गया [ अर्जुन भी मृत्यु को प्राप्त हो गया ] । हाय गाण्डीवधारी !

( इति मुह्यति । )

द्रौपदी—हा उज्जवन्त, हा मम सअम्बरसअग्गाहकुडुम्ब पिअं आदुअं अणुगदोसि । ण उण महाराअं ईमं दासजणं अ । ( इति मोहमुपगता ) हा आर्यपुत्र, हा मम स्वयंवरसंग्राहकुटुम्ब, प्रियं भ्रातरमनूगतोऽसि । न पुनर्महाराजमिमं दासजनं च । )

युधिष्ठिर—हा वत्स सव्यसाचिन्, हा असदृशमल्ल, हा निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक, हा बदर्याश्रममुनिद्वितीयतापस, हा द्रोणाचार्यप्रियशिष्य, हा अस्त्रशिक्षाबलपरितोषितगाङ्गेय, हा राधेयकुलकमलिनीप्रालेयवर्ष, हा गन्धर्वनिर्वासितदुर्योधन, हा पाण्डवकुलकमलिनीराजहंस,

---

मुह्यति = अचैतन्यं प्राप्नोति ।

मम = द्रौपद्याः, स्वयम्वरसंग्राहकुटुम्ब = स्वयम्वरे संग्राहः संग्रहणं स्वीकार इत्यर्थः, तेन कुटुम्बः पोषकः तत्संबोधने । सम्भावयसि = सम्मानयसि, दासजनम् = मां द्रौपदीम् ।

असदृशमल्ल=अनुपमेयवलिष्ठ, निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक=निवातकवचस्य एतन्नामकदैत्यस्य उद्धरणेन निष्कण्टकीकृतः अमरलोकः स्वर्गं येन तत्सम्बोधने । निवातकवचासुरवधकथा-महाभारते वर्णिताऽस्ति । बदर्य्याश्रममुनिद्वितीयतापस = बदर्य्याश्रमे बदरिकाश्रमे यौ मुनी नरनारायणौ तयोर्द्वितीयः नररूपः स चासौ तापसः तत्सम्बोधने, अर्जुनो नरावतार आसीदिति भावः । अस्त्रशिक्षाबलपरितोषितगाङ्गेय = अस्त्रशिक्षाबलेन अस्त्रशिक्षया बलेन चेति वा परितोषितः गाङ्गेयः भीष्मो येन तत्सम्बोधने, गन्धर्वनिर्वासितदुर्योधन = गन्धर्वग्रहणाद्

---

( मूर्च्छित हो जाते हैं )

द्रौपदी—हाय आर्यपुत्र ! हाय ! स्वयम्वर में मुझे स्वय अपने पराक्रम से ग्रहण करने वाले ! प्रियभ्राता के पीछे ही पीछे चले गए, किन्तु महाराज के अथवा इस दासी के पश्चात् नहीं गए ? ( चेतनाविहीन हो जाती हैं )

युधिष्ठिर—हाय अनुज सव्यसाचिन् ! हाय अनुपम योद्धा ! हाय निवातकवच नाम के राक्षस का वध करके स्वर्ग को निष्कण्टक बना देने वाले ! हाय बदरिकाश्रम के द्वितीय तपस्विन् ! हाय द्रोणाचार्य के प्रिय शिष्य ! हाय अस्त्र शिक्षा और बल से भीष्म को सन्तुष्ट करने वाले ! हाय कर्ण-कुल- कमलिनी के लिए हिमपात सदृश ! हाय गन्धर्वों से दुर्योधन को मुक्त करने वाले ! हाय पाण्डव-वंश-कमल के बीच विहरण करने वाले राजहंस !

तां वत्सलामनभिवाद्य विनीतमम्बां-
गाढं च मामनुपगुह्य मयाऽप्यनुक्तः ।
एतां स्वयवरवधूं दयितामदृष्ट्वा
दीर्घप्रवासमयि तात कथं गतोऽसि ॥ ३४ ॥

( मोहमुपगत । )

कञ्चुकी—( चेटीं प्रति । ) इदानीं भोः कष्टम् । एष कौरवाधमो यथेष्टमिहैव प्रवर्तते । सर्वथा प्रवेशकालः । चितासमीपमुपनयाम्यत्रभवतीं पाञ्चालराजतनयाम् । अहमप्येवमेवानुगच्छामि । भद्रे, त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुलसहदेवौ वाऽवाप्नुहि । एवमवस्थिते महाराजेऽस्तमितयोर्भीमार्जुनयोः कुतोऽत्र परित्राणाशा ।

---

निर्वासितो मोचितो दुर्योधनो येनेत्यर्थः । वने निवसता अर्जुनेन गन्धर्वराजगृहीतो दुर्योधनो युधिष्ठिराज्ञया मोचितः, इति महाभारतीया कथाऽनुसन्धेया ।

अन्वय.—अयि, वत्स ! वत्सलाम् , ताम् , अम्बाम् , विनीत (यथा स्यादेवम् ) अनभिवाद्य, माम् , गाढम् , अनुपगुह्य, मया, अपि, अनुक्तः, सदृशीम् , एताम् , स्वयम्वरवधूम् , अदृष्ट्वा, च, दीर्घप्रवासम् , कथम् , गतः, असि ॥ ३४ ॥

अस्मान् विहाय कथं गत इत्याह—तामिति । अयि, वत्स ! = अर्जुन ! ताम् = पूज्याम्, वत्सलाम्=स्नेहवतीम्, अम्बाम् = मातरम्, विनीतम् = सनम्रं, यथा स्यादेवम्, अनभिवाद्य = नामोच्चारणपूर्वकमप्रणम्य, माम् , गाढम्=भृशम् , अनुपगुह्य = अनालिङ्ग्य, सदृशीम् = समानाम्, त्वत्तुल्यामित्यर्थः । एताम् , स्वयवरवधूम्=स्वयं वृणीत इति स्वयंवरा सा चासौ वधूः ताम्, अदृष्ट्वा, मया, अपि अनुक्तः=अननुज्ञातः, दीर्घप्रवासम् = दीर्घकालिकयात्राम्, मरणमित्यर्थः । कथम् , गतः = प्राप्तः, असि । वसन्ततिलका छन्दः ॥ ३४ ॥

अस्तम्=विनाशम् , इतयोः=प्राप्तयोः, परित्राणम्=रक्षा ।

---

उस सुत स्नेहवती माता को नम्रतापूर्वक प्रणाम किए विना ही, भ्रातृवत्सल मुझे आलिङ्गित किए विना ही तथा मेरी आज्ञा लिए विना और इस स्वयम्वर में लाई गई प्राणवल्लभा वधू से विना पूछे दीर्घयात्रा को क्यों चले गए हो [मृत्यु को प्राप्त हुए हो] ॥३४॥

कञ्चुकी—( चेटी से ) अरे इस समय महान् कष्ट ! यह कौरवनीच अबाधगति से यहाँ भी चला आ रहा है । प्रत्येक दशा में चिताप्रवेश का ही समय है । अब श्रीमती पाञ्चालराजपुत्री को चिता के समीप ले चलता हूँ इसी तरह मैं भी पहुँच जाता हूँ । भद्रे !

चेटी—परित्ताअह परित्ताअह अज्जा । ( परित्रायध्वं परित्रायध्वमार्याः । )

( नेपथ्ये कलकलानन्तरम् । )

भो भोः, समन्तपञ्चकसञ्चारिणः क्षतजास्वादमत्तयक्षराक्षसपिशाचभूतवेतालकङ्कगृध्रजम्बूकवायसभूयिष्ठा अवशिष्टविरलाश्च योधाः,कृतमस्मद्दर्शनत्रासेन। कथयत भवन्तः कस्मिन्नुद्देशे याज्ञसेनी सन्निहितेति। कथयामि लक्षणं तस्याः-

ऊरू करेण परिघट्टयतः सलीलं
दुर्योधनस्य पुरतोऽपहृताम्बरा या ।

क्षतजेति—क्षतजस्य शोणितस्य आस्वादेन मत्ता ये यक्षादयः [ कङ्कः लोहपृष्ठः 'कङ्कहड़' इति ख्यातः, जम्बूकः शृगालः, वायसः काकः ] ते भूयिष्ठाः बहुला यत्र ते, अवशिष्टा अत एव विरला =अल्पाः, योधाः = युध्यन्त इति योधाः भटाः, पचादित्वादच्प्रत्ययः । मद्दर्शनसन्त्रासेन=मद्विलोकनजन्यभयेन, कृतम्=व्यर्थम् , उद्देशे = स्थाने, सन्निहिता=समीपस्था, उपविष्टेत्यर्थः । लक्षणम्=स्वरूपम् ।

अन्वयः—करेण, ऊरू, सलीलम् , परिघट्टयतः, दुर्योधनस्य, पुरतः, या, अपहृताम्बरा, दुःशासनस्य, करकर्षणभिन्नमौलिः, सा, पुनः, क, प्रदेशे, वर्तते ( इति ) कथ्यताम् ॥ ३५ ॥

लक्षणमेवाह—ऊरू करेणेति । करेण = हस्तेन, ऊरू=सक्थिनी, सलीलम्=सकौतुकम् , परिघट्टयत = परिमर्दयतः, मदीयोर्वोरुपरि उपविशेति बोधयत इत्यर्थः । दुर्योधनस्य, पुरतः=अग्रे, या, अपहृताम्बरा=अपहृतम् आकृष्टम् अम्बरं यस्याः सा, दुःशासनस्य, करकर्षणभिन्नमौलिः=करेण यत्कर्षणम् आकर्षणम् तेन भिन्न विदीर्णः

तू भी महारानी के भ्राता [ धृष्टद्युम्न ] अथवा नकुल और सहदेव के समीप चली जाना । [ क्योंकि ] महाराज [ युधिष्ठिर ] की ऐसी अवस्था में और भीमार्जुन के स्वर्ग चले जाने पर यहाँ हम लोगों की रक्षा के लिये क्या आशा ?

चेटी—रक्षा कीजिए, रक्षा कीजिए आर्या !

( नेपथ्य में कोलाहल के अनन्तर )

अरे अरे ! समन्तपञ्चकके चारों ओर भ्रमण करनेवाले, क्षत-विक्षत अङ्गोंसे निकले हुए रुधिर आस्वाद से उन्मत्त यक्ष, राक्षस, पिशाच, भूत, वेताल, कङ्क, गीध, शृगाल और कौवों से अधिक सख्या वाले कतिपय अवशिष्ट योद्धाओ ! मुझे देखकर आप लोगों के डरने की कोई आवश्यकता नहीं। आप लोग यह कहिए, द्रौपदी किस स्थान में वर्तमान हैं ? उनके लक्षणों को मैं वतादे रहा हूँ ।

'वड़े हाव-भाव के साथ हाथ से जाँघों को ठोंकते हुए दुर्योधन के नेत्रों के सामने

दुःशासनेन करकर्षणभिन्नमौलिः
सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥ ३५ ॥

कञ्चुकी—हा देवि यज्ञवेदिसम्भवे, परिभूयसे सम्प्रत्यनाथा कुरुकुलकलङ्केन ।

युधिष्ठिरः—( सहसोत्थाय । ) पाञ्चालि, न भेतव्यम् । ( ससंभ्रमम् । ) कः कोऽत्र भोः । सनिषङ्गं मे धनुरुपनय । दुरात्मन् दुर्योधनहतक, आगच्छागच्छ । अपनयामि ते गदाकौशलसंभृतं भुजदर्पं शिलीमुखासारेण । अन्यच्च रे कुरुकुलाङ्गार,

प्रियमनुजमपश्यंस्तं जरासन्धशत्रु
कुपितहरकिरातद्वेषिणं त च वत्सम् ।

---

मौलि चूडा यस्याः सा, 'मौलि किरीटे धम्मिल्ले चूडायाम्' इति मेदिनी । पुनः, क्व=कस्मिन् , प्रदेशे=स्थाने, वर्तते, कथय, 'पश्य मृगो धावती'त्यादिवत्कथयेत्यस्य पूर्वं वाक्य कर्म । वसन्ततिलका छन्दः ॥ ३५ ॥

यज्ञवेदिसम्भवे=द्रौपदि, कुरुकुलकलङ्केन=कौरववंशलाञ्छनभूतदुर्योधनेन, सम्प्रति, अनाथा=अस्वामिनी । परिभूयसे=तिरस्क्रियसे ।

सहसा=झटिति, न भेतव्यमिति । दुर्योधनादिति शेषः । सज्यम्=समौर्वीकम् , धनु'=चापम् , उपनय=आनय, अपनयामि=दूरीकरोमि, गदाकौशलसम्भृतम्=गदाकौशलेन सम्भृतम उत्पन्नम् , शिलीमुखासारेण=वाणधारया ।

अन्वय —प्रियम् , अनुजम् , जरासन्धशत्रुम् , नम् , कुपितहरकिरातद्वेषिणम् , वत्सम् , तम् , च, अपश्यन् , कठिनचेताः, त्वम् , इव, प्राणितुम् , न, शक्तः, (परम्) वाणवर्षैः, तव, असून् , अपहर्तुम् , नच, शक्त· ॥ ३६ ॥

तव प्राणान् हत्वैव स्वयं मरिष्यामीत्याह—प्रियमिति । प्रियम्=स्निग्धम् ,

---

दुश्शासन के द्वारा जिसका वस्त्र खींचा गया था तथा केशों के आकृष्ट करने से जिसकी वेणी खुल गई थी, वह द्रौपदी बतलाइए किस स्थान में है ?' ॥ ३५ ॥

कञ्चुकी—हाय यज्ञवेदी से उत्पन्न महारानी । अब [ आप ] असहाय होकर कौरवकुलाऽङ्गार से अपमानित होंगी ।

**युधिष्ठिर**—पाञ्चालि ! डरिए न डरिए न । ( उद्विग्नतापूर्वक ) कौन है यहाँ कोई है ? तूणीर के साथ मेरा धनुष लाओ । दुष्ट बेचारा दुर्योधन ! आ, आ, वाणवर्षा से तुम्हारे अभिमान को, जो गदायुद्ध की कला से एकत्रित किया गया है, चूर चूर कर देता हूँ । और भी अरे कुलकलङ्क !

उस जरासन्ध के शत्रु, प्रिय लघु भ्राता [ भीमसेन ] और किरातरूपधारी क्रुद्ध शंकर

त्वमिव कठिनचेताः प्राणितुं नास्मि शक्तो
न च पुनरपहर्तुं बाणवर्षैस्तवासून् ॥ ३६ ॥
( ततः प्रविशति गदापाणिः क्षतजसिक्तसर्वाङ्गो भीमसेनः । )

भीमसेनः—( उद्धतं परिक्रामन् । ) भो भोः समन्तपञ्चकसंचारिणः, कोऽयमावेगः—

नाहं रक्षो न भूतं रिपुरुधिरजलप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।

---

अनुजम् = कनिष्ठभ्रातरम्, जरासन्धशत्रुम् = जरासन्धनामकनृपस्य रिपुम्, तम् = भीमम्, कुपितहरकिरातद्वेषिणम् = कुपितो यो हरःशिवः स एव किरातः व्याधः तस्य द्वेषिणम् रिपुम् किरातवेषधारिणा शिवेन सहार्जुनोऽयुध्यतेति कथा महाभारते वनपर्वणि द्रष्टव्या । वत्सम् = प्रियम्, तम् = अर्जुनम्, च, अपश्यन् = अविलोकयन्, कठिनचेताः = कठोरहृदयः, त्वम् = दुर्योधन', प्राणितुम् = जीवितुम्, न, शक्तः = समर्थः, पुनः, बाणवर्षैः = शरवर्षणैः, तव = दुर्योधनस्य, असून् = प्राणान्, अपहर्तुम्=विनाशयितुम्, न च, शक्तः=समर्थः शक्त इत्यस्यात्रापि सम्बन्धः । काक्वोच्यते नच शक्तः । तथाच अहं शक्त एवेति भावः । अत्रोपमाऽलङ्कारः । मालिनी छन्दः ॥३६॥

गदापाणिः = पाणौ गदा यस्य सः, 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ' इति सप्तम्यन्तस्य परप्रयोगः । क्षतजसिक्तसर्वाङ्गः = क्षतजेन शोणितेन सिक्तानि सर्वाणि, अङ्गानि यस्य सः ।

उद्धतम् = उत्कटम्, परिक्रामन् = प्रचलन्, आवेगः = उद्विग्नता ।

अन्वयः—अहम्, रक्षः, न, भूतः, न, प्रकामम्, रिपुरुधिरजलप्लाविताङ्गः, निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः, क्रोधनः, क्षत्रियः, अस्मि, भोः, भोः, समरशिखिशिखा-

---

भगवान् से द्वन्द्व युद्ध करने वाले उस वत्स [ अर्जुन ] को न देखता हुआ मैं तुम्हारी तरह क्रूरहृदय वाला होकर जीवित रहने में असमर्थ हूँ । और बाणों की वर्षा से तुम्हारे प्राणों को भी अपहरण नहीं कर सकता । [ अभिप्राय यह है कि दुर्योधन के सौ भाई मारे गये हैं तो भी वह हृदय को वज्र बनाकर जीवित है इसके विपरीत युधिष्ठिर अपने एक भी भाई के मृत्यु पर प्राण परित्याग करने की प्रतिज्ञा किए हुए हैं । साथ साथ दुर्योधन की हत्या भी नहीं करना चाहते ] ॥ ३६ ॥

( तदनन्तर रक्त से लिप्त सर्वाङ्ग और गदा हाथ में लिये हुए भीमसेन प्रवेश करते हैं )

**भीमसेन**—अरे अरे समन्तपञ्चक के चारों तरफ भ्रमणकारियो !

न मैं राक्षस हूँ और न तो भूत-प्रेत हूँ किन्तु यथेच्छ शत्रुरक्तरूपी जल से आप्लावित

भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥ ३७ ॥

कथयन्तु भवन्तः कस्मिन्नुद्देशे पाञ्चाली तिष्ठति ।

द्रौपदी—( लब्धसंज्ञा । ) परित्ताअदु परित्ताअदु महाराओ । ( परित्रायता परित्रायता महाराजः । )

कञ्चुकी—देवि पाण्डुस्नुषे, उत्तिष्ठोत्तिष्ठ । सम्प्रति झटिति चिताप्रवेश एव श्रेयान् ।

---

दग्धशेषः, राजन्यवीराः, वः, अनेन, त्रासेन, कृतम्, किम्, हतकरितुरगान्तर्हितैः, लीनैः, आस्यते ॥

नाहमिति । अहम्=त्वया दृश्यमानः, रक्षः=राक्षसः, न, भूतः=पिशाचादिः, न, किन्तु प्रकामम्=यथेष्टम्, रिपुरुधिरजलप्लाविताङ्गः=शत्रुशोणितसलिलसिक्तावयवः, निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः=ऊरुविषयिणी प्रतिज्ञा ऊरुप्रतिज्ञा सैव जलनिधिगहनम् दुष्पारसमुद्रः तत् निस्तीर्णम् उत्तीर्णं येन सः, क्रोधनः, नन्द्यादित्वाल्ल्युप्रत्ययः । क्षत्रियः=राजन्यः, अस्मि, अतः भोभो समरशिखिशिखादग्धशेषाः=समरमेव शिखिशिखा अग्निज्वाला तया ये दग्धाः, तेभ्यः शेषाः अवशिष्टाः तत्सम्बोधने, राजन्यवीराः=क्षत्रियेषु शूराः, युद्धेऽपराजितत्वादिति भावः । वः=युष्माकम्, अनेन=मद्दर्शनजन्येन, त्रासेन=भयेन, कृतम्=अलम्, ननु कथमवगम्यते त्रासइत्याह—लीनैरिति । किम्, हतकरितुरगान्तर्हितैः=हता ये करितुरगाः तेषु अन्तर्हितैः, अत एव लीनैः=प्रच्छन्नैः, किम्, आस्यते=उपविश्यते । नाहं युष्मान् किमपि करिष्यामि वृथैव त्रासो मत्त इति भावः । अहं त्वदीयो भीमसेन एवेति तत्त्वम् । अत्र तृतीयचरणे रूपकमलङ्कारः । स्रग्धरा छन्दः ॥ ३७ ॥

भीममजानन् दुर्योधनं जानन् कञ्चुक्याह—देवीति । पाण्डुस्नुषे !=पाण्डुपुत्रस्त्रि ! श्रेयान्=श्रेष्ठः ।

---

शरीर वाला और ऊरुभङ्ग की प्रतिज्ञारूपी गम्भीर समुद्र को पार करके क्रोधान्ध क्षत्रिय वीर हूँ । अरे अरे समराग्नि की ज्वाला से जल कर अवशिष्ट शूरवीर राजाओ ! इस भय से भयभीत होने की कोई आवश्यकता नहीं जो कि तुम लोग युद्ध में मरे हुए हाथी और घोड़ों के ओट में बैठ जाते हो ॥ ३७ ॥

आप लोग बतलाइये किस स्थान में पाञ्चाली [ द्रौपदी ] बैठी हुई हैं ?

द्रौपदी—( चेतना प्राप्त कर ) रक्षा कीजिए, रक्षा कीजिए महाराज !

कन्चुकी—महारानी पाण्डु की पतोहू ! उठिये उठिये । अब शीघ्र ही चिता में कूद पड़ना ही श्रेयस्कर है ।

द्रौपदी—( सहसोत्थाय । ) कहं ण संभावेमि अज्जवि चिदासमीवम् । ( कथं न संभावयाम्यद्यापि चितासमीपम् । )

युधिष्ठिरः—कः कोऽत्र भोः । सनिषङ्गं धनुरुपनय । कथं न कश्चित्परिजनः । भवतु । बाहुयुद्धेन दुरात्मान गाढमालिङ्ग्य ज्वलनमभिपातयामि । ( परिकरं बध्नाति । )

कञ्चुकी—देवि पाण्डुस्नुषे, संयम्यन्तामिदानीं नयनपथावरोधिनो दुःशासनापकृष्टा मूर्धजाः । अस्तमिता सम्प्रति प्रतीकाराशा । द्रुतं चितासमीप सम्भावय ।

युधिष्ठिरः—कृष्णे, न खल्वनिहते तस्मिन्दुरात्मनि दुर्योधनहतके संहर्तव्याः केशाः ।

भीमसेनः—पाञ्चालि न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्याम् । तिष्ठतु तिष्ठतु । स्वयमेवाहं संहरामि ।

---

सनिषङ्गम् = सतूणीरम् , ज्वलनम् = अग्निम , परिकर. = गात्रिकाबन्धः ।

संयम्यन्ताम् = बध्यन्ताम् , नयनोपरोधिनः = नेत्राच्छादिन', दुःशासनावकृष्टा' = दु'शासनेनाकृष्टा', मूर्द्धजाः = केशाः । कुत' स्वहस्तेनैव संयम्यन्तामित्याह—अस्तमिति । प्रतीकाराशा = शत्रुकृतपराभवनिवारणतृष्णा, सम्प्रति, अस्तम् = विनाशम् , अस्तमिति अदर्शने मान्ताव्ययम् । इता = प्राप्ता, इत्यन्वयः । द्रुतम = अतिशीघ्रम् सम्भावय = प्रापय, आत्मानमिति शेष. ।

अनिहते = अमारिते, दुर्योधनहतके = दुष्टदुर्योधने, संहर्तव्याः = बन्धनीया ।

मयि = भीमे, दु शासनविलुलिता = दुःशासनेन सञ्चालिता, वेणि' आत्मपाणिभ्याम् = स्वहस्ताभ्याम् ।

---

**द्रौपदी**—( एकाएक उठकर ) अब भी चिता के समीप क्यों नहीं पहुँच रही हूँ ?

**युधिष्ठिर**—कौन है कोई यहाँ है ? तूणीर के साथ मेरा धनुष ला दे। क्यों कोई भृत्य ... । अच्छा, बाहुयुद्ध करके हाथ-पैर तोडकर गाढ आलिङ्गन करके चिता की जलती हुई आग में झोंक दूंगा । ( फेटा बाँधते हैं )

**कञ्चुकी**—महारानी पाण्डु की पतोहू । नेत्रों की दृष्टि के बाधक केशों को, जो दुश्शासन के द्वारा खींचे गए हैं, बाँध डालिये । अब बदला चुकाने की आशा जाती रही । शीघ्र ही चिता के समीप गमन कीजिए ।

**युधिष्ठिर**—द्रौपदी । उस दुरात्मा दुर्योधन के संहार हुए बिना केशों को न बाँधिए ।

**भीमसेन**—पाञ्चालपुत्रि ! मेरे जीवित रहते हुए दुश्शासन के द्वारा बिगाडी हुई वेणी को अपने हाथ से न बाँधिए । ठहरिए, ठहरिए ! मैं स्वय ही सुधारता हूँ ।

( द्रौपदी भयादपसर्पति । )

भीमसेनः—तिष्ठ तिष्ठ भीरु, क्वाधुना गम्यते । ( इति केशेषु ग्रहीतुमिच्छति । )

युधिष्ठिरः—( वेगाद्भीममालिङ्ग्य । ) दुरात्मन् ! भीमार्जुनशत्रो ! सुयोधनहतक !

आशैशवादनुदिनं जनितापराधो
मत्तो बलेन भुजयोर्हतराजपुत्रः ।
आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य
जीवन्प्रयासि न पदात्पदमद्य पाप ॥ ३८ ॥

---

आलिङ्ग्य = गाढं संगृह्य, दुर्योधनबुद्ध्येति भावः ।

अन्वय —हे हतराजपुत्र !, पाप ! आशैशवात्, अनुदिनम्, जनितापराधः, भुजयोः, बलेन, मत्तः, मे, भुजपञ्जरस्य, इदम्, अन्तरम्, आसाद्य, अद्य, पदात्, पदम्, अपि, जीवन्, न, प्रयासि ॥ ३८ ॥

न कुत्रापि यातु शक्नोषीत्याह—आशैशवादिति । हे हतराजपुत्र = विनाशितभीमार्जुन, अथवा, दुष्टक्षत्रिय ! पाप ! = पातकिन्, आशैशवात् = बाल्यादारभ्य, अनुदिनम् = दिने दिने, जनितापराधः = जनितः उत्पादितः अपराधो येन सः, भुजयोः = बाह्वोः, बलेन, मत्तः = सदर्पः, ( त्वम् ) मे = युधिष्ठिरस्य, भुजपञ्जरस्य = भुजौ पञ्जरम् पक्ष्यादिबन्धनगृहमिव तस्य, इदम्, अन्तरम् = मध्यम्, आसाद्य = प्राप्य, अद्य = इदानीम्, पदात् पदमपि = एकमपि पदम्, जीवन् = प्राणान् धारयन्, न, प्रयासि = प्रयास्यसि । मृत्वैवास्मान्निःसरिष्यति न जीवित इति भावः । वसन्ततिलका छन्दः ॥ ३८ ॥

---

( द्रौपदी भय से दूर खिसक जाती हैं )

भीमसेन—ठहरिए, ठहरिए, डरपोक ! अब कहाँ जाती हो ?

( बाल को पकड कर खींचना चाहते हैं )

युधिष्ठिर—( वेगपूर्वक भीम को भुजाओं से पकड कर ) दुष्ट, भीम और अर्जुन के शत्रु तथा नीच सुयोधन !

बाल्यकाल से लेकर अब तक प्रतिदिन अपराध करता गया है, बाहुओं के बल से मतवाला हो गया है । और भीम प्रभृति राजकुमारों का वध कर डाला है । पापी ! [ तू ] आज मेरे भुजारूपी पिंजड़े के भीतर पहुँच कर जीवित रहते हुए भी एक पग आगे नहीं बढ सकता ॥ ३८ ॥

भीमसेनः—कथमार्यः सुयोधनशङ्कया क्रोधान्निर्दयं मामालिङ्गति। देव, अजातशत्रो, भीमार्जुनगुरो, यथैवाज्ञापयसि न तथैवैतत्।

कञ्चुकी—( निरूप्य, सहर्षम्। ) महाराज, दिष्ट्या वर्धसे। अयं खल्वायुष्मान्भीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीरो दुर्लक्ष्यव्यक्तिः। अलमधुना सन्देहेन।

चेटी—देवी णिवट्टीअदु णिवट्टीअदु। एसो क्खु पूरिदपडिण्णाभारो णाहो दे वेणीसंहारं कादुं तुमं एव्व अण्णेसेदि। ( देवि, निवर्त्यतां निवर्त्यताम्। एष खलु पूरितप्रतिज्ञाभारो नाथस्ते वेणीसंहारं कर्तुं त्वामेवान्वेषयति। )

---

सुयोधनशङ्कया = दुर्योधनोऽयमित्याकारकभ्रमेण, आलिङ्गति = निपीडयति।

निरूप्य=विचारेण निश्चित्य, सहर्षमिति। हर्षे हेतुः 'नायं दुर्योधनः किन्तु भीमोऽयमि'ति ज्ञानम्। दिष्ट्येति आनन्दे प्रयुज्यते। वर्द्धसे = समृद्धो भवसि, नायं दुर्योधनः भीमोऽयमिति युधिष्ठिरं बोधयति—आयुष्मानिति। सुयोधनक्षतजारुणीकृतसकलशरीराम्बरः = सुयोधनस्य क्षतजेन रुधिरेण अरुणीकृतानि रक्तीकृतानि सकलशरीराम्बराणि येन सः, दुर्लक्ष्यव्यक्तिः = दुर्लक्ष्या दुःखेन बोद्धुं योग्या व्यक्तिः स्वरूपं यस्य सः, अथवा दुर्लक्ष्या चासौ व्यक्तिरिति कर्मधारयसमासः।

एवमेव चेटी द्रौपदीं बोधयति—एष इति। पूरितप्रतिज्ञाभारः = पूरितः सम्पादितः प्रतिज्ञाभारः दुर्योधनोरुभङ्गरूपः येन सः, वेणीसंहारम् = कबरीबन्धनम्, अन्वेषयति = गवेषयति।

---

**भीमसेन—**हैं! क्यों? महाराज मुझे सुयोधन समझ कर क्रोधपूर्वक क्रूरता से मेरा आलिङ्गन करते हैं। ऐ महाराज अजातशत्रु, भीम और अर्जुन के पूज्य! जिस प्रकार आप कहते हैं वह बात नहीं है।

**कञ्चुकी—**( समीप जाकर, प्रसन्नता से ) महाराज! अभ्युदयकाल है। यह चिरञ्जीवी भीमसेन ही हैं। सुयोधन के घावों से निकलते हुए रक्त से रंग जाने के कारण इनका सम्पूर्ण शरीर अरुण [ लाल ] हो रहा है अतएव पहचाने नहीं जा रहे थे अब सन्देह न कीजिए।

**चेटी—**महारानी जी, लौट आइए, लौट आइए! यह स्वामी अपनी प्रतिज्ञा पूर्ण करके आप की वेणी सुधारने के लिए ही [ आपका ] अन्वेषण कर रहे हैं।

द्रौपदी—हञ्जे, किं मं अलीअवअणेहिं आसासेसि । ( हञ्जे, किं मामलीकवचनैराश्वासयसि । )

युधिष्ठिरः—जयंधर, किं कथयसि, नायमनुजद्वेषी दुर्योधनहतकः ।

भीमसेन—देव अजातशत्रो, कुतोऽद्यापि दुर्योधनहतकः । मया, हि तस्य दुरात्मनः पाण्डुकुलपरिभाविणः—

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषण्णा चतुरुदधिपयःसीमया सार्धमुर्व्या ।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद् ब्रवीपि क्षितिपतिरधुना धार्तराष्ट्रस्य शेषम् ॥२६॥

---

अलीकवचनैः = मिथ्यावचनैः, आश्वासयसि = सन्तोषयसि ।

अन्वय—शरीरम्, भूमौ, क्षिप्तम्, निजाङ्गे, इदम्, असृक्चन्दनम्, निहितम्, चतुरुदधिपयःसीमया, ऊर्व्या, सार्द्धम्, लक्ष्मीः, आर्य्ये, निषण्णा, रणाग्नौ, भृत्याः, मित्राणि, योधाः, एतत्, अखिलम्, कुरुकुलम, दग्धम्, हे क्षितिप !, धार्तराष्ट्रस्य, एकम्, नाम, ब्रवीपि, अधुना, तत् शेषम् ॥ ३९ ॥

मया पाण्डुकुलपरिभाविणः किं कृतमित्याह—भूमौ क्षिप्तमिति । शरीरमित्यत्र पाण्डुकुलपरिभाविण इत्यस्यान्वयः । एवमसृगादेरपि । चन्दनाभं = चन्दनतुल्यम् असृक् = रुधिरम्, चतुरुदधिपयःसीमया=चतुर्णाम् उदधीनां पयांसि सीमा यस्याः सा तया । ऊर्व्या = पृथिव्या, सार्द्धम् = साकम्, लक्ष्मीः, निषण्णा = स्थिता, रणाग्नौ = रणमेवाग्निरितिरूपकसमासः । तस्मिन्, नाम = सुयोधन इति, नामैवावशिष्टं सर्वाणि विनष्टानीति भावः ।

अत्र द्वितीयचरणे-सहोक्ति, तृतीये-रूपकालङ्कारः । स्रग्धरा छन्दः ॥ ३९ ॥

---

द्रौपदी—अरी ! क्यों असत्य वचनों से आशा दिला रही है ?

युधिष्ठिर—जयन्धर ! क्या कहते हो, 'यह मेरे भ्राताओं का शत्रु दुष्ट दुर्योधन नहीं है ?।

भीमसेन—महाराज अजातशत्रो ! अब आज दुर्योधन कहाँ ? मैं पाण्डवंश का तिरस्कार करने वाले उस दुष्ट के······

शरीर को पृथ्वी पर फेंक दिया हूँ । चन्दन के सदृश उसके रक्त को यह अपने शरीर में लगा लिया हूँ । उसकी राजश्री चारों समुद्र की सीमा तक की पृथ्वी के साथ आप के यहां विश्राम कर रही है । सेवक, मित्र, और सैनिक वीर यहाँ तक कि सम्पूर्ण कुरुवंश इस रण की ज्वाला में भस्म हो चुके हैं । राजन् ! धार्तराष्ट्र [ सुयोधन ] का केवल नाम, बचा हुआ है जिसे आप उच्चारण कर रहे हैं, अर्थात् वह [ दुर्योधन ] मर गया ॥ ३९ ॥

( युधिष्ठिरः स्वैरं मुक्त्वा भीममवलोकयन्नश्रूणि प्रमार्जयति । )

भीमसेनः—( पादयो पतित्वा । ) जयत्वार्यः ।

युधिष्ठिर—वत्स, बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम् । कथय कच्चिज्जीवति भवान्समं किरीटिना ।

भीमसेन—निहतसकलरिपुपक्षे त्वयि नराधिपे, जीवति भीमोऽर्जुनश्च ।

युधिष्ठिरः—( पुनर्गाढमालिङ्गय । ) तात भीम,

रिपोरास्तां तावन्निधनमिदमाख्याहि शतशः
प्रियो भ्राता सत्य त्वमसि मम योऽसौ वकरिपुः ।

भीमसेनः—आर्य, सोऽहम् ।

---

अश्रूणि = नेत्रजलानि, प्रमार्जयति = प्रोञ्छयति ।

बाष्पजलान्तरितनयनत्वात्=बाष्पजलेन अन्तरिते मध्यीभूते व्याप्ते इति यावत्, नयने यस्य तस्य भावः तस्मात् । किरीटिना अर्जुनेन, समम्—साकम्, भवान्, कच्चित्, जीवतीत्यन्वयः ।

अन्वय—रिपोः, निधनम्, तावत्, आस्ताम्, इदम्, शतशः, आख्याहि, यः, वकरिपुः मम, प्रियः, भ्राता, भीमः ( त्वम् ) असि रुधिरासारसलिले, जरासन्धस्य, उरः, सरसि, संयति, गदाघातक्रीडाललितमकरः, ( अस्ति ) ॥

रिपोरिति । रिपोः=शत्रोः, निधनम्=मरणम्, तावत् आस्ताम्=तिष्ठतु, इदम्= मया जिज्ञासितम्, शतशः = भूयोभूयः, आख्याहि = कथय, यो, वकरिपुः = वकासुरस्य शत्रुः, मम, प्रियः, भ्राता, भीमः, असौ = मदग्रे उपस्थितः, ( सः त्वम् ) असि = भवसि । भीम एतच्छ्रुत्वा श्लोकस्य मध्य एवोत्तरमाह—आर्येति । रुधिरा-

---

( युधिष्ठिर धीरे से छोड कर भीम को देखते हुए आँसू पोछते हैं )

भीमसेन—( पैरों पर गिर कर ) आर्य की जय हो ।

युधिष्ठिर—वत्स ! आँसुओं से नेत्रों के भर जाने के कारण तुम्हारे मुखचन्द्र को देख नहीं रहा हूँ । कहो क्या तुम अर्जुन के साथ साथ जीवित हो ?

भीमसेन—सभी शत्रुपक्षीय लोग समाप्त हो चुके और [ अब ] आपही सम्राट् हैं । भीम और अर्जुन भी जीवित हैं ।

युधिष्ठिर—( फिर से अच्छी तरह भेंट कर ) वत्स भीम !

शत्रु के नाश की वार्ता रहने दो ; वह तो अनेक बार सुनी गई हैं । सत्य ही तुम वकासुर के शत्रु मेरे प्रिय अनुज [ भीम ] हो ?

भीमसेन—आर्य ! वही हूँ ।

युधिष्ठिरः—

जरासन्धस्योरःसरसि रुधिरासारसलिले
तटाघातक्रीडाललितमकरः संयति भवान् ॥ ४० ॥

भीमसेनः—आर्य स एवाहम् । तन्मुञ्चतु मामार्यः क्षणमेकम् ।

युधिष्ठिर—किमपरमवशिष्टम् ।

भीमसेन—सुमहदवशिष्टम् । संयच्छामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् ।

युधिष्ठिर—गच्छतु भवान् । अनुभवतु तपस्विनी वेणीसंहारमहोत्सवम् ।

भीमसेन—( द्रौपदीमुपसृत्य । ) देवि पाञ्चालराजतनये, दिष्ट्या वर्धसे रिपुकुलक्षयेण ।

---

सारसलिले=रुधिरासारः रक्तसम्पातः स एव सलिलं यस्मिन्, तस्मिन्, जरासन्धस्य=मगधराजस्य, उरःसरसि=वक्षोरूपजलाशये, संयति=सङ्ग्रामे, तटाघातक्रीडाललितमकरः=तटेषु आघात एव क्रीडा तया ललितः हृष्टः मकरः ग्राहः तत्तुल्यः, ग्राह आनन्दार्थं तटाघातं करोतीति भावः । भवान्, अस्ति । जरासन्धघास्येव भवानस्तीति भावः । अत्र परम्परितरूपकमलङ्कारः । शिखरिणी छन्दः ॥ ४० ॥

मुञ्चतु=त्यजतु क्षणमिति-'कालाध्वनोरत्यन्तसयोगे' इति द्वितीया ।

सुमहत्=अत्यधिकम्, दुर्योधनशोणितोक्षितेन=दुर्योधनरुधिरलिप्तेन, पाणिना=करेण, दुःशासनावकृष्टम्=दुःशासनेनाकृष्टम्, केशहस्तम्=केशसमूहम्, संयच्छामि=बध्नामि । 'क्वचित् संयमयामि' इति पाठः । सत्वरम्=शीघ्रम् ।

तपस्विनी=द्रौपदी, वेणीसंहारमहोत्सवम्=वेणीसहारः कवरीबन्धनम् स एव महानुत्सवः तम्, अनुभवतु=साक्षात्करोतु ।

---

**युधिष्ठिर**—आप रणस्थली के बीच जरासन्ध के हृदय रूपी सरोवर में, जो रुधिर रूपी धारावर्षण के जल से पूर्ण है, तटाघात रूप क्रीडा में दक्ष मकर हैं ॥ ४० ॥

**भीमसेन**—आर्य! वही मैं हूँ। एक क्षण के लिए महाराज मुझे अवकाश तो दीजिए।

**युधिष्ठिर**—अब और क्या करना शेष रह गया हैं ?

**भीमसेन**—बड़ा भारी कार्य रह गया है। पहले मैं दुर्योधन के रक्त में सने हुए इस हाथ से पाञ्चाली [ द्रौपदी ] की वेणी, जिसे दुःशासन ने खींच कर खोल दिया है, बाँधलूँ।

**युधिष्ठिर**—जाइये आप। तपस्विनी अपनी वेणी सँवारें।

**भीमसेन**—( द्रौपदी के समीप जाकर ) देवि! पाञ्चालपुत्रि! शत्रुकुल के नाश से आप का कल्याण हो।

द्रौपदी—( उपसृत्य ) जेदु जेदु णाहो ( जयतु जयतु नाथः । )

( इति भयादपसर्पति ) ।

भीमसेन—राजपुत्रि ! अलमलमेवंविधं मामालोक्य त्रासेन ।

कृष्टा येनासि राज्ञां सदसि नृपशुना तेन दुःशासनेन
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।
कान्ते राज्ञः कुरूणामतिसरसमिदं मद्गदाचूर्णितोरो-
रङ्गेऽङ्गेऽसृग्निषक्तं तव परिभवजस्यानलस्योपशान्त्यै ॥ ४१ ॥

भयादिति—वीभत्सवेषदर्शनादिति भावः । अपसर्पति = अन्यत्र गच्छति ।

अन्वय—( हे ) कान्ते, राज्ञाम्, सदसि, येन, नृपशुना, तेन, दुःशासनेन, ( त्वम् ) आकृष्टा, असि, तस्य, स्त्यानानि, एतानि, पीतशेषाणि, मम, करयोः, असृञ्जि, स्पृश, मद्गदाचूर्णितोरोः, कुरूणाम्, राज्ञः, अपि, ( मम ) अङ्गे, अङ्गे, निषक्तम्, इदम्, रुधिरम्, तव, परिभवजस्य, अनलस्य, उपशान्त्यै ( भवतु ) ॥ ४१ ॥

अनेन वेषेण तव परिभवस्य प्रतीकारोऽभिव्यक्तो भवतीत्याह—कृष्टा येनेति । हे, कान्ते = कमनीयस्वरूपे !, राज्ञाम्, सदसि = सभायाम्, नृपशुना = पशुतुल्यनरेण तेन = दुराचारित्वेन प्रसिद्धेन, दुःशासनेन, आकृष्टा = बलादानीता, असि, तस्य = दुःशासनस्य, स्त्यानानि = निविडानि, एतानि, पीतशेषाणि = पीतावशिष्टानि, मम = भीमस्य, करयोः = हस्तयोः स्थितानि, असृञ्जि = रुधिराणि, स्पृश तापशान्त्यायिति भावः । मद्गदाचूर्णितोरोः = मम गदया चूर्णितौ ऊरू यस्य तस्य, कुरूणाम्, राज्ञः = दुर्योधनस्य, अपि, मम, अङ्गे अङ्गे = प्रत्यङ्गम्, निषक्तम् = व्याप्तम्, लिप्तमित्यर्थः । इदम् रुधिरम्, तव = द्रौपद्याः, परिभवजस्य, तवेत्यस्यैकदेशे परिभवेऽन्वयः । अभेदान्वयस्थल एवैकदेशान्वयस्यासाधुत्वबोधनात् । अनलस्य = कोपाग्नेः, उपशान्त्यै, = शमनाय, भवतु । मदङ्गलिप्तरुधिरं दृष्ट्वा परिभवाग्निं शमयतु कथं पलायत इति भावः । स्रग्धरा छन्दः ॥ ४१ ॥

---

द्रौपदी—( समीप जाकर ) स्वामिन्, आप की जय हो । जय हो !!

( डर कर हट जाती हैं )

भीमसेन—इस दशा में मुझे देखकर डरने की कोई आवश्यकता नहीं ।

जिस नरपशु दुश्शासन के द्वारा राजाओं की सभा में तुम आकृष्ट की गई हो, उस [पापी] के मेरे पीने से बचे हुए और हाथ में लगे हुए इस गाढे रक्त का स्पर्श करो । प्रिये ! कुरुओं के राजा का, जिनकी जाङ्घें मेरी गदा से भग्न कर डाले गए हैं, उनका रक्त जो मेरे प्रत्येक अङ्गों में लगा हुआ है, वह शत्रु के द्वारा उद्दीप्त तुम्हारे कोधाग्नि की शान्ति के लिए है ॥४१॥

बुद्धिमतिके, क्व सा भानुमती योपहसति पाण्डवदारान्। भवति यज्ञवेदिसंभवे,

द्रौपदी—आणवेदु णाहो। ( आज्ञापयतु नाथ । )

भीमसेन—स्मरति भवती यत्तन्मयोक्तम् । ( 'चञ्चद्भुज-' ( १।२१ ) इत्यादि पठति । )

द्रौपदी—णाह, ण केवलं सुमरामि, अणुहवामि अ णाधस्स पसादेण। ( नाथ, न केवलं स्मरामि, अनुभवामि च नाथस्य प्रसादेन । )

भीमसेन—( वेणीमवधूय । ) भवति, संयम्यतामिदानीं धार्तराष्ट्रकुल-कालरात्रिर्दुःशासनविलुलितेयं वेणी।

---

उपहसतीति—प्रथमाङ्कोक्तेन 'अयि याज्ञसेनि कस्मादिदानीमपी'त्यादिवाक्येन या भानुमती पाण्डवदारानुपाहसत् सा सम्प्रति क्व वर्तत इत्यर्थः। इयं कथा ३१ पृष्ठे द्रष्टव्या।

भवती=त्वं द्रौपदी, स्मरणविषयमाह—चञ्चदिति। अयं प्रथमाङ्के—एकविंश-श्लोके द्रष्टव्यः।

अनुभवामीति—प्रथमाङ्कस्थितैकविंशश्लोकप्रतिपादितभीमकर्तृकसत्केशावतंसन-मनुभवामीत्यर्थः।

धार्तराष्ट्रकुलकालरात्रि = दुर्योधनवंशविनाशकरात्रितुल्या, दुःशासनविलु-लिता=दुःशासनेनाकृष्टा, वेणी=केशरचनाविशेषः।

---

बुद्धिमतिके! वह भानुमती कहाँ है जो पाण्डव पुत्रों का उपहास करती थी। अयि याज्ञसेनि!

द्रौपदी—नाथ क्या आज्ञा है?

भीमसेन—क्या आप को स्मरण आ रहा है जो मैंने कहा था। ( चञ्चद्भुजभ्रमित-चण्डगदा०' अंक १ श्लो० सं० २१ को पढता है )

द्रौपदी—नाथ! केवल स्मरण ही नहीं कर रही हूँ किन्तु स्वामी के प्रसाद से अनुभव भी कर रही हूँ।

भीमसेन—( वेणी को सुधार कर ) श्रीमति! कौरवकुल के लिए कालरात्रि वेणी को, जो दुश्शासन के द्वारा बिखराई हुई है, अब आप बाँध लीजिए।

प्रत्याशं मुक्तकेशान्यनुदिनमधुना पार्थिवान्तःपुराणि ॥
कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां
दिष्ट्या बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः ॥४२॥

युधिष्ठिरः—देवी, एष ते मूर्द्धजानां वेणीसंहारोऽभिनन्द्यते नभस्तल-संचारिणा सिद्धजनेन ।

( ततः प्रविशतः कृष्णार्जुनौ । )

कृष्णः—( युधिष्ठिरमुपगम्य । ) विजयतां निहतसकलारातिमण्डलः सानुजो युधिष्ठिरः ।

---

स्त्रीणां वैधव्यप्रापणाद् विधवायाः केशबन्धनस्य निषिद्धत्वादिति भावः । सः, अयम् = उपस्थितः, कुपितयमसखः = क्रुद्धकालस्य सखा, नाशहेतुसाम्यादिति भावः । कुरूणाम्, धूमकेतुः = उत्पातग्रहतुल्यः 'धूमकेतुः स्मृतो वह्नावुत्पातग्रहभेदयोः' इति विश्वः । कृष्णायाः = द्रौपद्याः, केशपाशः = चूडा, बद्धः = संयतः, (अतः) प्रजानाम्, निधनम् = मरणम्, विरमतु = विरतो भवतु । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । राज्ञाम्, कुलेभ्यः = वंशेभ्यः, वा समूहेभ्यः, स्वस्ति = मङ्गलम्, भवत्विति शेषः । उत्पातग्रहस्य प्रशमादुत्पातोऽपि शान्तो भवत्विति भावः । अत्र द्वितीयचरणे, पाण्डवादिभिर्निखिला भूपतयो हता इति भङ्ग्या प्रतिपादनात्पर्य्यायोक्तमलङ्कारः । स्रग्धरा छन्दः ॥ ४२ ॥

वेणीसंहारः = केशस्य संयमनम्, अभिनन्द्यते = स्तूयते, आद्रियत इति वा । नभस्तलसञ्चारिणा = आकाशमार्गेण गन्त्रा, सिद्धजनेन = देवगन्धर्वादिना ।

ततः प्रविशत इति-युद्धभूमेः कृष्णार्जुनौ, युधिष्ठिरसविधमागताविति भावः ।

निहतसकलारातिमण्डलः = निहतं विनाशितं सकलारातिमण्डलं निखिलशत्रु-

---

है, राजरानियों के केशकलाप दिन दिन समग्र दिशाओं में विक्षिप्त हो गए हैं [ राजाओं की रमणियाँ संग्राम में पतियों के मर जाने से केश खोल कर वैधव्यावस्था का अनुभव करती हैं ] वह क्रुद्ध होने पर यमराज का मित्र, कौरवों के लिए धूमकेतु कृष्णा का केशपाश भाग्य से बँध गया । प्रजावर्ग को सत्यानाशी का अब अन्त हो जाय । और राजाओं के वंशों का कल्याण हो ॥ ४२ ॥

युधिष्ठिर—कल्याणि ! अन्तरिक्षचारी सिद्धजनों के द्वारा भी आप के केशकलापों के संहार [ सँवारना ] का अभिनन्दन किया गया ।

( इसके अनन्तर कृष्ण और अर्जुन का प्रवेश )

कृष्ण—( युधिष्ठिर के समीप जाकर ) भ्राताओं के सहित युधिष्ठिर को, जिनके सम्पूर्ण शत्रुसमूह का संहार हो चुका है, विजय हो ।

अर्जुन—जयत्वार्यः।

युधिष्ठिर—( विलोक्य। ) अये, भगवान्पुण्डरीकाक्षो वत्सश्च किरीटी। देव, अभिवादये। ( किरीटिनं प्रति ) एह्येहि वत्स, परिष्वजस्व माम्। ( अर्जुनः प्रणमति। )

युधिष्ठिर—( वासुदेवं प्रति ) कुतस्तस्य विजयादन्यद्यस्य भगवान्पुण्डरीकाक्षो नारायणः स्वयं मङ्गलान्याशास्ते।

कृतगुरुमहदादिक्षोभसंभूतमूर्ति
गुणिनमुदयनाशस्थानहेतुं प्रजानाम्।

सम्पुत्रायो येन नः, सानुजः = सावरजः, पाण्डवकुलचन्द्रः = पाण्डवकुले चन्द्र इव।

एहि = आगच्छ, परिष्वजस्व = आलिङ्गय।

प्रतीति, कथयतीति शेषः। पुण्डरीकाक्षः = पुण्डरीकं कमलं तद्वदक्षिणी यस्य सः, 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः। 'यस्येति च' इतीकारलोपः। मङ्गलानि = शुभानि, आशास्ते = इच्छति।

अन्वय—( हे ) देव !, कृतगुरुमहदादिक्षोभसम्भूतमूर्तिम्, गुणिनम्, प्रजानाम् उदयनाशस्थानहेतुम्, अजम्, अमरम्, अचिन्त्यम्, त्वाम्, चिन्तयित्वा, अपि, जगति, ( जनः ) दुःखी, न, भवति, किम्, पुनः, दृष्ट्वा, ( भविष्यति ) ॥ ४२ ॥

सकलसंसारहेतुभूतस्य नित्यानन्दपरब्रह्मणस्तव चिन्तनेनापि जनो दुःखनिर्मुक्तो भवति साक्षात्कारे तु दुःखस्य सम्भावनाऽपि नास्तीत्याह—कृतेति। ( हे ) देव = संसारचक्रेण क्रीडक ! क्रीडाद्यर्थकदिवधातो पचादित्वादच्प्रत्ययः। कृतगुरुमहदादिक्षोभसम्भूतमूर्तिम् = कृताः अनित्या ये गुरवः श्रेष्ठाः कारणत्वादिति भावः। महदाद्य. महदहङ्कारस्तन्मात्राः प्रकृतिविकृतय.। तदुक्त सांख्यतत्त्वकौमुद्याम्—

महदाद्याः प्रकृतिविकृतयः सप्त इति, प्रकृतेर्महांस्ततोऽहङ्कारः, तस्माद्गणश्च षोडशकः। इति च।

तेषां क्षोभेण परिणामेन, सम्भूता उत्पन्ना मूर्तिः जगत् यत्र तम्, अथवा कृता

अर्जुन—आर्य ! विजय।

युधिष्ठिर—(देखकर) अये कमललोचन भगवान् वासुदेव और वत्स अर्जुन ! भगवान्, वासुदेव ! साष्टाङ्गपात प्रणाम। ( अर्जुन के प्रति ) प्रिय भ्राता ! आओ आओ मुझसे मिलो। ( अर्जुन प्रणाम करते हैं )

युधिष्ठिर—( वासुदेव के प्रति ) उस व्यक्ति के लिए, जिमके मङ्गल की कामना नगाणरूप भगवान नारायण करते हैं, विजय के अतिरिक्त दूसरा कैसे हो सकता है।

हे देव, त्रीय परिणाम से उत्पन्न, गुरु = पृथिवी, जल, तेज वायु, आकाश इत्यादि और महत्तत्वादिकों के क्षुभित होने से अर्थात् सृष्टि के अनुगुण प्रवृत्ति से सम्भूत मूर्ति अर्थात्

अजममरमचिन्त्य चिन्तयित्वाऽपि न त्वां
भवति जगति दुःखी किं पुनर्देव दृष्ट्वा ॥ ४३ ॥

कल्पिता गुरुमहदादिक्षोभसम्भूतमूर्तिः, गुरूणि पञ्चभूतानि, महदादयः अन्तःकरणादितत्त्वानि तेषां क्षोभेण मेलनेन सम्भूता या मूर्तिः शरीरं सा येन तम्, काल्पनिकमेव ते शरीरम्, अतएव 'अरूपमव्ययम्' इत्यपि संगच्छते, शरीरस्य वास्तविकत्वे रूपवत्त्वाद्विनाशित्वाच्चोक्ता श्रुतिर्विरुध्येतेति भावः। गुणिनम् = सत्वरजस्तमोगुणोपाध्यवच्छिन्नम्, मायाशवलितमित्यर्थः। परब्रह्मणो मायासाहाय्येन सृष्टिकरणादिति भावः। अत एव, प्रजानाम् = जनानाम्, उदयनाशस्थानहेतुम् = उदयः उत्पत्तिः, नाशः प्रलयः, स्थानं स्थितिः जीवनमित्यर्थः। तेषां हेतुः उपादानकारणम्। तदुक्तं तैत्तिरीये--

'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति'। इति।

त्वमेव जगतामुत्पत्तिस्थितिविनाशकारणमित्यर्थः। अजम् = अजन्यम्, न तव कदाऽप्युत्पत्तिरिति भावः। तदुक्तं मुण्डके—'स बाह्याभ्यन्तरो ह्यजः'। इति

कठोपनिषदि—'न जायते म्रियते वा विपश्चित्'। इति च।

अमरम् = मृत्युरहित नित्यमित्यर्थः। तदुक्तं प्रश्नोपनिषदि—'स एषोऽजोऽमृतो भवति'। इति।

बृहदारण्यकेऽपि—'तेजोमयोऽमृतमय पुरुषः'। इति।

त्वमेव परं ब्रह्मेति कथं त्व जन्यो मृतो वा स्यादिति भावः। अचिन्त्यम् = ध्यातुमप्यशक्यम्, तव चिन्तामपि कर्तुं न शक्नुवन्ति जना इति भावः। तदुक्त कठोपनिषदि—

'न नरेणावरेण प्रोक्त एष विज्ञेयो, बहुधा चिन्त्यमानः'। इति,
'नैव वाचा न मनसा, प्राप्तु शक्यो न चक्षुषा'। इति।
'नैषा तर्केण मतिरापनेया'। इति च।

एषा आत्मविषयिणी, आपनेया प्रापणीया। त्वाम् = परब्रह्मस्वरूपम्। तदुक्तं भागवते—'कृष्णस्तु भगवान् स्वयम्'। इति।

चिन्तयित्वा = अध्यात्मयोगाधिगमेन ध्यात्वा, यद्यपि पूर्वोक्तश्रुत्या ध्यानविष-

अवतार धारण करने वाले गुणी = सत्त्व, रज, तम इत्यादि तीन प्रकार की उपाधियों से विशिष्ट ससार के चर और अचर प्राणियों के जन्म, पालन और सहार करने वाले, अजन्मा अमर और ध्यान में न आने वाले अर्थात् आकृतिहीन आप का स्मरण करके ही इस ससार में कोई दु खी नहीं रह सकता और आपका दर्शन हो जाने पर तो कहना ही क्या है ? ॥४३॥

( अर्जुनमालिङ्गय । ) वत्स, परिष्वजस्व माम् ।

कृष्णः—महाराज युधिष्ठिर,

व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो-

यो ऽपि न त्वं भवितमर्हति, तथापि अध्यात्मयोगं प्राप्यैव ध्यातुं शक्यस इति गूढाभिप्रायः । अत एवोक्तं तत्रैव—'अध्यात्मयोगाधिगमेन देवं मत्वा ।' इति ।

अपि, जगति = संसारे, इह लोके परलोके वेत्यर्थः । ( जनः ) दुःखी=शोकाकुलः, न, भवति, तदुक्तं छान्दोग्ये—

'एतं सेतुमहोरात्रे तरतो न जरा, न मृत्युर्न शोको न सुकृतं न दुष्कृतम्' । इति ।

किम्, पुनः, दृष्ट्वा = साक्षात्कृत्य, दुःखी भविष्यति न कथमपि दुःखी भविष्यतीत्यर्थः । यस्य चिन्तने, न दुःख तस्य दर्शने कथ दुःख स्यादिति भावः । तदुक्तं कठे-'यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते । इति ।

अनेन, दुःखकारणस्य जन्मनो निषेधादत्यन्तं दुःखाभावो दर्शितः । कारणाभावे कार्यस्यात्यन्तमसम्भावित्वादिति भावः। अत एवोक्तम्-'तरति शोकमात्मवित्' । इति ।

आत्मवित्, परब्रह्मणः साक्षात्कर्ता । तरणञ्च मग्नत्वविरोधीति विरुद्धयोः एकत्रावस्थानाञ्च दु.खलेशोऽपीति भाव । अनेन श्लोकेन युधिष्ठिरस्य ब्रह्मज्ञत्वं सूचितं कविना । अत्र विरोधार्थापत्ती अलङ्कारौ । मालिनी छन्दः ॥ ४२ ॥

अन्वय —अयम् , भगवान् , व्यास., अमी, वाल्मीकिरामादय., मुनयः, च, आज्ञाविधेयै., मागधमत्स्ययादवकुलैः समम् ते, राज्याभिषेकाय, स्कन्धोत्तम्भिततीर्थवारिकलशाः,माद्रीसुताधिष्ठिता. धृष्टद्युम्नमुखाः, सैन्यपतय., प्राप्ता. (अनुपदमेव) ॥

अहं त्वरिततरमायातो व्यासादयोऽपि तव राज्याभिषेकं कर्तुं त्वरितमेवागच्छन्तीति कृष्णः कथयति—व्यास इति । अयम् भगवान् = ईश्वरः, ईश्वरत्वन्तु व्यासस्य, 'व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे ।' इति वचनात् । व्यासः = पाराशर्य्यः, अमी वाल्मीकिरामादयः = वाल्मीकिः, एतन्नामको रामचरितस्य रचयिता मुनिविशेष., रामः = परशुराम., तत्प्रभृतयः, मुनय., मागधमत्स्ययादवकुलैः = मगधस्य राजेति मागधः, तद्राजेत्यन्वर्थसंज्ञाबलाद्राजन्यपि 'वृन्मगधे'त्यण् । मत्स्यस्य राजान इति मत्स्या., अत्रापि तेनैवाण् । 'तद्राजस्य बहुष्वि'ति, तस्य लुक् ।

---

( अर्जुन से मिलकर ) वत्स ! मुझसे मिलो ।

कृष्ण—महाराज युधिष्ठिर !

ये भगवान् व्यासदेव, वाल्मीकि, परशुराम प्रभृति महर्षि लोग; नकुल सहदेव के

धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः ।
प्राप्ता मागधमत्स्ययादवकुलैराज्ञाविधेयैः समं
स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते ॥ ४४ ॥

अहं पुनश्चार्वाकेण रक्षसा व्याकुलीकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरिततरमायातः ।

युधिष्ठिरः—कथं चार्वाकेण रक्षसा वयमेवं विप्रलब्धाः ।

भीमसेनः—( सरोषम् । ) क्वासौ धार्तराष्ट्रसखो राक्षसः पुण्यजनापसदो येनार्यस्य महांश्चित्तविभ्रमः कृतः ।

कृष्णः—निगृहीतः स दुरात्मा नकुलेन । तत्कथय महाराज, किम-

---

यादवा यदुवंशजाताः तेषां कुलैः, समम् = सह, 'साकं सत्रा समं सह' इत्यमरः । ते, राज्याभिषेकाय, स्कन्धोत्तम्भिततीर्थवारिकलशाः = स्कन्धेनोत्तम्भिताः, उत्थापिताः तीर्थवारिकलशा यैः ते, माद्रीसुताधिष्ठिताः = नकुलसहदेवाध्यक्षाः, धृष्टद्युम्नमुखाः = द्रुपदपुत्रप्रधानाः, सैन्यपतयश्च, अनुपदमेवेत्यस्याध्याहार । तथा च ते अनुपदमेव, प्राप्ताः, झटित्येवागच्छन्तीति भावः । ननु उपस्थिताः सन्तीत्यर्थो युक्तः, अहं पुन इत्याद्यग्रिमग्रन्थविरोधात् पूर्वं तेषामागमने त्वरिततरत्वं विरुध्येतेति । क्वचित्पुस्तकेऽयं श्लोको नास्ति परमत्रैतदर्थकगद्यमेवास्ति । शार्दूलविक्रीडितं छन्दः ॥ ४४ ॥

उपलभ्य = ज्ञात्वा, त्वरिततरम् = अतिशीघ्रम् ।

एवम् = भीमः पराजित इत्यादिरूपेण, विप्रलब्धाः = वञ्चिताः ।

धार्तराष्ट्रसखः = दुर्योधनमित्रम् , 'राजाहःसखिभ्य' इति टच् । पुण्यजनापसदः = राक्षसेषु नीचः पुण्यजनो, 'नैर्ऋतो यातुराक्षसौ' इत्यमरः ।

निगृहीतः = बद्धः, समीहितम् = अभिलषितम् ।

---

नियन्त्रण में धृष्टद्युम्न प्रभृति सेनापति, तथा आज्ञारत मागध, मत्स्य और यदुवंशियों के साथ कन्धे पर तीर्थजल से पूर्ण कलश रक्खे हुए आपके राज्याभिषेक के लिए आए हुए हैं ॥

मैं यह देख कर कि आप चार्वाक राक्षस के कपटों से व्याकुल हो रहे हैं, अर्जुन को लेकर शीघ्र ही आया हूँ ।

**युधिष्ठिर**—चार्वाक राक्षस के द्वारा किस प्रकार हम लोग प्रतारित हुए ?

**भीमसेन**—( क्रोधपूर्वक ) दुर्योधन का मित्र तथा राक्षसों में नीच वह राक्षस कहाँ है ? जिसने महाराज को व्याकुल कर दिया ।

**कृष्ण**—नकुल के द्वारा वह दुष्ट पकड़ लिया गया है । अत कहिए महाराज, इसके

स्मात्परं समीहितं संपादयामि ।

युधिष्ठिर.—न किंचिन्न ददाति भगवान्प्रसन्नः । अहं तु पुरुषसाधारणया बुद्ध्या संतुष्यामि । न खल्वतः परमभ्यर्थयितुं क्षमः । पश्यतु देवः ।

क्रोधान्धैः सकलं हतं रिपुकुलं पञ्चाक्षतास्ते वयं
पाञ्चाल्या मम दुर्नयोपजनितस्तीर्णो निकारार्णवः ।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृतो भाषसे
किं नामान्यदतः परं भगवतो याचे प्रसन्नादहम् ॥ ४५ ॥

प्रीततरश्चेद्भगवांस्तदिदमस्तु ।

---

पुरुषसाधारणया = अल्पया, अभ्यर्थयितुम् = याचितुम् ।

अन्वय.—क्रोधान्धैः, सकलम्, रिपुकुलम्, हतम्, ते, वयम्, पञ्च, अक्षताः, मम, दुर्नयोपजनितः, पाञ्चाल्या, निकारार्णवः, तीर्णः, देव, पुरुषोत्तमः, आदृतः, त्वम्, सुकृतिनम्, माम्, भाषसे, प्रसन्नाद्, भगवतः, अतः, परम्, अन्यत्, अहम्, किन्नाम, याचे ॥ ४५ ॥

क्रोधान्धैरिति । क्रोधान्धैः अस्माभिरिति शेषः । रिपुकुलम् = शत्रुवंशः, अक्षताः= कुशलाः, दुर्नयोपजनितः = नीत्या द्यूतादिरूपया, उपजनितः उत्पादितः, निकारार्णवः = समुद्रतुल्यापमानम्, तीर्णः, अस्माभिरिति भावः । सुकृतिनम् = पुण्यवन्तम्, सत्वेति शेषः । नातः परमभीष्टमस्ति यदहं याच इति भावः । शार्दूलविक्रीडितं छन्दः ॥ ४५ ॥

प्रीततरः = अतिप्रसन्नः ।

---

अनन्तर अब आप की क्या इच्छा है जो हम लोग करें ।

युधिष्ठिर—'भगवान् प्रसन्न हो कर कुछ नहीं देते' यह बात तो नहीं है। मैं पुरुष साधारण की बुद्धि से सन्तुष्ट हो रहा हूँ। इसके आगे याच्ञा करने में मैं समर्थ नहीं हूँ।

क्रोध के वश होने पर सम्पूर्ण शत्रु-वंश का संहार कर लिया और पाँचों भ्राता हम लोग सुरक्षित रह गए; पाञ्चाली [ द्रौपदी ] ने हम लोगों की दुर्नीति से उत्पन्न पराभव-रूप समुद्र को पार कर लिया तथा आप पुरुषोत्तम भगवान् आदर के साथ मुझ सुकृति व्यक्ति से भाषण कर रहे हैं। अब इससे बढ कर और दूसरी क्या वस्तु है जिसके लिए मैं भगवन् ! प्रसन्न आप से अभ्यर्थना करूँ ॥ ४५ ॥

यदि भगवान् अधिक प्रसन्न हों तो यह आशीर्वाद दें :—

अकृपणमतिः कामं जीव्याज्जनः पुरुषायुषं
भवतु भगवन्भक्तिर्द्वैतं विना पुरुषोत्तमे ।
दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवि-
त्सततसुकृती भूयाद् भूपः प्रसाधितमण्डलः ॥ ४६ ॥

कृष्ण.—एवमस्तु । ( इति निष्क्रान्ताः सर्वे । )

इति षष्ठोऽङ्कः ।

समाप्तमिदं वेणिसंहारं नाम नाटकम् ।

---

अन्वय.—अकृपणमतिः, जनः, पुरुषायुषम्, कामम्, जीव्यात्, हे भगवन्, द्वैतम्, विना, पुरुषोत्तमे, भक्तिः, भवतु, दयितभुवनः, विद्वद्बन्धुः, गुणेषु, विशेषवित्, ( भवतु ) सततसुकृती, भूपः, प्रसाधितमण्डलः, ( भवतु ) ॥ ४६ ॥

लोकस्य कल्याणार्थं युधिष्ठिरो वरमभ्यर्थयते—अकृपणेति । अकृपणमतिः = क्षुद्रबुद्धिरहितः, जनः, विशालबुद्धिरिति यावत्, पुरुषायुषम् = यावच्छास्त्रे पुरुषस्यायुः निर्धारितं तावत्, शतं वर्षाणीति तु निष्कृष्टार्थः । तदुक्तं श्रुतौ—'शतायुर्वै पुरुषः' इति । कामम् = यथेष्टम्, जीव्यात् जीवधातोराशिषि 'आशिषि लिङ्लोटौ' इति लिङ् । ( हे ) भगवन्, द्वैतम् = भेदबुद्धिम्, विना, अद्वैतरूपेणेत्यर्थः । पुरुषोत्तमे = पुरुषश्रेष्ठे त्वयि, भक्तिः = अनुरागः, जन इत्यस्य विभक्तिविपरिणामेनात्राप्यन्वयः । भवतु, संसाराद् विरक्तानामभ्यर्हितत्वात्तदर्थं पूर्वं वरं याचित्वा संसारेष्वासक्तार्थं पश्चाद् याचते—दयितेति । दयितभुवनः = प्रियसंसारः, विद्वद्बन्धुः = पण्डितबान्धवः, सन् गुणेषु विशेषवित्=विवेचकः, गुणज्ञ इति समुदितार्थः । भवतु । एवं कृते सति विद्वद्भ्यो गुणप्राप्तेर्ज्ञानोदयात्तस्यापि संसारदुःखाद्विमुक्तिः स्यादिति भावः । सततसुकृती=सततं पुण्यकर्माचारी, भूपः=नृपः, प्रसाधितमण्डलः=स्वायत्तीकृतदिङ्मण्डलः, भवतु । पृथिव्यां राजानः पुण्यवन्त एव भवन्त्विति भावः । हरिणी छन्दः ॥

इति पण्डितश्रीरामदेवझान्यायव्याकरणाचार्येण मैथिलेन
विरचितायां प्रबोधिनीव्याख्यायां षष्ठोऽङ्कः ।

---

लोग कृपण और रागों से व्यथित न हो कर पुरुष की आयुर्दाय के अनुकूल जीवित रहें । हे भगवान् ! बिना किसी सन्देह के पुरुषोत्तम भगवान् में भक्ति हो । राजा समस्त लोकों से प्रेम करते हुए, विद्वानों का पोषक बनते हुए, और गुणों की महत्ता पर विशेष ध्यान देते हुए सर्वदा समुज्ज्वल कार्यकारी हों ॥ ४६ ॥

कृष्ण—ऐसा ही हो । ( यह कह कर सब लोग चले जाते हैं )

श्रीब्रह्मार्पणमस्तु ।

ग्राम पक्खनपुर, पो० बहरियाबाद जि० गाजीपुर निवासी श्रीआदित्य नारायण पाण्डेय 'शास्त्री', 'विशारद' के द्वारा अनूदित वेणीसंहार नाटक का छठवाँ अङ्क समाप्त ।

इदं च विदग्धस्निग्धवियोगदुर्मनसा विप्रलपितं तेन कविना—
काव्यालापसुभाषितव्यसनिनस्ते राजहंसा गता-

विदग्धस्निग्धवियोगदुर्मनसा = विदग्धा. चतुराः स्निग्धाः वत्सलाः तेषां यो वियोगः, साम्प्रत गुणज्ञानामेतादृशपुरुषाणामभावादिति भावः। तेन दुर्मनाः दुःखितचेताः तेन, कविना भट्टनारायणेन, विप्रलपितम्=दुःखालापः कृतः। साम्प्रत मन्निर्मितकवितारसास्वाद कः करिष्यतीति, विप्रलापहेतुः।

अन्वयः—ते, काव्यालापसुभाषितव्यसनिनः, राजहंसाः, गताः, ताः, गोष्ठयः, क्षयम्, आगताः, सताम्, वाच, गुणलवश्लाघ्याः, न, कवीनाम्, सालङ्काररसप्रसन्नमधुराकाराः, गिरः, नाशम्, प्राप्ताः, भूमिवलये, अयन्तु, महान्, प्रबन्धः, जीयात्॥

विप्रलापमेवाह—काव्यालापेति। ते = प्रसिद्धा राजादयः, काव्यालापसुभाषितव्यसनिनः = काव्याना दोषाभावविशिष्टगुणादिविशिष्टशब्दार्थयुगलानाम्, तदुक्त काव्यलक्षण प्रकाशकृता—'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति।

तस्यायमर्थः—तत् काव्यम्, शब्दार्थौ, शब्दार्थयुगलमित्यर्थः। नचैव काव्यपदस्य प्रवृत्तिनिमित्त व्यासज्यवृत्तिः स्यादिति वाच्यम्, इष्टापत्तेः, आस्वादव्यञ्जकत्वस्योभयत्रापि तुल्यत्वात्। अत एव काव्य पठितम्, काव्यं बुद्धमित्युभयविधलोकव्यवहारः सगच्छते। यत्तु रसगङ्गाधरकृता काव्यपदप्रवृत्तिनिमित्तस्य व्यासज्यवृत्तित्वे एकस्मिन् द्वित्वावच्छिन्नप्रतियोगिताकभेदस्य सत्त्वेन एको न द्वौ इति व्यवहारवत्, श्लोकवाक्यं न काव्यमिति व्यवहारापत्तिः। यदि च शब्दार्थप्रत्येकपर्याप्तत्वमेव काव्यपदप्रवृत्तिनिमित्तस्य तदैकस्मिन् पद्ये, काव्यद्वयव्यवहारापत्तिः, तस्मात् वेदत्वादिवत् रमणीयार्थप्रतिपादकः शब्दः काव्यम्। इति शब्दमात्रनिष्ठत्वमेव काव्यलक्षणस्योक्तम्, तत्तु तत्रैव मम प्रकाशटीकायाम् आस्वादव्यञ्जकत्वस्योभयत्राविशेषादित्यादिना अनुभवव्यवहारविरुद्धमिदमिति प्रतिपादितमस्ति, वेदपदप्रवृत्तिनिमित्तस्यापि शब्दार्थोभयवृत्तित्वमेव प्रतिपादित 'तदधीते तद्वेद' इति पाणिनिसूत्रे भगवता पतञ्जलिना, यदपि दर्पणकृता—'वाक्यं रसात्मकं काव्यम्'। इति काव्यलक्षणमुक्तं तदपि, आग्रहमूलकमेव रसाभासाद्यात्मककाव्येऽव्याप्तेः। इष्टापत्तिस्तु न सम्भवति कविसम्प्रदायभङ्गप्रसङ्गात्। अत एव महाकविवर्णितकपिबालचरितान्यपि काव्यानि। त्वन्मते तत्र रसाभावेन काव्यत्वं न स्यात्। यथाकथञ्चित् परम्परया रसस्पर्शस्य काव्यत्वप्रयोजकत्वे, गौश्चरति, मृगो धावति, इत्यादेरपि काव्यत्वमापद्येतेति। दोषविशिष्टेऽतिव्याप्तिवारणाय—अदोषाविति लक्षणे निवेशः। नचादोषत्वं यत्किञ्चिद्दोषाभावः, दोषसामान्याभावो वा। नाद्यः। यत्किञ्चिद्दोषाभावस्य सर्वत्र

रता गोष्ठ्यः क्षयमागता गुणलवश्लाघ्या न वाचः सताम् ।
सालङ्काररसप्रसन्नमधुराकाराः कवीनां गिरः

सुलभतयाप्यावर्तकत्वापत्तेः। नान्त्यः। 'तथाभूतां दृष्ट्वे'त्यादेरपि काव्यत्वानापत्तेः, तत्रापि न्यूनपदत्वदोषस्य सत्त्वात्। इष्टापत्तिस्तु न सम्भवति प्रकाशकृतैव तृतीयोल्लासे 'तथाभूतामि'त्यत्र काकुसहकृतार्थध्वनित्वस्योक्तत्वादिति वाच्यम्, अदोषेत्यस्य रसोद्बोधविरोधि—दोषाभावे तात्पर्यात् तथा च यत्र यस्य दोषस्य रसोद्बोधविरोधित्वं तद्दोषवत्त्वे न काव्यत्व यत्र च न तादृग्दोषस्तत्र काव्यत्वमिति सहृदया एव प्रमाणम्। निर्गुणेऽतिव्याप्तिनिरासाय सगुणाविति। माधुर्यादिगुणवन्तौ काव्यमित्यर्थः। यद्यपि गुणानां रसमात्रनिष्ठत्वेन शब्दार्थयोर्गुणवत्त्वमसम्भवि, तथापि स्वव्यञ्जकत्वसम्बन्धेन तत्र तेषां सत्त्वमिति न काऽप्यनुपपत्ति.। निरलङ्कारेऽतिव्याप्तिनिरासाय—अनलङ्कृतीति। अस्यायमर्थः—सर्वत्र सालङ्कारावेव काव्यम्, कुत्रापि स्फुटालङ्काररहितावपि, 'अलवणा यवागूरि'तिवद् नञोऽल्पार्थकत्वात्। अत्राल्पत्वमस्फुटत्वमेव। अन्त्यस्य, निर्वक्तुमशक्यत्वात्—तथाच—नीरसेऽपि अस्फुटालङ्कारसत्त्वे काव्यत्वप्रसक्तावपि न कश्चिद्दोष.। प्रदीपकारास्तु—रसादिरलङ्कारश्च द्वयमेव चमत्कारहेतुः, एवञ्च यदि यत्र न रसादिः, न वा स्फुटालङ्कारः तत्र चमत्कारहेतोरभावान्न काव्यत्वमित्याहुः। वयन्तु मन्यामहे—तत्रास्फुटालङ्कार एव चमत्कारहेतुः, अलङ्कारमात्रस्यैव चमत्कारहेतुत्वात्। तत्र स्फुटत्वास्फुटत्वयोरकिञ्चित्करत्वादिति। अत्र युक्तायुक्तत्वे सहृदयाः स्वयमेव विभावयन्त्विति संक्षेपः। प्रकृतमनुसरामः।

एतादृशानां काव्यानां य आलापाः सम्भाषणानि तेषु यत्सुभाषितम्, तत्र यद् व्यसनम् आसक्तिः तदस्त्यस्येति 'अत इनिठनौ' इतीन्प्रत्ययः। ते, राजहंसा.= श्रेष्ठनृपाः, गताः क्षयमित्यस्यात्राप्यन्वय.। विनष्टा इत्यर्थः। ताः, गोष्ठ्यः विवेचकानामित्यादि.। क्षयम्=विनाशम्, आगताः। सत्कवितानां क्षीरवद् गुणग्राहका न केऽपि सन्तीति भाव.। सताम्=सज्जनानाम्, वाच', गुणलवश्लाघ्याः= गुणस्य लवेन कणेनापि श्लाघ्या. प्रशसनीयाः न, भवन्ति, कवीनाम्=उत्तमप्रबन्धकर्तृणाम्, सालङ्काररसप्रसन्नमधुराकाराः=सालङ्कारा. अलङ्कारसहिताः, अलङ्कारत्वञ्च—रसादिभिन्नव्यङ्ग्यभिन्नत्वे सति शब्दार्थान्यतरनिष्ठा या विषयित्वसम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तदवच्छेदकत्वम्। भवति च अनुप्रासादिविशिष्टशब्दज्ञानात्, उपमादिविशिष्टार्थज्ञानाच्च चमत्कारोदय इति विषयित्वसम्बन्धावच्छिन्ना चमत्कृतिजनकतावच्छेदकता तादृशे शब्दे अर्थे च तदवच्छेदकत्वमनुप्रासादौ, उपमादौ चेति लक्षणसमन्वय.। व्यङ्ग्ये रसादिभिन्नत्वनिवेशान्न रसवदलङ्कारासंग्रहः। तादृशव्यङ्ग्यभिन्नत्वनिवेशान्न व्यङ्ग्योपमासंग्रहः। रस-

प्राप्ता नाशमयं तु भूमिवलये जीयात्प्रबन्धो महान् ॥ ४७ ॥

प्रसन्नाः रसान्विता अत एव मधुरा मधुस्वरूपाः, गिरः = उक्तयः, नाशम् , प्राप्ताः, गुणग्राहकव्यक्त्यभावादिति भाव.। अत., भूमिवलये = भूमण्डले, अयम् = मदीयः, महान् = रसालङ्कारादिमयुनः । तुशब्दः पूर्वव्यवच्छेदकः, प्रबन्धः = कविता, जीयात् = उत्कृष्टेन वर्तताम् । अनेन प्रबन्धेन मम कीर्तिलाभः प्रसन्नता च भवत्विति कवेराशय.। तदुक्तमग्निपुराणे व्यासदेवेन—

निर्दोष गुणवत्काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कवि. कुर्वन् कीर्तिं प्रीतिञ्च विन्दति ॥ इति ।

एतादृशं मदीयमपि काव्यमिति गूढाभिप्रायः । शार्दूलविक्रीडितं छन्द ॥ ४७ ॥

वसरावाङ्गसम्भूतं नरसिंहस्य जन्मदम् ।
अनहेर कुलपति नौमि त प्रपितामहम् ॥ १ ॥
विद्वद्वृन्दविलासिता भगवती सराजते सर्वदा
यत्रास्ते च विशालभाललसिता लक्ष्मी. स्वय सुस्थिरा ।
पुण्ये 'तलपटसा' ख्यपत्तनवरे श्रीद्वारवङ्गस्थिते
सानन्दं मृदुचेतसा निवसता व्याख्या मया पूरिता ॥ २ ॥

॥ इति प्रबोधिनीव्याख्या समाप्ता ॥

समाप्तश्चायं ग्रन्थः

# श्लोकानुक्रमणिका